श्री हरिनाम-ग्रन्थमालाया द्वितीयं पुष्पम्

श्रीगङ्गेशोपाध्याय-प्रणीत-तत्त्वचिन्तामणौ

# सामान्यनिरुक्तिप्रकरणम्

श्रीमदुदासीनपरमहंस-परिव्राजकाचार्यवर्यस्वामिश्रीजयरामदासभगवत्पाद-
शिष्य-सिन्धुमहानदमध्यप्रतिष्ठितश्रीसाधुबेलातीर्थसिंहासनासीन-
पदवाक्यप्रमाणपारावारीणस्वामिश्रीहरिनामदासोदासीन-
कृतचन्द्रकला-कलाविलास-टीकाद्वयोपबृंहित-महा-
महोपाध्यायश्रीगदाधरभट्टाचार्य-विरचित-
गादाधरीसनाथीकृत-श्रीरघुनाथ-
शिरोमणि-प्रणीत-दीधिति-
संवलितम् ।



तदिदम्

काशिकहिन्दुविश्वविद्यालयीयन्यायप्रधानाध्यापकैर्विश्वविश्रुतनैयायिकैः
सर्वतन्त्रस्वतन्त्रैः पण्डितप्रवरैः श्रीयुतवामाचरणभट्टाचार्यै-
स्तर्कतीर्थतर्कालङ्कारैर्न्यायाचार्यैः संशोधितम् ।



प्रथमावृत्तिः १००० | विजया दशमी सम्वत् २०१० | मूल्यम् ६)

Shree 108 Swami Harnamdas jee Udasin.
Mahant of Shree Sadhbella Tirth. Sukkur India



Shree Sadhbella Tirth from Water Western Side

पद-वाक्य-प्रमाण-पारावारीण उदासीनवर्य
श्री १०८ स्वामी हरिनामदासजी महाराज

# प्रकाशकीयं यत्किञ्चित्

हेरम्बमवलम्बेऽहं यस्मिन् पातालकेलिषु ।
दन्तेनोदस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

समुदीरणीयमिदमासीन्मदीयगुरुचरणानां गगनाङ्गणविप्रकीर्णकीर्त्तिनिकराणां कर्कशतर्काङ्कुशकुण्ठितवादिव्रातकरटिघटानामनवद्यहृद्यविद्याप्रद्योतविद्योतितादूष्यवैदुष्याणां श्रीमत्परमहंसपरिव्राजकाचार्य्याणां श्री १०८ स्वामिहरिनामदासमहाशयानामुदासीनमहात्मप्रवराणां तथापि तदीयचरणारविन्दमकरन्दबिन्दुसन्दोहोदितप्रज्ञाप्रकाशलेशासादितप्रागल्भ्या वयं भारमिममुद्वोढुमुत्सहामहे । "न ग्राह्यभेदमवधूर्य धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः । नो चेदनित्यमिदमीदृशमेव विश्वं, तथ्यं तथागतमतस्य तु कोऽवकाश" इत्यादिदुरुद्धरतर्कशतकोटिकठोरप्रहारविदीर्णनास्तिकशिलोच्चयचयैः श्रीमद्भिरुदयनाचार्यैर्वेदान्तानां महीयान् महिमा समुपबृंहितो येषु, अदृश्यम्, अग्राह्यम्, अलक्षणम्, अचिन्त्यम्, अव्यपदेश्यं, स्वयंप्रकाशं, सच्चिदानन्दस्वरूपम्, एकम्, अखण्डम्, अद्वितीयं, सर्वप्रकाशकं, स्वयंसिद्धं, कूटस्थनित्यं, महाज्योतिः कार्यकारणातीतं नित्यं प्रचाकाशीति, तस्यापि सर्वसाक्षिणः सर्वाधिष्ठानस्य चरमपरमतत्त्वस्य सर्वलोकैकमहेश्वरस्य सर्वानुभवैकवेद्यस्याप्युपरिनास्तिकापातितकुतर्ककलङ्कमलप्रक्षालनपरिणद्धपरिकराणां परिष्कारप्रकारप्रकरप्रकटकान्तारैकपथिकानां नैयायिककण्ठीरवाणां हेत्वाभाससटाच्छटापटलस्य विस्फूर्जमानस्यानवरतं विस्फुरतः संचयप्रपञ्चचणस्य, नव्यन्यायोद्दण्डाखण्डपाण्डित्यप्रकाण्डताण्डवमण्डितैः श्रीमद्गदाधरभट्टाचार्य्यैर्विरचितस्य सामान्यनिरुक्तिमहाग्रन्थस्य काष्ठागतप्रतिभाप्रभावनिकषोपलस्य व्याख्यायुगली ग्रन्थग्रन्थीन् विभिन्दाना शास्त्रार्थघनघटानल्पाटोपैककौशला तैरेव मदीयगुरुचरणैः सिन्धुसक्खरश्रीसाधुवेलातीर्थे कुर्वाणैः चिरात्पूर्वं निर्माणकर्मतामानीता मया सौभाग्यवशतः साम्प्रतं प्रकाश्यते ।

यदत्र नैयायिकधुरन्धरैः काशी-हिन्दु-विश्वविद्यालय - संस्कृतमहाविद्यालयन्यायप्रधानाध्यापकैः पण्डितप्रवरश्रीवामाचरणभट्टाचार्य्यैः संशोधितमिति, तेभ्यो भूयो भूयः साधुवादाः संप्रदीयन्ते ।

पुनश्च स्वामिप्रवराणां गुरुवराणां हस्तलिखिता सत्प्रतिपक्षगादाधर्याः चन्द्रकला तस्याश्च कलाविलासनामिका टीका मदन्तिके संस्थापिता वर्तते । आशास्यते तावद् विश्वनाथकृपया शीघ्रमेव मुद्रापयिष्यते मयेति निवेदयति—

भावत्कः
स्वामिगणेशदासः
श्रीसाधुवेलाश्रमाधीशः

ओंनमः परमदेवतायै

# भूमिका

अद्यापि तावदपगतहर्षे भारतवर्षे निरन्तरमनादरणीयसंस्कृतशास्त्रे विशेषतो न्यायशास्त्रे नवीनन्यायशास्त्रे वा विगतश्रद्धानामाधुनिकलोकानामन्तिके सुप्रकाशीकृतं नव्यन्यायसामान्यनिरुक्तिग्रन्थस्य महामहोपाध्यायपण्डितप्रवरश्रीमद्गदाधरभट्टाचार्यो-क्ताभिनवव्याख्यायाः सविस्तरं चन्द्रकलाकलाविलासनामकं टीकाद्वयं सर्वसाधारणगम्यमतिसरलं स्वामिप्रवरातुलनगुणगणभूषणहरिनामदासविरचितं-विलोकयता मया सानन्दं सर्वथा वक्तुं शक्यते—

धन्यैव सा विपुलभारतवर्षभूमि,
यत्र प्रभूतयशसां महतां जनिश्रीः
यत्रैव सर्वविदितामरकीर्त्तयस्ते
संलेभिरे स्वजननं हरिनामदासाः ।

इति तत्र लभमानजन्मानो वयमवश्यमेव धन्या इत्यपि वक्तुं शक्यते । तस्मादस्माकं भाग्यवशादनन्तदुर्गतिं सहमानाऽपि सेयं भारतभूमिरधुनाऽपि स्वपुरातनरक्षीभूतमर्यादां न जहातीति तां सादरं सभक्तिकञ्च प्रणम्य पुनः पुनस्तावदेवं गीयते, विजयतां विजयतामस्माकं भारतवर्ष इति ॥

एतेषां महात्मनां स्वामिप्रवराणां परिचयस्त्वग्रे प्रदास्यते । साम्प्रतं नव्यन्याय-शास्त्रस्याध्ययनप्रयोजननिदानप्रतिपादनावसर इदमपि किञ्चिद्वक्तव्यं नाप्रसक्तं मन्यते—ये न्यायामृतरसास्वादविधुरान्तराः किञ्चिदाघ्रातशास्त्रान्तरगन्धाः केवल-मांग्लोपासनाबलावलेपा नवनीतिनवनीतमपि निस्सारं वर्तमानानुपयोगं च संगि-रन्ते; तेऽवश्यं प्रतिबोधनीया इति । विदितमस्तु तेषां यद्वाराणसेयाः पुरातन-पण्डितवरेण्याः वैयाकरणाः शास्त्रान्तराभिज्ञाश्चान्यदेशीयाः समधिकविद्याविनय-सम्पन्नाः प्राधान्यं दधाना विद्वांसः समधिगतनव्यन्यायशास्त्रतत्त्वनिवहा एव पुरा विश्वविसारिकीर्तयः समासन् । इदानीमपि शास्त्रान्तरकान्तारक्लेशानलसन्ताप-प्रशमनसाधनमनुसन्दधाना नव्यन्यायैकप्रशान्तशीतलजलधिमेघानुधावन्तो दृश्यन्ते । न ह्यनुदितेऽनल्पकल्पनामरीचिमालिनि भगवति नव्यन्याये कदाचिदपि कस्यचिन्मनस्विमनुजमानससरसि वैदुष्यकमलिनी विहसति ।

यद्यपि चिन्तामणिकृत्पूर्ववर्तिनस्तावदनेके महान्त एव विपश्चित उदयनाचार्यप्रभृतयोऽनधीतनव्यन्यायशास्त्रा विलक्षणानपूर्वग्रन्थनिचयान् विरचितवन्तो विराजन्ते स्म, येषामतुलनीयग्रन्थावगतिसुषमाऽद्यापि मेघावृतेव विलोक्यते। तथापि तेषां सर्वेषामेव गौतमीयन्यायशास्त्राभिज्ञतैव तादृशानुपमशास्त्रनिर्माणप्रयोजिका। इयं नूतननीतितत्त्वसन्ततिकौमुदी न केवलं शास्त्रान्तराज्ञानदरतिमिर मात्रमतिघोरमपहरति, अपि तु समस्तजनताभिमतमुक्तिकुमुदिनीविकासोपयोगितामप्यावहतीति सन्तस्तत्र प्रवर्तन्ते। महामुनिगौतमतन्त्रस्य प्रथमसूत्रेण न्यायपदार्थतत्त्वज्ञानानामपवर्गप्रयोजकताया निर्णीततया तादृशन्यायपदार्थप्रतिपादकस्य नव्यन्यायशास्त्रस्यापि मोक्षक्षमता अवश्यं सम्भवति, ? तर्कविद्यामात्रस्यान्वीक्षिकीशब्दवाच्यतायाः कोषकारादिसम्मतत्वेऽपि वेदप्रामाण्यमूलिकाया एव तर्कविद्याया मुक्तिप्रयुक्तिकत्वस्य सर्वसम्मतत्वाद्, आन्वीक्षिकीत्वमात्रस्य मोक्षोपयोगिताप्रयोजकत्वानभ्युपगमाच्च।

रामायणेऽयोध्याकाण्डे जावालिमुनिना प्रथमतो नास्तिकतर्कविद्यामधिकृत्यैव श्रीरामचन्द्रैः सह शास्त्रार्थो विहितस्तदनन्तरं श्रीरामचन्द्रैर्नास्तिकविद्याया एव निन्दा कृता न तु समस्तपूज्याया भगवत्या गौतमीयतर्कविद्यायाः, न वा तैः गौतमीयतर्कविद्यामधीयानाः कथमप्यभिशप्ताः। सुतरामधीत्य गौतमीं विद्यामित्यादिवचनममूलमेव, तस्य समूलत्वेऽपि सर्वथाऽनिश्चितवक्तृकतयाऽनाप्तोक्ततया चाप्रमाणत्वादस्माभिस्तद्वचनमश्रद्धेयमेव। न्यायशब्दार्थस्तु परार्थानुमानं प्रतिज्ञादिपञ्चवाक्यसमुदायो वा तत्प्रतिपादकं शास्त्रं न्यायशास्त्रम् तस्य सर्वशास्त्रकारणीभूतसर्वज्ञपरमेश्वरोत्पन्नत्वमपि सुबालोपनिषदि द्वितीयखण्डे न्यायो मीमांसा धर्मशास्त्राणीत्यादिना प्रमाणीकृतमिति दृश्यते। भाष्यकृता वात्स्यायनेनापि प्रदीपः सर्वविद्यानामित्यादिना न्यायशास्त्रस्यैव सर्वशास्त्रतः प्राधान्यं निरूपितम्। तस्मादनुमानप्रमाणरूपयुक्त्या मननमेवान्वीक्षा तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रमिति व्याख्या तस्य तर्कविद्यात्वेऽपि मननस्य मोक्षोपयोगितया अध्यात्मशास्त्रत्वात् सप्रयोजनकत्वं निर्विवादम्। अत एवाद्वैतवादिभिः सर्वप्रधानकविभिः श्रीहर्षैरपि नैषधचरितकाव्ये दशमसर्गे "उद्देशपर्वण्यथलक्षणेऽपि द्विधोदितैः षोडशभिः पदार्थैः" रित्यादि श्लोकतो मुक्तिं प्रार्थयतां न्यायविद्याया एवातुलनीयसहायता वर्णितेति न्यायशास्त्रस्य नवीनन्यायशास्त्रस्य च प्रेक्षावत् प्रवृत्त्यङ्गत्वं निराबाधं निश्चीयते। तदिदं नव्यन्यायशास्त्रं गौतमीयन्यायशास्त्रप्रतिपाद्यपदार्थप्रतिपादकतया सर्वशास्त्रोपकारकतया च सर्वजनसमादृतं श्रीमद्भिर्महामहोपाध्यायैः पण्डितप्रवरैः गंगेशोपाध्यायैरेव विरचितमेतैस्तु नव्यन्यायशास्त्रात्मकचिन्तामणिनामकग्रन्थं निर्माय भारतवर्षस्य महानेवोप-

कारः सम्पादितः । इमे तावत् मिथिलाप्रान्तीयमंगलौनीनामकग्रामे गृहीतजन्मानः समासन् । त्रयोदशशताब्धामेवैभिश्चिन्तामणिनामकग्रन्थरचनया नव्यनैयायिकसम्प्रदायप्रवर्त्तनं कृतमिति तत्पौत्रयज्ञपत्युपाध्यायस्य चतुर्दशशताब्दीपर्यन्तस्थायित्वं विज्ञायास्माभिरवधारितम् । एतेषां गौड़देशीयत्वप्रवादो मया तर्कमाथुरीविवृतिभूमिकायां समुपन्यस्तो नेह वितन्यते । निरुक्तचिन्तामणिग्रन्थस्य पक्षधरमिश्रकृतालोकनामिका टीका वासुदेवसार्वभौमकृता परीक्षानामिका च टीका, एवमन्यान्यमहानैयायिकविरचितापि पूर्वं बहुविधा टीका समासीत् । सा सा टीका तु भारतवर्षे समुदिते तदानीन्तनसर्वप्रधानपण्डितप्रवररघुनाथशिरोमणिविरचिते चिन्तामणिदीधितिनामकटीकाग्रन्थे प्रबलप्रचण्डझंझावाते प्रवहति सति सह मेघैः सौदामिनीव पक्षधरमिश्रादिभिः सहैव विलुप्तेदानीं दृश्यते ।

तैरेव दीधिकृद्भिः

"न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ॥
विदुषां निवहैरिहैकमत्या यददुष्टं निरटङ्कि यच्च दुष्टं ।
मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव ॥"

इति वक्तुं पार्यते । दीधिकारा भारतविदितनवद्वीप गंगातटनिकटे गृहीतजन्मानः । तत्रैव मात्रा साकं विराजन्ते स्म । एष तु प्रवादः समूल इव लक्ष्यते यदेकदा बाल्यावस्थो रघुनाथो मात्राज्ञप्तः—"रघुनाथ ! पण्डितप्रवरवासुदेवसार्वभौमस्य पाठशालातः पाकार्थमग्निः समानीयतामिति ।" मातुराज्ञां शिरसि कृत्वा रिक्तपाणिरेव रघुनाथबालोऽग्निमानेतुं तत्र गतः तत्रत्यांश्छात्रानग्निमयाचीद्—"दीयतां स्तोकं भो भ्रातरोऽग्निः ।" ते छात्रा रिक्तहस्तं तमालोक्य च कथितवन्तः सहसा-गृह्यतां गृह्यतां भो ! अग्निरेषः ।" तच्छ्रुत्वा सद्यःप्रतिभशिरोमणिर्झटिति धूलिभरितकरपुटं कृत्वा वक्ति स्म" दीयतां मे हस्ते हुताशनः ।" महानैयायिको वासुदेवसार्वभौमो बालकं तमप्रतिमप्रतिभं निश्चित्य तत एव दिवसात् समाध्यापयितुमारेभे ।

सार्वभौमादधीत्य न्यायं सर्वं स बालो मैथिलं कञ्चन महाभटमप्रतिपक्षं पक्षधरमिश्रं शुश्राव । निपुणतरं न्यायमधिगन्तुं मिश्रान्मिथिलां ययौ । तत्राकर्णितमनेन सरस्वत्याः प्रधानः पुत्र एष मिश्र इति । तद्गृहे गत्वावलोकितम्—प्रथमे द्वारेऽष्टौ प्रकाण्डपण्डिता, द्वितीये पञ्च, तृतीये त्रयो नियुक्ता आसन् । तान-

विजित्य पक्षधरमिश्रदर्शनमेवासम्भवीति। शिरोमणिस्तान् सर्वान् विजित्य पक्षधर-मुपेयिवान्। तं नवागतं बालमालोक्य विलक्षमेकाक्षं पक्षधरः पप्रच्छ—

"आखण्डलः सहस्राक्षो, विरूपाक्षस्त्रिलोचनः।
अन्ये द्विलोचनाः सर्वे, को भवानेकलोचनः॥

त्वरितमुत्तरितं कल्पकशिरोमणिना—

आखण्डलः सहस्राक्षः, शङ्करस्तु त्रिलोचनः।
यूयं विलोचनाः सर्वे, वयं न्यायैकलोचनाः॥

इत्याद्युक्तिप्रत्युक्तिभ्यामेकाक्षत्वं निरूपितं भवति, प्रसिद्धमपि तत्। पुनर्मिश्रैरभिहितम्—

वक्षोजपानकृत्काण ! संशये जाग्रति स्फुटम्।
सामान्यलक्षणा कस्मादकस्मादपलप्यते॥

अस्योत्तरं सामान्यलक्षणाग्रन्थे "अत्र वदन्ति" कल्पे मिश्रमतदूषणावसरे सम्यक्प्रदत्तम्।

पुनरपि दीधितिकृद्भिरभिहितम्—

कुशद्वीपनलद्वीपनवद्वीपनिवासिनः।
तर्कसिद्धान्तसिद्धान्तशिरोमणिमनीषिणः॥ इति।

तदाकर्ण्य विज्ञाय च कुशाग्रतरं तं मिश्राः सम्यगध्यापितवन्तः। ततः शिरोमणिमहाभागाः मिथिलायाः स्वदेशं नवद्वीपं प्रति प्रस्थिताः। तदा सरस्वती-प्रधानतनयपक्षधरमिश्रमहोदयानामगणितान्तेवासिनस्तैः सार्द्धं नवद्वीपमागताः।

सम्वत्सरानन्तरं श्रीमन्तो मिश्रपादा अपि नवद्वीपे निवासार्थं समुपस्थितास्तेषा देहावसानमपि तत्रैव जाह्नव्यां जातमिति प्रसिद्धमत एव नवद्वीपनिवासिनां प्राचीन विदुषामिदानीं प्रस्तरमूर्तिः श्रीमतां मिश्रमहोदयानां संस्थापिता भविष्यतीति राजकीयै-रधुना प्रस्तावितमिति श्रूयते। परमत्र विवादः। परमत्राविवादो—यत् श्रीमतोः पक्षधरमिश्रसार्वभौमयोर्मतं तयोर्जीवतोः शिरोमणिभिः स्वव्याख्यायां व्यवस्थाप्य भृशं दूषितमिति। दीधिकृद्भिरेव स्वमतं विस्तार्य नव्यन्याये नवयुगः प्रवर्तितः।

श्रीमन्मथुरानाथस्य तात श्रीरामतर्कालङ्कारमहोदया उदयनाचार्यकृतात्मतत्त्व-विवेकस्य रघुनाथशिरोमणिप्रणीतां टीकां व्याकर्तुं प्रवृत्त आरम्भे एव "हृदि कृत्वा

सार्वभौमस्य सद्वचः" इति लिखितवन्तः। तेन सार्वभौमादयः प्राञ्चो दीधितिटीकारचितवन्तः पण्डितप्रवरा अनुमेया इति वक्तुं शक्यतेऽस्माभिः। श्रीमन्तो रघुनाथशिरोमणिमहाशयाः स्मृतिशास्त्रविषयेऽपि "मलिम्लुचविवेकनामकमेकं ग्रन्थं निर्मितवन्तः। तद्दर्शनेन दीधिकृतां व्यापकं पाण्डित्यं व्यज्यते। एतेषां दीधितिनिर्माणसमयस्तु पक्षधरमिश्राणां पञ्चदशशताब्दीस्थायितया तस्याः शताब्द्या अन्तिमो भागः। मिश्रैःस्वके ग्रन्थे लिखितम्—

वाणैर्वेदयुतैः सशम्भुनयनैः संख्यां गते हायने।
श्रीमद्गौड़महीभुजो गुरुदिने मार्गे च पक्षे सिते॥
षष्ठ्यांताममरावतीमधिवसन् यो भूमिदेवालयः।
श्रीमत्पक्षधरः सुपुस्तकमिदं शुद्धं व्यलेखि द्रुतम्॥

इत्यनेन लक्ष्मणसम्वत्सरम् ३४५ इति मिश्रसमयो ज्ञायते।

रघुनाथशिरोमणेर्दीधिति टीकायाः प्रसिद्धटीकाकृतस्तु पूर्वं रामकृष्णभट्टाचार्याः ततो मथुरानाथतर्कवागीशः श्रीरामचन्द्रतर्कालङ्कारो मधुसूदनवाचस्पतिः भवानन्दतर्कवागीश इत्यादयः। ततो रघुनाथशिरोमणितो द्विशतवर्षानन्तरं जगदीशतर्कालंकारोऽपि दीधितिव्याख्याकारः। परन्तु गदाधरभट्टाचार्यस्य श्रीमतः पण्डितप्रवरस्य गादाधरीति नामविख्याता टीकैव विशेषतः सर्वैरादरणीया दृश्यते। दाक्षिणात्ये तु केवला गादाधरीटीकैव अधुनापि प्रचलितास्ति। गदाधरभट्टाचार्या एव नव्यन्यायस्य चरमावतारा इत्येवं दाक्षिणात्यैरभिधीयते। दाक्षिणात्यातिरिक्तदेशे जागदीशी टीकापि प्रचलिता वर्तते।

गदाधरवंशधरगणकानां गृहे लिखितमस्ति यत् १००८ इतिसंख्याके वंगाब्दे तेषां जन्म, एवं ११९० इति संख्याके वंगाब्दे तेषां देहावसानं जातं, तेन तेषां टीकालेखसमयः सार्द्धद्विशतवर्षसमय इत्यस्माभिर्वक्तुं शक्यते। एते गदाधरभट्टाचार्यमहोदया अपि तदानीन्तनसर्वप्रधानपण्डिता एव आसन्। तेषां सामान्यनिरुक्तिप्रभृतिचिन्तामणिदीधितिव्याख्यामवलोक्यानुमातुं शक्यते यत् तदानीं तादृशविशिष्टपाण्डित्यं कस्यापि नासीदिति। नव्यन्यायस्य प्राधान्यं तैरेव व्यवस्थापितं, येषां टीकामधीत्याद्यापि भारतवर्षे विख्यातकीर्तय एव पण्डिता माननीया विराजन्ते इमे तु विशेषदीर्घजीविनः, सप्तदशशताब्द्याः पश्चादपि किञ्चिद् दिनमेतेषां स्थितिरासीत्। एतेभ्यः कृष्णनगराधिपतिर्महाराजराघवः १६६१ इतीशवीये प्रभूतां भूमिं दत्तवान्। एकस्मिन् दिवसे भट्टाचार्याणां तिन्तिलीपत्रसंग्रहं दृष्ट्वा राज्ञा राघवेण पृष्टम्। अनेन पत्रभारेण भवतां किं भविष्यति? तच्छ्रुत्वा भट्टाचार्यैरभिहितम्। अनेन

पत्रभारमात्रेणैवास्माकं भोजनं सम्पद्यते, सुतरामेतेषां संग्रहोऽस्माभिः क्रियते । तदनन्तरमेव श्रुतवता तेन राज्ञा यथा भट्टाचार्याणां भोजनचिन्ता कथमपि न भवेदिति तथैव तेन कृतभूमिदानेन विहितमिति प्रवादोऽपि वर्त्तते ।

भट्टाचार्यैस्तु अन्यान्यटीकाकारापेक्षया नवीनप्रतिभया सामान्यनिरुक्तिदीधितिटीकाया व्याख्या विरचिता । चिन्तामणिग्रन्थान्तरेऽपि एतादृशी व्याख्या कैरपि नावलोकिता । ग्रन्थेऽस्मिन् अव्यापकीभूतविषयिताशून्यत्वविशिष्टद्वयाघटितत्वकल्पयोर्भट्टाचार्यविरचितयोर्नूतनत्वमिदानीमपि सर्वजनप्रसिद्धम् । तादृशबुद्धिवैभवविरचितगादाधरीतिविख्यातनामकटीकायाः साम्प्रतमपि टीकाद्वयमस्माभिर्वीक्ष्यते । निरुक्तटीकाद्वयसङ्कलनकर्त्ता श्रीमदुदासीनप्रवरः श्रीमान् पण्डितप्रवरः पण्डितप्रियो हरिनामदासः सिन्धुप्रान्ते सक्खरनगरे लब्धजन्मेति सुप्रतिविदितम् ।

विदितवेदितव्यै रिदमस्माकमन्तिकेऽस्य जन्मरहस्यं वर्णितं यत् तदतीव दैवयोगसम्पन्नमित्यस्माभिः संक्षेपेण समुपन्यस्यते । यद्यपि निरुक्तटीकाद्वयकर्तुः स्वामिप्रवरस्य पित्रोः पुरा पुत्रसन्ततिविरहजं दुःखं सदैवासीत्, तथापि तौ धर्मपरायणौ सिन्धुनदमध्ये विराजमाने प्रसिद्धे श्रीसाधुवेलातीर्थे धर्मव्याख्यानमाकर्णयितुं प्रतिदिनमेव नियमतो गच्छतः स्म । एकस्मिन् दिवसे तत्रैव तीर्थेऽस्य पितरौ भागवतींप्रतिमां प्रणम्य मनसि कृतसंकल्पौ तावदेवं सभक्ति कथितवन्तौ, भगवन् ! यद्यावयोः पुत्रसन्ततिरुत्पद्यते तर्ह्यावाभ्यामवश्यमेवैकः पुत्रः श्रीसाधुवेलातीर्थस्वामिने सम्प्रदास्यत इति । अहो भाग्यम्, अतः परं भगवतो महतानुग्रहेणैवानयोश्चत्वारः पुत्राः समुत्पन्नाः । येषां द्वितीयपुत्रोऽयं टीकाद्वयकारः स्वामिप्रवरो हरिनामदासः । संसारदशायां नारायणदासनाम्ना प्रसिद्धः । योऽयमुपनयनसंस्कारानन्तरमेव तदानीन्तनश्रीसाधुवेलातीर्थस्वामिने जयरामदासमहोदयाय पितृभ्यां सम्प्रदत्तस्तदीयशिष्यतामावहन्, विराजते स्म । तदनन्तरं दीक्षितमिमं मेधाविनं प्रतिभासम्पन्नञ्चात्रलोक्यास्याध्ययनार्थे कृतयत्नेन तेन जयरामदासस्वामिना प्रसिद्धविद्वान् श्रीमान् पण्डितप्रवरो गुरुप्रसादमहाराजो नियुक्तः । स एव पण्डितप्रवरस्तावदिमं टीकाद्वयकारमध्यापयामास । लब्धविद्यश्चायम्—

जयरामे महाराजे स्वामिनि त्रिदिवं गते ।
तस्य सिंहासनारूढो दर्शनज्ञानवान् स्वयम् ॥
व्योमव्योमनभोनृनेत्रविमिते सम्वत्सरे वैक्रमे ,
चिन्तानन्तसुधां निपीयमहतीमानन्दसंवर्द्धनः ।
स्वामिश्रीहरिनामदासविबुधः कान्तः स धीरप्रियो ,
न्यायक्षीरमहोदधीदममृतं मथ्नाति टीकाद्वयम् ॥

हन्तेदानीमस्माकं दुःखकारणं यदसौ स्वामिप्रवरो जगतीतले नास्ति। किन्तु स्वर्गमलंकृतवानिति। अनेन श्रीमता हरिनामदासस्वामिप्रवरेण सह प्रयागतीर्थे कुम्भावसरे मम प्रथमपरिचयो जातः ततो वाराणस्यामस्य पाण्डित्यमतुलनीयं न वेति टीकाद्वयमवलोकयतामेव विदुषां वेदितव्यं भविष्यतीति। तत्र नाधिकमस्माकं वक्तव्यमस्ति। १९३७ संख्यके वैक्रमसम्वत्सरे पौषकृष्णदशम्यां टीकाद्वयकर्ता सिन्धुप्रान्तीयसक्खरनगरे लब्धजनिः। २००६ संख्यके तु संम्वत्सरे मंगलवासरे पौषकृष्णाष्टम्यां ब्रह्मतामवापेति विज्ञायते।

सामान्यनिरुक्तिग्रन्थस्य संक्षिप्तं विवरणं तावन्निम्नलिखितमुपन्यस्यते। प्रथमतो मूलकृता हेतुवदाभासन्ते ये ते हेत्वाभासा इतिव्युत्पत्तिमवलम्ब्य हेत्वाभासशब्दस्य दुष्टहेत्वर्थकतां स्वीकृत्य के हेत्वाभासा इति शिष्यजिज्ञासानिवर्तनतात्पर्यकं साध्यज्ञाने प्रमात्वनिश्चयरूपतत्त्वनिर्णयप्रयोजकतया परकीयहेतौ दुष्टत्वोद्भावनेन स्वस्यापि विजयो भवतीति विजयप्रयोजकतया च हेत्वाभासनिरूपणं प्रतिज्ञातम्। ततो दोषलक्षणं विना दुष्टलक्षणस्यासम्भवाद् दोषाणां लक्षणत्रयमिदमभिहितम्। तदनन्तरं दशाविशेषे इत्यादिग्रन्थेन जरन्नैयायिकमतसिद्धं हेतौ सत्प्रतिपक्षितत्वादिव्यवहारविषयत्वं कथंचिन्निरुच्य ते च सव्यभिचारेत्यादिग्रन्थेन हेत्वाभासानां विभागोऽभिहितः।

दीधितिकृता च हेत्वाभासनिरूपणप्रयोजनप्रदर्शनपूर्वकं दोषलक्षणाभिधानकारणप्रदर्शनपूर्वकञ्च लक्षणघटकप्रत्येकपदार्थव्याख्यानमाख्याय प्रथमलक्षणप्रतिपदव्यावृत्तीरभिधाय प्रथमलक्षणपरित्यागबीजमभिहितम्। ततो द्वितीयलक्षणे मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणायाभिनवप्रतिभया विशिष्टान्तराऽघटितत्वं लक्षणघटकयद्रूपविशेषणमभिहितम्। तदनन्तरं समुदितलक्षणे दोषमभिधाय स्वयमेवात्र वदन्तीत्यादिना हेत्वाभाससामान्यलक्षणं निरूपितम्। ततो हेत्वाभासलक्षणानां पक्षधरमिश्रादिसम्मतव्याख्यानं बहु दूषितम्। तदनन्तरं दशाविशेषे, इत्यादि मूलग्रन्थो नूतनरीत्या व्याख्यातः।

गदाधरभट्टाचार्येण तु प्रतिपदव्यावृत्तिप्रदर्शनपूर्वकं दीधितिं व्याख्याय दीधितिकारव्याख्यातलक्षणे दोषं प्रदर्श्य स्वयमव्यापकीभूतविषयिताशून्यत्वं लक्षणघटकनिश्चये विशिष्टद्वयाघटितत्वञ्च तादृशे यद्रूपे निवेशितम्। तादृशनिवेशमालम्ब्यैव गोलोकीनामिका पत्रिका प्रसिद्धा वर्तते। मिथिलायामपि विशिष्टद्वयाघटितत्वनिवेशस्य प्राधान्यं निश्चित्य प्रायशो मैथिलमहानैयायिकास्तन्निवेशविशेष एव महान्तं परिश्रमं कृतवन्त इति श्रूयते। निरुक्तनिवेशद्वये भट्टाचार्य-

स्याभिनवः पन्था जगति प्रशंसनीयोऽपि जगदीशतर्कालंकारेणाभिप्रायान्तरमभ्युपेत्य तादृशनिवेशस्तावदुपेक्षित एव । ततो विशिष्टान्तराऽघटितत्वकल्पेऽपूर्वं न च चतुष्टयप्रदर्शनपूर्वकं स्वसजातीयविशिष्टान्तराऽघटितत्वमभ्युपगच्छतां मतं दूषितम् । तदनन्तरमत्रवदन्तिकल्पपरित्यागबीजं प्रदर्श्य परे त्वित्यादिना नवीन-रीत्याऽत्रवदन्तिकल्पोक्तं दूषणं निराकृतम् । ततो यादृशपक्षसाध्यकेत्यादि-लक्षणस्य साधुव्याख्यानमाख्याय दशाविशेष इत्यादिमूलदीधितिर्मतान्तरापेक्षया सर्वथा समीचीनेति समर्थितम् । हरिनामदासस्वामिप्रवरेण प्रतिपदव्यावृत्ति प्रदर्श्य सरला गादाधरीव्याख्यारूपा चन्द्रकलानामिका सर्वसाधारणबोधगम्यैका टीका विरचिता, कलाविलासनामकटीकाप्रतिपाद्यविषयाः पूर्वतः प्रचलिता अपि नवीन-सरलभाषया नवकल्पनया प्रकाशिताः । सा द्वितीयाऽपि टीका सर्वेषां समादरणीया भविष्यतीत्यत्र नास्ति सन्देह इति वक्तुं शक्यते । विशेषतः कलाविलासनामिकायां टीकायां परीक्षार्थिपरमजिज्ञास्यविषयाणां सुनिपुणतया निरूपणमस्ति । निरुक्तया टीकया सर्वेषां विशेषतः परीक्षार्थिनां विद्यार्थिनां महानुपकारो भविष्यति । चन्द्रकलाऽपि चन्द्रकलेव न्यायाज्ञानान्धकारं समूलं नाशयतीति मन्ये । दृश्यते तावच्चन्द्रकलाटीका सर्वेषामेवोपकाराय प्रभवतीति । न केवलं सम्भाव्यते निश्चितमेवैतद् यन्निरुक्तटीकाद्वयमेव अतिदुरूहस्यापि सामान्यनिरुक्तिग्रन्थस्यास्य बोधगम्यतां सम्पादयिष्यतीत्यास्तां विस्तरः ॥

माता मे चरणप्रान्ते, यस्य नत्वान्तिमे दिने ।<br>
मुक्तिं प्राप सतापाय नमस्तस्मै यशस्विने ॥<br>
धर्मशास्त्रमहाशस्त्रैरधर्माज्ञाननाशिने ।<br>
मात्रा सह तया पित्र शशिभूषणशर्मणे ॥<br>
ततः श्रीगुरवे तस्मै भारतख्यातकीर्त्तये ।<br>
वामाचरणधीराय नमो न्यायैकचक्षुषे ॥

बाणाब्धिनागविधुमानमिते शकाब्दे,<br>
कृष्णाश्विनप्रतिपदीन्द्रगुरोर्दिने च ।<br>
वाराणसीं प्रतिवसन्नयभूमिकां स,<br>
धीरस्तनोतिविमलामधिसाधुटीकाम् ॥

श्रीवामाचरणभट्टाचार्यः

आरोप्याद्‌तवक्षसि क्षितितले तीर्थाधिराजं परं,

दुर्गाशम्भुगणेशमित्रहरिभिः सेव्यैः सदा सेवितम् ।

यं सिन्धुर्मधुरैर्मुदा नवनवैः पूरैः समासिञ्चति,

तस्मा एष समर्प्यते गतिभिदे श्रीसाधुबेलाङ्किने ।

स्वामिना

# चिन्तामणिः

अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते । तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् ॥१॥ यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम् ॥२॥ ज्ञायमानं सदनुमितिप्रतिबन्धकं यत् तत्त्वं वा हेत्वाभासत्वम् ॥३॥ दशाविशेषे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वं तथापि ज्ञायमानस्याभासस्यात्र लक्षणं यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यतेऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते । ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ।

इतिश्रीगङ्गेशोपाध्यायविरचितायां तत्त्वचिन्तामणौ सामान्यनिरुक्तिप्रकरणम् ।

श्रीगुरुवनखण्डिने नमः ।

अथानुमानगादाधर्याम्—

चन्द्रकला-कलाविलासाख्यटीकाद्वयसमलङ्कृतम् ।

# सामान्यनिरुक्तिप्रकरणम् ।

❀ चिन्तामणिः ❀

**अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।**

❀ दीधितिः ❀

**एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति।**

❀ चन्द्रकला ❀

यः सौरगौरवधरो वरदिव्यमूर्तिः श्रीमन्मुनिः समजनीव नवीनकान्तिः ।
श्रीचन्द्रमिन्दुसदृशं तमहं महान्तं वन्दे सुमङ्गलकरं हरिनामदासः ॥१॥

हेत्वाभासीयसामान्य—निरुक्तेः कठिनत्वतः ।
गादाधरीतिविख्यात—विवृतेरतिविस्तृताम् ॥२॥
कुर्वेऽहं सरलां टीकां नाम्ना चन्द्रकलामिमाम् ।
साधुवेलाश्रमे सिन्धो—रुदासीनः सतां मुदे ॥३॥

मूले अथेत्यादि । आनन्तर्यमथशब्दार्थः । आनन्तर्यञ्च ध्वंसकालीनत्वमवयवग्रन्थध्वंसकालीनत्वमिति यावत् । अन्वयश्चास्य 'निरूप्यन्ते' इत्यत्र निपूर्वकरूपधात्वर्थे ज्ञानानुकूलव्यापारे । मयेत्यध्याहार्यम् । अध्याहृततृतीयार्थः कृतिजन्यत्वम्, तदेकदेशीभूतायां कृतौ समवायावच्छिन्नाधेयतासम्बन्धेन मदर्थस्यान्वयः । कृतिजन्यत्वस्यापि तादृशधात्वर्थे ज्ञानानुकूलव्यापारेऽन्वयः । तत्त्वनिर्णयविजयप्रयोजकत्वादित्यत्र पञ्चम्यर्थो ज्ञानजन्यजिज्ञासाधीनत्वम्, तत्र-ज्ञाने प्रकृत्यर्थस्य तादृशप्रयोजकत्वस्य स्वप्रकारकत्वसम्बन्धेनान्वयः । निरुक्तपञ्चम्यर्थस्यापि निपूर्वकरूपधात्वर्थे ज्ञानानुकूलव्यापारेऽन्वयः । कर्मविहिताख्यातार्थः विषयत्वं, तस्य च प्रथमान्तपदोपस्थाप्ये हेतुवदाभासन्त इतिव्युत्पत्त्या हेत्वाभासशब्द-

❀ चन्द्रकला ❀

प्रतिपाद्ये दुष्टहेतुस्वरूपे स्वरूपसम्बन्धेनान्वयः। तथाच अवयवग्रन्थध्वंसकालीनो यो मत्समवेतकृतिजन्यस्तत्त्वनिर्णयविजयप्रयोजकत्वप्रकारकज्ञानजन्यजिज्ञासाधीनः ज्ञानानुकूलव्यापारस्तद्विषयतावन्तो दुष्टहेतव इत्यन्वयबोधः पर्यवसितः।

यद्यपि ज्ञानेच्छादेरेव सविषयकतया ज्ञानानुकूलव्यापारस्य शब्दात्मकत्वात्तद्विषयत्वाऽप्रसिद्ध्या कर्मविहिताख्यातार्थस्य विषयतात्मकत्वाभिधानमयुक्तमित्युच्यते, तथापि याचितमण्डनन्यायेन ज्ञानविषयत्वमादायैव व्यापारस्य सविषयकत्वमिति प्राचीनसिद्धान्तमभिप्रेत्यैव व्यापारविषयताया हेत्वाभासशब्दार्थेऽन्वय इति मन्तव्यमधिकमन्यत्रानुसन्धेयम्।

नच शिष्टाचारपरिप्राप्तमंगलस्य ग्रन्थादावदर्शनेन ग्रन्थकर्तुरशिष्टत्वापत्तिरिति साम्प्रतम् ? शंखध्वनेरिवाथशब्दोच्चारणस्यापि मांगलिकत्वात् "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन मांगलिकावुभावि"तिस्मरणात्।

केचित्तु प्रत्यक्षग्रन्थादौ ग्रन्थकृता कृतस्य मंगलस्य दर्शनात्, तेनैव समस्तचिन्तामणिग्रन्थपरिसमाप्तिसम्भवे अन्तरा मंगलान्तराभावेऽपि न क्षतिरित्याहुः।

दीधितावेतावतेत्यादि। एतावत्पदोत्तरं तृतीयार्थः प्रबन्धपदार्थावयवग्रन्थान्वयी अभेदः, प्रबन्धपदोत्तरं तृतीयार्थोऽप्यभेदः, तस्य निरूप्येत्यत्र निपूर्वकरूपधात्वर्थीभूते ज्ञानानुकूलव्यापारेऽन्वयः। सपरिकरम् = व्याप्तिपक्षधर्मतादिविशिष्टम्। अभेदो हेतुपदार्थान्वयी द्वितीयार्थः। हेतुपदोत्तरं द्वितीयार्थस्तु विषयत्वं विषयित्वं वा, तस्यच निरूप्येत्यत्रैव ज्ञानानुकूलव्यापाररूपधात्वर्थैकदेशे ज्ञानेऽन्वयः। निरूप्येत्यत्र ल्यबर्थो ध्वंसकालीनत्वं, अन्वयश्चास्य तदाभासनिरूपणशब्दार्थे दुष्टहेतुविषयकज्ञानानुकूलव्यापारे।

तत्प्रसंगात = सपरिकरहेतुनिरूपितप्रसंगसंगतेः। तत्त्वेति = तत्त्वनिर्णयविजयरूपं यत् सपरिकरहेतुप्रयोज्यकार्यम्, तत्कारित्वाच्चेत्यर्थः। उभयत्र पञ्चम्यर्थस्तदाभासनिरूपणशब्दार्थान्वयि ज्ञानजन्यजिज्ञासाधीनत्वम्। तदाभासनिरूपणशब्दोत्तरं द्वितीयार्थो विषयत्वं विषयित्वं वा, तस्य चाव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारात्मकप्रतिपूर्वकज्ञाधात्वर्थप्रतिज्ञैकदेशे बोधेऽन्वयः। निरुक्तप्रतिज्ञायाश्चाख्यातार्थकृतावनुकूलत्वसम्बन्धेनान्वयः।

तथाच एतावदभिन्नप्रबन्धाभिन्नं यत्सपरिकरहेतुविषयकज्ञानानुकूलव्यापारात्मकं निरूपणं तद्ध्वंसकालीनो यः सद्धेतुनिरूपितप्रसंगसङ्गतिज्ञानजन्यजिज्ञासाधीनस्तत्त्वनिर्णयविजयरूपतत्कार्यकारित्वसंगतिज्ञानजन्यजिज्ञासाधीनो दुष्टहेतुविषयकज्ञानानुकूलव्यापारस्तद्विषयकाव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारानुकूलकृतिमान् मूलकार इत्यन्वयबोध इति भावः।

❀ गादाधरी ❀

हेत्वाभासनिरूपणे प्रसङ्गस्याऽपि सङ्गतित्वं सम्भवति, व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति—

❀ चन्द्रकला ❀

हेत्वाभासेति । दुष्टहेतुविषयकज्ञानानुकूलव्यापार इत्यर्थः । प्रयोजकत्वं सप्तम्यर्थः, अन्वयश्चास्य संगतित्वमित्यत्र संगतिपदार्थे । अतएव यथा घटस्य घटत्वं सम्भवतीति न भवति तथा प्रसंगस्यापि संगतित्वं सम्भवतीति न स्यादित्याक्षेपोऽपि निरस्तः, हेत्वाभासनिरूपणप्रयोजकसंगतित्वस्य प्रसंगनिष्ठतयाभिहितत्वादिति ध्येयम् ।

प्रसंगस्यापीति । हेत्वाभासनिष्ठस्येत्यादिः । एतेन तन्निष्ठायाः संगतेस्तन्निरूपणप्रयोजकत्वमितिनियमात् हेत्वाभासनिष्ठाया अपि प्रसंगसंगतेर्हेत्वाभासनिरूपणप्रयोजकत्वं निराबाधमिति सूचितम् । अपिना प्रसंगभिन्नस्याप्येककार्यकारित्वस्य हेत्वाभासनिरूपणप्रयोजकसंगतित्वमस्त्येवेति प्रकाशीकृतम् । सम्भवति = तिष्ठति, वर्त्तत इति यावत् । अत्रैव धात्वर्थवृत्तितायां प्रसंगपदोत्तरषष्ठ्यर्थनिरूपितत्वस्यान्वयो बोध्यः ।

नच कारकविभक्त्यर्थस्यैव धात्वर्थेऽन्वयस्य सर्वसम्मततया तद्भिन्नस्य षष्ठ्यर्थस्य कथं धात्वर्थान्वयः सम्भवतीति वाच्यम्, "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजै"रित्यादौ कारकविभक्त्यर्थभिन्नस्यापि षष्ठ्यर्थस्य धात्वर्थीभूतप्रतिक्रियायामन्वयस्य दृष्टतया अत्रापि षष्ठ्यर्थस्य धात्वर्थेऽन्वयसम्भवात्, षष्ठ्यर्थसप्तम्यर्थयोर्निरुक्तस्थले भेदाभावेन षष्ठ्यर्थस्यापि सप्तम्यर्थतया तस्य कारकविभक्त्यर्थत्वस्याभ्युपगमेपि क्षत्यभावाच्चेति ध्येयम् ।

❀ कलाविलासः ❀

देवः श्रीवनखण्डी सः, सर्वलोकप्रपूजितः ।
सर्वानर्थनिवृत्त्यर्थं, तपोमूर्त्तिः प्रणम्यते ॥ १ ॥
उक्तग्रन्थस्य संगृह्य क्रोड़पत्रं प्रयत्नतः ।
कलाविलासनाम्न्येषा मया टीका विधीयते ॥ २ ॥

प्रसंगस्यापीति । ननु प्रसंगः स्मृतिविषयतावच्छेदकद्वेषविषयतानवच्छेदकधर्मः, सच प्रकृते हेत्वाभासपदार्थत्वस्वरूपः, तथा च यदि "हेत्वाभासपदार्थाः के" इत्याकारिका शिष्यजिज्ञासा, तदा अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयीभूतायां हेत्वाभासपदार्थत्वरूपप्रसंगसंगतौ संगतिसामान्यलक्षणसमन्वयसम्भवेऽपि सद्धेतुप्रयोज्यकार्यप्रयोजकत्वरूपैककार्यकारित्वसंगतौ तादृशलक्षणाऽसत्त्वं वारयितुमशक्यं स्यात्, तादृशजिज्ञासाजनकज्ञानविषयतायास्तत्राऽसत्त्वात् ।

❀ गादाधरी ❀

**व्याप्तिपक्षधर्मताविरोधितद्विरहवतो दुष्टहेतोः स्मरणाद्, अतस्तदप्रदर्शक-मूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्यापि तन्निरूपणप्रयोजकत्वमाह** एतावतेति ।

❀ चन्द्रकला ❀

ननु स्मृतिविषयतावच्छेदकत्वे सति द्वेषविषयतानवच्छेदको धर्मः प्रसंगः, सच प्रकृते हेत्वाभासपदार्थत्वस्वरूपस्तत्र द्वेषविषयतानवच्छेदकत्वसत्त्वेऽपि स्मृतिविषयतावच्छेदकत्वं कथं समर्थनीयमित्याशंकायामाह व्याप्तीति । व्याप्ति-पक्षधर्मतोभयविशिष्टो यो हेतुः (सद्धेतुः), तद्विषयकज्ञानानुकूलव्यापारे सतीत्यर्थः । सति सप्तम्याः पञ्चम्यन्तस्मरणपदार्थान्वय्युत्तरकालीनत्वमर्थः । व्याप्तीति । व्याप्ति-पक्षधर्मत्वज्ञानप्रतिबन्धकतावच्छेदकप्रकारताश्रयीभूतो यस्तद्विरहो व्याप्तिपक्षधर्म-त्वाभावस्तद्वत इत्यर्थः । सद्धेतावपि व्याप्तिपक्षधर्मत्वघटत्वोभयाभावस्य कालान्त-रावच्छेदेन व्याप्तिपक्षधर्मत्वसामान्याभावस्य च सत्त्वेन व्याप्तिपक्षधर्मत्वाभाव-वत्त्वावच्छेदेन दुष्टहेतुत्वासम्भवात् प्रतिबन्धकतावच्छेदकीभूतप्रकारताश्रयार्थकं विरोधिपदम् । नच विरोधिपदस्य निरुक्तार्थकत्वे तद्विरहवत इत्यभिधानमयुक्तं, विरोधिपदेनैव व्याप्तिपक्षधर्मत्वाभावस्य लाभसम्भवादिति वाच्यम् , व्याप्तिपक्ष-धर्मत्वाभावत्वेन घटाभावज्ञानीयघटाभावनिष्ठप्रकारताया अपि तादृशप्रतिबन्धकता-वच्छेदकतया तदाश्रयघटाभाववति सद्धेतौ, दुष्टहेतुत्वाऽसम्भवात् , सम्बन्धित्वा-वच्छिन्नस्यैव सम्बन्धिनः स्मरणस्य सम्बन्धज्ञानाधीनत्वादिति तु विभावनीयम् ।

दुष्टहेतोरिति । सम्बन्धिनः इत्यादिः । स्मरणादिति । स्मरणोदयसम्भवा-दित्यर्थः । तथाच स्ववृत्तिव्याप्तिपक्षधर्मत्वविरोधिव्याप्तिपक्षधर्मत्वाभाववत्त्व-सम्बन्धज्ञानात् तत्सम्बन्धिनो दुष्टहेतोः स्मरणोत्पादस्यावश्यकतया स्मृति-विषयतावच्छेदकत्वं हेत्वाभासपदार्थत्वरूपप्रसंगसंगताव्याहतमितिभावः ।

अत इति = दुष्टहेतौ प्रसंगसंगतिसत्त्वादित्यर्थः । तदप्रदर्शनेन = प्रसंगत्य-प्रदर्शनेन । मूलस्य = मूलग्रन्थस्य । न्यूनतामिति । प्रसंगसंगत्यकथनेन अनुमितं यत् प्रसंगसंगतिविषयकमज्ञानं तद्रूपपुरुषोच्चरितत्वमित्यर्थः । परिजिहीर्षुः = परिहातुमिच्छुः, निराकर्तुमिच्छुरितियावत् । तन्निरूपणेति हेत्वाभासनिरूपणार्थकम् । आहेति । दीधितिकार इतिशेषः ।

❀ कलाविलासः ❀

यदि च सद्धेतुप्रयोज्यकार्यप्रयोजकं किमित्याकारिका शिष्यजिज्ञासा तदेककार्य-कारित्वे संगतिसामान्यलक्षणसमन्वयसम्भवेऽपि पूर्वोक्तप्रसंगसंगतौ तादृशलक्षण-समन्वयो न सम्भवति, हेत्वाभासपदार्थत्वे सद्धेतुप्रयोज्यकार्यप्रयोजकत्वजिज्ञासा-जनकज्ञानविषयताया विरहात् ।

❀ गादाधरी ❀

**परिकरो व्याप्तिपक्षधर्मते ।**

**निरूप्येत्यन्तमुक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय । तत्प्रसङ्गादिति । सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः । तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः । अन्वयश्चास्य निरूपणमित्यनेन ।**

❀ चन्द्रकला ❀

सपरिकरशब्दघटकपरिकरपदार्थं व्याचष्टे व्याप्तीति । तथाच व्याप्तिपक्षधर्मताभ्यां सह वर्त्तमानः सपरिकर इतिव्युपत्त्या सपरिकरशब्दस्य व्याप्तिपक्षधर्मतोभयविशिष्टहेतुरेवार्थ इतिभावः । हेत्वाभासनिरूपणात् पूर्वं यदि व्याप्तिपक्षधर्मताविशिष्टस्य हेतोर्निरूपणं स्यात् तदा तादृशव्याप्तिपक्षधर्मत्वाभाववत एव दुष्टहेतुत्वमिति तात्पर्यादायातमित्याशयेन दीधितिकृदुक्तं निरूप्यान्तं सार्थकयति निरूप्य इति । स्मृतत्वस्य = स्मृतिविषयत्वस्य । लाभायेति । तथाच स्मृतिविषयतावच्छेदकद्वेषविषयतानवच्छेदकहेत्वाभासपदार्थत्वरूपप्रसंगसंगतिलाभो निर्विवाद इति भावः ।

यन्निरूपणानन्तरं यो निरूपितो भवति तन्निरूपितसंगतिमान् स भवतीतिव्याप्तिबलात् सद्धेतुनिरूपणानन्तरं निरूपणीये हेत्वाभासेऽपि सद्धेतुनिरूपितसंगतिमत्त्वस्यावश्यकतया तत्प्रसंगादिति दीधितिव्याख्यानमाह **सपरिकरेति** । सद्धेतुनिरूपितहेत्वाभासपदार्थत्वरूपप्रसंगसंगतेरित्यर्थः । तथाच सद्धेतुनिरूपितसंगतिमत्त्वं हेत्वाभासस्य दीधितिकृतैव प्रदर्शितमिति भावः । तादृशनिरूपणान्वयिनः प्रयोज्यत्वमात्रस्य पञ्चम्यर्थत्वे प्रसंगस्य संगतित्वं न सम्भवति, अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्यैव संगतित्वादत आह **तज्ज्ञानेति** । तादृशसंगतिज्ञानजन्या या 'हेत्वाभासपदार्थाः के' इत्याकारिका जिज्ञासा तदधीनत्वमित्यर्थः । **निरूपणमित्येति** । तदाभासेत्यादिः ।

❀ कलाविलासः ❀

इति चेदत्र केचित् । शिष्याणामनेकत्वात् कस्यचित् "हेत्वाभासपदार्थाः के" इत्याकारिका जिज्ञासा, कस्यचिच्च "सद्धेतुप्रयोज्यकार्यप्रयोजकं किमित्याकारिका" जिज्ञासा सम्भवतीति तत्तज्जिज्ञासामादायैव तत्र तत्र संगतिसामान्यलक्षणसमन्वयः निराबाध इति वदन्ति ।

**वस्तुतस्तु** अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धस्यैव संगतित्वेन "हेत्वाभासाः के" इत्याकारकैकविधजिज्ञासामादायैवोभयत्र संगतिलक्षणसमन्वयो भवत्येव । स्वविरोधिव्याप्तिपक्षधर्मत्वाभाववत्त्वसम्बन्धज्ञानात् सद्धेतुप्रयोज्यकार्यप्रयोजकत्वरूपसम्बन्धज्ञानाच्च दुष्टहेतोः स्मरणोदयसम्भवेन तादृशस्मरणप्रयोजकतत्तत्सम्बन्धस्य दुष्टहेतुनिष्ठतया तस्य संगतित्वस्यावश्यकत्वात्, एतन्मते उपोद्घातादिपञ्चकभिन्नसंगतेरेव प्रसंगत्वं बोध्यमिति ध्येयम् ।

**परिकरो व्याप्तिपक्षधर्मते इति** । अथात्र द्विवचनेन व्याप्तिपक्षधर्मतोभयवतः

❀ गादाधरी ❀

तत्त्वनिर्णयविजयप्रयोजकत्वादिति मूलं यद्यपि हेत्वाभासनिष्ठतत्त्वनिर्णयादि-जनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजन-प्रदर्शनपरम्,

❀ चन्द्रकला ❀

हेत्वाभासविषयकज्ञानानुकूलव्यापारात्मकं हि हेत्वाभासनिरूपणं सफलमेव, निरुक्तनिरूपणाधीनहेत्वाभासज्ञानं विना तत्त्वनिर्णयविजयोत्पादानुपपत्तेः सुतरां यथोक्तनिरूपणघटकहेत्वाभासज्ञानप्रयोज्यायाः शिष्यप्रवृत्तेरपि सफलत्वमवश्यं वक्तव्यम्, तथाच हेत्वाभासा मया निरूप्यन्ते, तत्त्वनिर्णयविजयजनकज्ञानविषयत्वादित्यादिरीत्या तत्त्वनिर्णयविजयप्रयोजकत्वादितिमूलस्य सार्थक्योपपादने हेत्वाभासनिरूपणप्रयोजकसंगत्यप्रदर्शनेन मूलस्य न्यूनतापरिहारः न स्यादतस्तादृश-मूलस्य संगतिप्रदर्शनपरत्वमेव दीधितिकृता व्याख्यातमित्याह तत्त्वनिर्णयेति। इति मूलम्=इति मूलग्रन्थः। हेत्वाभासेति। हेत्वाभासज्ञानस्य तत्त्वनिर्णयादि-जनकतया हेत्वाभासनिष्ठं तादृशजनकज्ञानविषयत्वं निर्विवादमिति भावः।

❀ कलाविकासः ❀

एव सद्धेतुत्वेनाभिमततया उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वात् इत्यादि-हेतौ व्याप्तेः पक्षधर्मतायाश्च सत्त्वेन तस्याऽनिरूपणप्रसंगः स्यात्, विरोधिव्याप्ति-पक्षधर्मत्वाभावविरहिणो निरुक्तपृथिवीत्वहेतोः स्मरणोदयासम्भवात्।

अतएव जगदीशतर्कालंकारैः परिकरः सहकारी, सच व्याप्तिपक्षधर्मत्वादि-रित्यत्रादिपदं प्रक्षिप्याबाधितत्वासत्प्रतिपक्षितत्वयोः परिग्रहं प्रदर्शयद्भिस्तादृश-पृथिवीत्वहेतोरपि बाधितत्वेन दुष्टत्वं निरूपितमिति चेन्न, भट्टाचार्यमते निरू-प्यतावच्छेदकधर्मसामानाधिकरण्येन संगतिमत्त्वस्यैव निरूपणप्रयोजकतया निरुक्त-पृथिवीत्वहेतौ संगत्यसत्त्वेऽपि क्षत्यभावात्, निरूप्यतावच्छेदकह्रदपक्षकवह्निसाध्यक-दुष्टान्तरधूमत्ववति संगतिसत्त्वस्यावश्यकतया तत एवान्येषामपि दुष्टानां निरूपण-सम्भवात्।

जगदीशमते तु निरूप्यतावच्छेदकावच्छेदेन संगतित्वस्य निरूपणप्रयोजकतया सर्वत्र दुष्टहेतौ संगतिमत्त्वस्यावश्यकत्वेन व्याप्तिपक्षधर्मत्वादिरित्यत्रादिपदोपादानं, तेनासंकीर्णबाधिततादृशपृथिवीत्वहेतावपि संगतिलाभसंभव इति तु परमार्थः।

दीधितौ सपरिकरं हेतुमिति। नचात्रासमासेन लिखनमसंगतं, सपरिकर-हेतुमित्याकारकसमस्तनिर्देशस्यैव युक्तत्वादिति वाच्यम्, तदादीनामेकदेशपरामर्श-कत्वस्याव्युत्पन्नतया तदाभासनिरूपणमित्यत्र तत्पदेन हेतुमात्रपरामर्शसम्भवा-

❀ गादाधरी ❀

तथापि तन्मात्रपरत्वे सङ्गत्यप्रदर्शनेन न्यूनता स्यादिति तस्यैककार्यकारित्वरूपसङ्गतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्त्तुमाह तत्त्वनिर्णयादीति। आदिपदाद् विजयपरिग्रहः। तत्कार्यकारित्वात्–सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात्, प्रयोजकत्वं च जनकतावच्छेदकादिसाधारणमिति स्वविषयकज्ञानकार्यं प्रति स्वस्य तथात्वमक्षतमेव।

❀ चन्द्रकला ❀

शिष्येति। शिष्यस्य या हेत्वाभासप्रवृत्तिस्तत्प्रयोजकीभूतं यत् ज्ञानानुकूलव्यापारात्मकनिरूपणघटकं हेत्वाभासज्ञानं तत्प्रयोजनप्रदर्शनेच्छयोच्चरितमित्यर्थः। तन्मात्रपरत्वे = निरूपणघटकज्ञानप्रयोजनप्रदर्शनमात्रपरत्वे । संगत्येति। हेत्वाभासनिरूपणप्रयोजकेत्यादिः। न्यूनता = संगत्यकथनेन संगतिविषयकज्ञानाभाववत्पुरुषोच्चरितता। तस्य = तत्त्वनिर्णयविजयप्रयोजकत्वादितिमूलस्य। एककार्येति। सद्धेतुभिन्नत्वे सति सद्धेतुप्रयोज्यकार्यप्रयोजकत्वरूपैककार्यकारित्वादिरूपा या संगतिस्तत्प्रदर्शनेच्छयोच्चरितत्वमपीत्यर्थः।

सपरिकरेति = सपरिकरहेतुभिन्नत्वे सतीत्यादिः। तेन न संगतेः सपरिकरहेतुनिष्ठत्वमपि शंकनीयमितिध्येयम्। ननु तत्त्वनिर्णयविजयप्रयोजकत्वं यदि तत्त्वनिर्णयादिजनकत्वं तदा हेत्वाभासे सद्धेतौ च तादृशजनकत्वं नास्त्येव हेत्वाभासादिज्ञानस्यैव तत्त्वनिर्णयादिजनकत्वात् अत आह प्रयोजकत्वञ्चेति। प्रयोजकत्वं न जनकत्वं, अपितु जनकजनकतावच्छेदकसाधारणमेव वाच्यमित्याह जनकतावच्छेदकादीति। आदिना जनकपरिग्रहः। तेन हेत्वाभासज्ञानस्य जनकत्वस्फुटीकरणात् हेत्वाभासस्य जनकतावच्छेदकत्वमप्यक्षतमिति सूचितम्।

अतः = प्रयोजकत्वस्य जनकतावच्छेदकादिसाधारणत्वतः। स्वविषयेति। स्वम् = हेत्वाभासादिः, तद्विषयकज्ञानस्य तत्त्वनिर्णयादिरूपकार्यं प्रतीत्यर्थः। स्वस्य = हेत्वाभासादेः। तत्त्वं = जनकतावच्छेदकत्वम्। वादिप्रतिवादिनोः पर्वतो वह्निमान् वह्न्यभाववान् वेत्याकारिका वाक्यद्वयात्मिका विप्रतिपत्तिः, तज्जन्यपर्वतो वह्निमान्नवेत्याकारकसंशयप्रकारत्वरूपकोटित्वस्य वह्नौ वह्न्यभावे च सत्त्वेऽपि वह्निमत्पर्वतविशेष्यकवह्निप्रकारकप्रमाज्ञानविषयत्वरूपप्रमितत्वस्य

❀ कलाविलासः ❀

नुपपत्तेः, सपरिकरहेतोः परामर्शसम्भवेऽपि तत्राभासत्वाऽयोगेनानन्वयापत्तेरशक्यसमाधित्वात्,

नचैवं "दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ" वित्यत्र तत्पदेन समस्तैकदेशीभूतदुःखत्रयस्यैव परामर्शस्य दृष्टतया निरुक्ततत्पदस्यैकदेशपरामर्श-

❀ गादाधरी ❀

तत्त्वनिर्णयः प्रमितकोटिनिश्चयः । तत्र व्याप्तिपक्षधर्मताविशिष्टप्रकृत-हेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते, प्रतिबन्धकीभूतविपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वादित्युभयो-स्तत्त्वनिर्णयप्रयोजकत्वम् ।

❀ चन्द्रकला ❀

वह्निकोटावेव वर्त्तमानतया पर्वतादौ वह्न्यादिकोटिनिश्चय एव तत्त्वनिर्णयशब्दार्थः, तादृशवह्न्यादिनिश्चयश्च पर्वतादौ वह्न्याद्यनुमितिस्वरूप एवेत्याह प्रमितेति । पर्वतादिविशेष्यकवह्न्यादिप्रकारकप्रमाज्ञानीयप्रकारीभूतवह्निकोट्यनुमितिरित्यर्थः ।

तत्र = निरुक्तवह्निकोटिनिश्चयात्मिकायामनुमितौ । व्याप्तीति । व्याप्ति-विशिष्टस्य प्रकृतहेतोः पक्षेण सह वैशिष्ट्यावगाहिज्ञानं परामर्शः स इवेत्यर्थः । तद्विपरीतेति । तस्य वह्निकोटेर्विपरीतो यो वह्न्यभावकोटिस्तत्साधकस्य हेतो-रित्यर्थः । हेत्वाभासत्वज्ञानम् = दुष्टत्वज्ञानम् । उपयुज्यते = जनकं भवति । कथ-मित्याकांक्षायामाह प्रतीति । वह्निकोटिप्रतिबन्धकीभूते वह्निविपरीतवह्न्यभाव-कोटिव्याप्यजलवान् पर्वत इत्याकारकज्ञाने इत्यर्थः । अप्रामाण्यग्राहकत्वात् = अप्रामाण्यग्रहजनकत्वात् । उभयोः = सद्धेतुदुष्टहेत्वोः । तत्त्वनिर्णयप्रयोजक-त्वमिति । अयं भावः, पर्वतविशेष्यकवह्निकोटिनिश्चयात्मकवह्न्यनुमितौ वह्निव्याप्ति-

❀ कलाविलासः ❀

कत्वेऽपि नसंगतिरिति वाच्यम् , तत्र तत्पदस्य बुद्धिविषयतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्नशक्ततया तदा दुःखत्रयपरामर्शकत्वसम्भवात्, अत्रतु हेतुमात्रबोधार्थमे-वासमासेन लिखनस्यावश्यकत्वात् , निरुक्तस्थले तत्पदेनैकदेशपरामर्शकत्वस्य प्रयत्नसाध्यत्वानभ्युपगमाच्चेति ध्येयम् ।

मूले तत्त्वनिर्णयेति । नच विजयपदोपादानं व्यर्थं, तत्त्वनिर्णयपदोपादाने-नैवैककार्यकारित्वसंगतिलाभसम्भवादितिवाच्यम् ? "तत्त्वनिर्णयोद्देश्यकन्यायानुगत-वचनसन्दर्भो वादः, विजयोद्देश्यकतादृशवचनसन्दर्भो जल्पः" इति विभेदभिन्नप्रयो-जनप्रदर्शनार्थं द्वयोरुपादानसम्भवादिति ध्येयम् ।

टीकायां प्रमितकोटिनिश्चय इति । तथाच इयमनुमितिः विवादविषयीभूतयोः कोट्योर्मध्ये प्रमितवह्न्यादिकोटिविधेयताकत्ववती वह्न्यादिव्याप्तिपक्षधर्मता-विशिष्टहेतुज्ञानजन्यत्वे सति वह्निविरोधिवह्न्यभावव्याप्यजलादिपरामर्शधर्मिका-प्रामाण्यग्रहजनकजलादिधर्मिकदुष्टत्वग्रहकालीनत्वादित्यनुमानेन प्रमितवह्न्यादि-विधेयकत्वनिश्चयस्तत्र निरुक्तहेतुज्ञाननिष्ठजनकतायां परम्परयाऽवच्छेदकतावतः व्याप्तिपक्षधर्मताविशिष्टसद्धेतोरिव तादृशावच्छेदकतावतो दुष्टस्य जलादेरपि प्रयोजक-त्वादिति भावः ।

❀ गादाधरी ❀

अथवा—तत्त्वनिर्णयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयः । तत्राऽनुमापक-

❀ चन्द्रकला ❀

पक्षधर्मताविशिष्टप्रकृतधूमहेतुज्ञानरूपवह्निव्याप्यधूमवान् पर्वत इत्याकारक-परामर्शस्य जनकतया तादृशजनकतावच्छेदकतया च यथा वह्निव्याप्तिपक्षधर्मता-विशिष्टधूमहेतोस्तत्र प्रयोजकत्वं सर्ववादिसिद्धम्, तथा वह्निविपरीतवह्न्यभाव-साधकदुष्टजलहेतोरपि प्रयोजकतावच्छेदकतयैव प्रमितवह्निकोटिनिश्चये प्रयोजकत्वं सम्भवत्येव, वह्न्यभावसाधकजलहेतौ दुष्टत्वज्ञानस्य वह्न्यभावव्याप्यजलवान् पर्वत इत्याकारकनिश्चयेऽप्रामाण्यज्ञानोत्पादप्रयोजकतया पर्वतधर्मिकप्रमितवह्निकोटि-निश्चयात्मकवह्निप्रकारकबुद्धौ अप्रामाण्यज्ञानविरहविशिष्टस्यैव वह्न्यभावव्याप्य-जलप्रकारकनिश्चयस्य प्रतिबन्धकतया तदभावस्य तादृशवह्निकोटिनिश्चयजनकस्य सम्पादकतयैव निरुक्तदुष्टत्वज्ञानस्य प्रमितवह्निकोटिनिश्चयात्मकतत्त्वनिर्णयो-पयोगिताया अनिवृत्तेरिति ।

ननु 'तत्त्वं ब्रह्मणि याथार्थ्ये धर्मे साधारणेऽपि'चेत्यादिकोषात् तत्त्वपदस्य ब्रह्मणि याथार्थ्यादावेव शक्ततया तस्य प्रमितकोटिपरत्वे तत्पदस्य लाक्षणिकत्वापत्तिरत आहाथवेति । साध्यवत्ताज्ञाने = वह्न्यादिरूपसाध्यप्रकारक-ज्ञाने, पर्वतादिधर्मिकवह्न्यादिप्रकारकपर्वतो वह्निमानित्याद्याकारकानुमिताविति यावत् । प्रमात्वनिश्चयः = वह्न्यादिमति वह्न्यादिप्रकारकत्वरूपयाथार्थ्यनिश्चयः । तथाचोक्तकल्पे तत्त्वपदस्य याथार्थ्यार्थकतया न तस्य लाक्षणिकत्वापत्तिरिति भावः ।

सद्धेतौ दुष्टहेतौ च निरुक्तप्रमात्वनिश्चयरूपतत्त्वनिर्णयोपयोगितां प्रदर्शयति तत्रेति । साध्यवत्ताज्ञानधर्मिकप्रमात्वनिश्चय इत्यर्थः । अनुमापकहेतोः = पर्वतादौ

❀ कलाविलासः ❀

अथवेति । तथाचेयमनुमितिः प्रमा, साध्यव्याप्तिपक्षधर्मताविशिष्टहेतुज्ञान-जन्यत्वे सति प्रमात्वविरोध्यप्रमात्वग्रहजनकसाध्याभावादिसाधकहेत्वदुष्टत्वग्रहप्रति-बन्धकतादृशहेतुधर्मिकदुष्टत्वग्रहकालीनत्वादित्यनुमानेनैव प्रकृतपक्षधर्मिकसाध्यानु-मितौ प्रमात्वनिश्चयः । तत्र पूर्वोक्तयुक्त्या सद्धेतोरिव दुष्टस्यापि प्रमात्वप्रयोजकत्व-मवगन्तव्यम् ।

नच पर्वतो वह्निमान् घटवांश्चेत्याकारिकायां भ्रमात्मकसमूहालम्बनानुमितौ निरुक्तहेतोः सत्त्वेन तत्र प्रमात्वविरहात् व्यभिचार इति वाच्यम्, वह्न्यादिमति वह्न्यादिप्रकारत्वरूपानुगतप्रमात्वस्य साध्यत्वोपगमेन व्यभिचारस्य वारणसम्भवादिति तु विभावनीयम् ।

❀ गादाधरी ❀

हेतोर्व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव विपरीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते, प्रकृतसाध्यग्रहाऽप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघटकत्वात् ।

विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा, व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारेति बोध्यम् ।

❀ चन्द्रकला ❀

वह्न्यादिसाध्यानुमापकधूमादिहेतोः । व्याप्त्यादीति । आदिना पक्षधर्मतापरिग्रहः । वह्न्यादिव्याप्तिपक्षधर्मताविशिष्टत्वरूपं यत् सद्धेतुत्वं तज्ज्ञानमिवेत्यर्थः । विपरीतेति = वह्न्यादिविपरीतवह्न्याद्यभावसाधकजलादिहेतोरित्यर्थः । दुष्टत्वज्ञानम् = हेत्वाभासत्वज्ञानम् । उपयुज्यते = प्रयोजकं भवति । यथोक्तप्रमात्वनिश्चये दुष्टत्वज्ञानस्योपयोगितां घटयति प्रकृतेति । पर्वतादिधर्मिकवह्न्याद्यनुमितिरूपसाध्यज्ञाने उत्पद्यमानो योऽप्रमात्वग्रहस्तज्जनकीभूतं यत् वह्न्यादिविपरीतवह्न्यभावादिसाधकजलादिहेतावदुष्टत्वज्ञानं तदनुत्पादप्रयोजकत्वादित्यर्थः ।

तथाच पर्वतादौ वह्न्याद्यनुमितिरूपसाध्यवत्ताज्ञाने वह्निमति वह्निप्रकारकज्ञानत्वरूपप्रमात्वनिश्चये तादृशसाध्यवत्ताज्ञाने वह्निमति वह्निप्रकारकत्वाभाव-निश्चयात्मकाप्रामाण्यनिश्चयः प्रतिबन्धकः, निरुक्ताप्रामाण्यनिश्चये च वह्निविपरीतवह्न्याद्यभावसाधकजलादिहेतावदुष्टत्वज्ञानं प्रयोजकं, तादृशादुष्टत्वज्ञानं प्रति जलादिहेतौ दुष्टत्वज्ञानं प्रतिबन्धकं भवतीति तादृशदुष्टत्वज्ञानेनादुष्टत्वज्ञानानुत्पादे कारणाभावादप्रामाण्यग्रहस्यानुत्पत्तौ, अप्रामाण्यग्रहाभावे च प्रतिबन्धकाभावात् भवति तादृशसाध्यग्रहे प्रमात्वनिश्चय इति निरुक्तप्रमात्वनिश्चयं प्रति परम्परया दुष्टजलादिहेतोः प्रयोजकत्वमक्षतमिति भावः ।

ननूक्तरीत्या सद्धेतौ दुष्टहेतौ च तत्त्वनिर्णयप्रयोजकत्वसम्भवेऽपि विजयप्रयोजकत्वं तत्र कथं सम्पादनीयमित्यत आह विजयेति । परकीयाहङ्कारखण्डनं विजयः, अहमस्मादुत्कृष्ट इत्याकारकज्ञानजन्यसंस्कारविशेषोऽहंकारः, तन्नाशानुकूलव्यापारो विजयस्तत्प्रयोजकत्वञ्चेत्यर्थः । हेत्वाभासस्य = दुष्टहेतोः । स्वज्ञानेति । स्वं हेत्वाभासः तज्ज्ञानजन्यं यत् परकीयहेतौ दोषोद्भावनं दोषाभिधानं तद्द्वारेत्यर्थः । तथाच हेत्वाभासज्ञानात् परोक्तहेतौ दोषाभिधानं ततस्तादृशविजय इति हेत्वाभासस्य हेत्वाभासज्ञाननिष्ठकारणतावच्छेदकतयैव विजयप्रयोजकत्वमिति हृदयम् । व्याप्त्यादीति । व्याप्तिपक्षधर्मताविशिष्टसद्धेतोरित्यर्थः । स्वज्ञानेति । स्वम् = तादृशसद्धेतुः तज्ज्ञानाधीनो यः प्रतिज्ञादिपञ्चवाक्यात्मकसन्न्यायप्रयोगः, तद्द्वारेत्यर्थः । अत्रापि हेतुज्ञाननिष्ठविजयकारणतावच्छेदकतयैव सद्धेत विजयप्रयोजकत्वमिति तत्त्वम् ।

❀ चिन्तामणिः ❀

## तत्राऽनुमितिकारणीभूताऽभावप्रतियोगियथार्थज्ञानविषयत्वम्।

❀ चन्द्रकला ❀

मूले तत्रेति। यथोक्तनिरूपणे इत्यर्थः। विषयत्वं सप्तम्यर्थः, अन्वयश्चास्य हेत्वाभासत्वमित्यनेन। अनुमितीति। अनुमितिपदस्य प्रकृतपक्षविशेष्यकसाध्यप्रकारकानुमिति-तत्कारणपरामर्शान्यतरपरत्वम्, प्रकृतपक्षविशेष्यकप्रकृतसाध्यव्याप्य-प्रकृतहेतुप्रकारकप्रकृतसाध्यप्रकारकसमूहालम्बनानुमितिपरत्वं वा स्वयमग्रे दीधितिकृतैव प्रदर्शयिष्यते, तथा च तादृशानुमितेः कारणतावान् योऽभावस्तत्प्रतियोगियत् यथार्थज्ञानं तद्विषयत्वं हेत्वाभासत्वमिति समुदितप्रथमलक्षणार्थः पर्यवसितः।

भवति हि ह्रदो वह्निमान् घटत्वादित्यादौ वह्न्यभाववद्वृत्तित्वविशिष्टघटत्वरूपव्यभिचारे, वह्न्यधिकरणवृत्तित्वाभावविशिष्टघटत्वस्वरूपे विरोधे, घटत्वाभावविशिष्टह्रदरूपाऽसिद्धौ, वह्न्यभावव्याप्यवद्ध्रदरूपे सत्प्रतिपक्षे, वह्न्यभाववद्ध्रदात्मके बाधे च लक्षणसमन्वयः। निरुक्तव्यभिचारनिश्चयाभावस्य विरोधनिश्चयाभावस्य स्वरूपासिद्धिनिश्चयाभावस्य च प्रतिबन्धकाभावत्वेन ह्रदधर्मिकवह्न्यनुमितिकारणीभूतवह्निव्याप्यघटत्ववान् ह्रद इत्याकारकपरामर्शं प्रति कारणतया यथोक्तानुमितिकारणतावान् यो व्यभिचारादि-निश्चयाभावस्तत्प्रतियोगि यत् व्यभिचारादिनिश्चयात्मकं यथार्थज्ञानं तद्विषयत्वस्य व्यभिचारादौ, निरुक्तसत्प्रतिपक्षनिश्चयाभावस्य बाधनिश्चयाभावस्यापि प्रतिबन्धकाभावत्वेन ह्रदविशेष्यकवह्न्यनुमितिकारणतया अनुमितिकारणीभूतस्य सत्प्रतिपक्षादिनिश्चयाभावस्य प्रतियोगि यत् सत्प्रतिपक्षादिनिश्चयात्मकं यथार्थज्ञानं तद्विषयत्वस्य सत्प्रतिपक्षादौ च सत्त्वात्।

एवं अयं वह्निमान् जलत्वादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्ये, सर्वमनित्यं मेयत्वादित्यादौ नित्यत्वव्यापकीभूताभावप्रतियोगित्वाभावविशिष्टप्रमेयत्वरूपानुपसंहारित्वे, काञ्चनमयपर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभावविशिष्टपर्वतस्वरूपाश्रयासिद्धौ, काञ्चनमयत्वाभावविशिष्टवह्निरूपसाध्याप्रसिद्धौ, काञ्चनमयत्वाभावविशिष्टधूमरूपसाधनाप्रसिद्धौ च असाधारण्यादिनिश्चयाभावस्यापि पूर्वोक्तानुमितौ कारणतया निरुक्ताभावप्रतियोग्यसाधारण्यादिनिश्चयविषयताया असाधारण्यादौ वर्त्तमानत्वाल्लक्षणसमन्वयो बोध्य इति दिक्।

❀ गादाधरी ❀

**मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः,—**

❀ चन्द्रकला ❀

'यथाश्रुतमिद'मित्यादिदीधितिमवतारयति टीकायां मूलोक्तेति । मूलोक्ताना-मनुमितीत्यादिलक्षणानां त्रयाणामित्यर्थः । दुष्टलक्षणत्वे = बाधादिदोषविशिष्टानां हेतूनां लक्षणत्वे । दोषेषु = बाधादिषु । अतिव्याप्तिरिति । ह्रदो वह्निमान् धूमा-दित्यादौ ह्रदधर्मिकवह्न्यनुमितिकारणीभूतस्य वह्न्यभावविशिष्टह्रदादिनिश्चया-भावस्य प्रतियोगिनो वह्न्यभावविशिष्टह्रदादिनिश्चयस्य यथार्थज्ञानस्य विषय-ताया वह्न्यभावविशिष्टह्रदाद्यात्मकबाधादौ दोषे सत्त्वादिति हृदयम् ।

❀ कलाविलासः ❀

अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति चिन्तामणिः । तथाच प्रकृतानुमितित्वावच्छिन्नकार्यतानिरूपितकारणतावान् योऽभावस्तत्प्रति-योगियथार्थज्ञानविषयत्वमिति फलितम् ।

कारणतायाः किञ्चित्कार्यतापेक्षताप्रदर्शनार्थमनुमितित्वावच्छिन्नेति । शाब्दादौ उपनीतभानादौ च तदभावनिश्चयस्य प्रतिबन्धकत्वेऽपि तद्विषयस्य न दोषत्वं, दोषाणामनुमितिप्रतिरोधफलकत्वादिति शाब्दादिकं विहायानुमितीत्युक्तमिति ध्येयम् ।

न च कार्यतापदोपादानं व्यर्थं, अनुमितित्वावच्छिन्नं यत् तन्निरूपितकारणता-वदभावप्रतियोगियथार्थज्ञानविषयत्वस्यैव सम्यक्त्वादिति वाच्यम्, तथासति पर्वतो वह्निमानित्याकारकानुमितिविषये वह्निमत्पर्वतेऽतिव्याप्त्यापत्तेः, पर्वतो वह्नि-मानित्याकारकानुमित्यभावप्रत्यक्षे तादात्म्यसम्बन्धेन तादृशानुमित्यभावस्य हेतुत्व-वादिनां मते तादृशानुमितित्वावच्छिन्ना या प्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितकारणतावतस्तादृशानुमित्यभावस्य प्रतियोग्यनुमितिरूपयथार्थज्ञानविषय-ताया वह्निमत्पर्वते सत्त्वादिति नव्याः ।

कारणतापदानुपादाने पर्वतो वह्निमानित्याकारकानुमित्यभाववद्ध्रदपक्ष-कवह्निसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिः, तादृशानुमितित्वावच्छिन्नकार्यतानिरू-पिता या स्वावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नावच्छेदकता तदाश्रयतादृशा-नुमित्यभावप्रतियोग्यनुमित्यात्मकयथार्थज्ञानविषयताया वह्निमत्पर्वते वृत्तित्वादिति ध्येयम् ।

अनुमितिकारणाभाव इत्युक्तौ तादृशकारणस्याभावः कारणाभाव इति षष्ठीसमास-शंका स्यात्, तथाच वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शविषये वह्निव्याप्यधूमवत्पर्वतेऽतिव्याप्तिः, तस्यापि अनुमितिकारणाभावप्रतियोगिपराम-र्शात्मकयथार्थज्ञानविषयत्वादतः कर्मधारयलाभार्थं भूतपदमिति प्राञ्चः ।

❀ चन्द्रकला ❀

निरुक्तमूलोक्तलक्षणानां दुष्टलक्षणत्वे पर्वतो धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारनिश्चयाभावस्य प्रकृतानुमितिकारणीभूतस्य प्रतियोगिव्यभिचारनिश्चयविषयताया व्यभिचारिणि दुष्टे वह्नौ सत्त्वेन वह्न्यादिदुष्टे दुष्टलक्षणसमन्वयसम्भवेऽपि ह्रदो वह्निमान् धूमादित्यादौ बाधितधूमादिहेतावव्याप्तिः। ह्रदधर्मिकवह्न्यनुमितिकारणीभूताभावप्रतियोगिवह्न्यभावविशिष्टह्रदनिश्चयात्मकयथार्थज्ञानविषयताया वह्न्यभावविशिष्टह्रदनिष्ठाया धूमादिदुष्टहेतौ विरहात् ।

नच वह्न्यभाववान् ह्रदो धूमश्चेति समूहालम्बनयथार्थनिश्चयस्यापि ह्रदधर्मिकवह्न्याद्यनुमितिकारणीभूताभावप्रतियोगितया तादृशनिश्चयविषयताया धूमेऽपि सत्त्वात् धूमादौ बाधिते दुष्टे लक्षणसमन्वयः सम्भवतीति वाच्यम्; तथा सत्युक्तरीत्योक्तस्थले घटादावुदासीनेऽतिव्याप्त्यापत्तेः, ह्रदधर्मिकवह्न्याद्यनुमितिकारणीभूताभावप्रतियोगिनो ह्रदो वह्निमान् घटश्चेत्याकारकसमूहालम्बनयथार्थनिश्चयस्य विषयताया घटेऽपि सत्त्वात्। अतो निरुक्तोदासीनघटादावतिव्याप्तिवारणाय यथार्थ-

❀ कलाविलासः ❀

नचानुमितिकारणीभूतो यस्तत्प्रतियोगियथार्थज्ञानविषयत्वस्यैव सम्यक्त्वे अभावपदोपादानं व्यर्थमिति वाच्यम्, सिषाधयिषाविरहविशिष्टसिद्ध्यभावभिन्नत्वलाभायैवाभावपदोपादानसार्थक्यसम्भवात्। अन्यथा अनुमितिकारणीभूततादृशसिद्ध्यभावप्रतियोगिसिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिः स्यादिति वदन्ति ।

वस्तुतस्तु पर्वतो वह्निमान् धूमादित्यादौ परामर्शावच्छिन्नभिन्नभेदस्य अनुमितिकारणीभूतपरामर्शरूपतया तत्प्रतियोगिपरामर्शावच्छिन्नभिन्नस्य यथार्थज्ञानात्मकघटज्ञानस्य विषयत्वमादाय घटेऽतिव्याप्तिः स्यादतोऽभावपदोपादानम्, तदुपादाने तु अनुमितिकारणतावच्छेदकाभावत्वरूपानुयोगितानिरूपितप्रतियोगिताश्रययथार्थज्ञानविषयत्वस्यैव लक्षणार्थतया न कोऽपि दोषः! परामर्शावच्छिन्नभिन्नभेदस्वरूपे परामर्शे अनुमितिकारणतावच्छेदकाभावत्वरूपानुयोगिताया विरहादिति तु नव्याः ।

ज्ञानपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ अनुमितिकारणीभूताभावप्रतियोगिकामिनीजिज्ञासाविषयत्वमादाय कामिनीज्ञानेऽतिव्याप्तिः स्यादतस्तदुपादानम् ।

न च पर्वतो वह्निमान् कामिनी चेत्याकारकसमूहालम्बनानुमितौ कामिनीजिज्ञासाप्रतिबध्यत्वविरहान्न कामिनीज्ञानेऽतिव्याप्तिरिति वाच्यम्, यादृशस्थलविशेषे तादृशसमूहालम्बनानुमितिः कस्यापि न जाता तादृशस्थले कामिनीजिज्ञासाविषयेऽतिव्याप्तिवारणाय ज्ञानपदोपादानसार्थक्यसम्भवादिति ध्येयम् ।

❀ गादाधरी ❀

यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया

❀ चन्द्रकला ❀

ज्ञाननिष्ठा या प्रकृतानुमितिकारणीभूताभावप्रतियोगितास्वरूपा प्रकृतानुमितिप्रतिबन्धकता तदवच्छेदकविषयताश्रयत्वं हेत्वाभासत्वमित्येवं प्रथमलक्षणार्थो वाच्यस्तथासति नोक्तोदासीनघटादावतिव्याप्तिः यन्निष्ठविषयताकं ज्ञानं प्रकृतह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकं भवति तन्निष्ठविषयताया एव तादृशानुमितिप्रतिबन्धकतावच्छेदकतया ह्रदो वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनयथार्थज्ञाननिष्ठनिरुक्तानुमितिप्रतिबन्धकतावच्छेदकत्वस्य ह्रदह्रदत्ववह्निवह्नित्वाभावाभावत्वादिनिष्ठविषयतायामेव सत्त्वेन घटादिनिष्ठविषयतायाश्च तादृशप्रतिबन्धकतानवच्छेदकतया तदाश्रयत्वस्य घटादावतिव्याप्त्यप्रयोजकत्वात् ।

एवञ्च ह्रदो वह्निमान् ह्रदादित्यादिपक्षात्मकहेतुकस्थले ह्रदादिरूपबाधितदुष्टहेतौ ह्रदविशेष्यकवह्न्यनुमितिप्रतिबन्धकतावच्छेदकवह्न्यभाववद्ह्रदादिविषयताश्रयत्वसत्त्वेन निरुक्तदुष्टलक्षणसमन्वयसम्भवेऽपि ह्रदो वह्निमान् धूमादित्यादौ बाधिते धूमादिदुष्टहेतावव्याप्तिवारणमशक्यमेव, ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतावच्छेदकीभूतवह्न्यभाववद्ह्रदादिविषयताया धूमादावसत्त्वात्, धूमादिविषयतायाः तादृशप्रतिबन्धकतानवच्छेदकत्वादित्याह यथार्थेति । प्रकृतानुमितिकारणीभूताभावप्रतियोगितारूपेत्यादिः । समूहालम्बनेति । ह्रदो वह्निमान् धूमादित्यादौ ह्रदो वह्न्यभाववान् घटश्चेत्याकारकसमूहालम्बनविषयताश्रयघटादिरूपोदासीनपदार्थवारणायेत्यर्थः। प्रथमलक्षणे = अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमितिलक्षणे । विवक्षणीयतयेति । यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्येति पूर्वेणान्वयः । तथाचोक्तसमूहालम्बनज्ञानविषयताया घटे सत्त्वेऽपि तस्या ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतानवच्छेदकत्वान्न तादृशविषयतामादाय घटेऽतिव्याप्तिरिति भावः ।

❀ कलाविलासः ❀

अत्रानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्यैव हेत्वाभासलक्षणत्वसम्भवे अनुमितिकारणीभूतेत्याद्यभिधानं व्यर्थमिति चेन्न, प्रतिबन्धकत्वं हि द्विविधम्, कारणीभूताभावप्रतियोगित्वरूपं प्रयोजकीभूताभावप्रतियोगित्वरूपञ्च । तत्र प्रथमप्रतिबन्धकत्वस्य लक्षणघटकत्वसूचनाय कारणीभूतेत्यादेरभिहितत्वात्, अन्यथा प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य लक्षणघटकत्वे ह्रदो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमवान् ह्रद इत्याकारकपरामर्शेऽतिव्याप्तिः स्यात्, परामर्श-

❀ दीधितिः ❀

**यथाश्रुतमिदं हेतुदोषाणां लक्षणम्, तद्वत्त्वं च दुष्टहेतूनाम्, तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति ।**

❀ गादाधरी ❀

बाधादिज्ञानप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात्तत्रत्यहेतावव्याप्तिश्च, यद्विषयकत्वेनेत्यादिलक्षणे च तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथेत्यत आह यथाश्रुतमिति । इदम्—एतल्लक्षणत्रयम् ।

❀ चन्द्रकला ❀

बाधादीति । आदिना सत्प्रतिपक्षपरिग्रहः । तथाच ह्रदादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकस्थले ह्रदो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बननिश्चयनिष्ठाया अपि प्रकृतानुमितिप्रतिबन्धकताया अवच्छेदकत्वस्य धूमादिविषयतायां विरहात् प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य प्रथमलक्षणार्थत्वेऽपि बाधिते दुष्टधूमादिहेतावव्याप्तिरस्त्येवेति हृदयम् ।

ह्रदो वह्निमान् ह्रदादित्यादौ वह्न्यभाववद्ह्रदनिश्चयनिष्टप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य ह्रदविषयतायां सत्त्वात् पक्षाद्यभिन्नहेतुकस्थलीयबाधितह्रदादिदुष्टहेतौ लक्षणसमन्वयादाह प्रायश इति । हेतुरिति । पक्षाद्यतिरिक्तेत्यादिः । तत्रत्येति । यादृशस्थले बाधादिज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदिका हेतुविषयता न भवति तादृशस्थलीयहेतावव्याप्तिश्चेत्यर्थः ।

लक्षणे = द्वितीयतृतीयलक्षणे, तृतीयायाः = तृतीयाविभक्तेः, सुतरां तथा = दोषेऽतिव्याप्तिः, बाधिते दुष्टेऽव्याप्तिश्च । तथाच यन्निष्ठविषयता प्रकृतानुमितिप्रतिबन्धकतावच्छेदिका तत्त्वं हेत्वाभासत्वमित्यस्य द्वितीयतृतीयलक्षणार्थतया ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदरूपदोषेऽतिव्याप्तिः, तादृशविशिष्टह्रदादिविषयताया ह्रदधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतावच्छेदकत्वात्, धूमादिविषयतायाश्चातथात्वात्, धूमादिदुष्टहेतावव्याप्तिश्चेत्याशयः । अतः = निरुक्तातिव्याप्त्यादिदोषतः । यथाश्रुतम् = लक्षणाग्रहाजन्यशक्तिभ्रमाजन्यशाब्दबोधेच्छयोच्चरितम् ।

लक्षणत्रयमिति । प्रथमलक्षणं द्वितीयलक्षणं तृतीयलक्षणञ्चेत्यर्थः । तद्वत्त्वंच

❀ कलाविलासः ❀

धर्मिकाप्रामाण्यज्ञानाभावस्याप्यनुमितौ प्रयोजकतया तादृशप्रयोजकीभूताभावप्रतियोग्यप्रामाण्यज्ञानस्य विषयतायाः तादृशपरामर्शे सत्त्वादित्यास्तां विस्तरः ।

तत्रत्यहेतावव्याप्तिश्चेति । अथ ह्रदो वह्निमान् धूमादित्यादौ धूमाभाववद्ह्रदरूपस्वरूपासिद्धिनिश्चयीयविषयतामादाय ह्रदो वह्निमान् द्रव्यत्वादित्यादौ च वह्न्य-

❀ गादाधरी ❀

ननु हेतुवदाभासन्ते इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वाद् दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वात्तल्लक्षणमेवाऽकाङ्क्षितम्, अतस्तदनुक्तौ मूलस्य न्यूनता, अन्यविधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि 'तेचे'त्यादिना दुष्टहेतूनामेव विभजनाद् दुष्टहेतुनिरूपणस्याऽ-

❀ चन्द्रकला ❀

दुष्टहेतूनामिति दीधितिग्रन्थमवतारयति ननु हेत्विति । व्याप्तिपक्षधर्मतादिमान् हेतुः, वत्यर्थः सादृश्यम्, तच्च व्याप्तिपक्षधर्मताद्यभाववन्निष्ठं व्याप्तिपक्षधर्मत्वादिप्रकारतानिरुपितविशेष्यत्वम्, तस्य च आपूर्वकभासधात्वर्थविषयतायामभेदेनान्वयः, आख्यातार्थश्चाश्रयत्वम्, तथाच 'हेतुवदाभासन्ते'इति हेत्वाभासा इति व्युत्पत्त्या व्याप्तिपक्षधर्मत्वाद्यभाववन्निष्ठं यत् व्याप्तिपक्षधर्मत्वादिप्रकारतानिरुपितविशेष्यत्वं तदभिन्नविषयताश्रयीभूता दुष्टहेतव इत्यस्यैव प्रत्येतव्यतया हेत्वाभासशब्दस्य दुष्टहेतुपरत्वात् तल्लक्षणानभिधानेन मूलस्य न्यूनता स्यादिति भावः ।

दुष्टहेतुनिरूपणस्य = दुष्टहेतुविषयकज्ञानानुकूलव्यापारस्य । प्रतिज्ञातत्वात् = अव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारविषयत्वात् । तल्लक्षणमपि = दुष्टलक्षणमपि । अपिना दुष्टविशेषणतयैव दोषलक्षणमाकाङ्क्षितमिति सूचितम् । आकाङ्क्षितम् = जिज्ञासितम् । तदनुक्तौ = दुष्टलक्षणानुक्तौ । मूलस्य = मूलग्रन्थस्य । न्यूनता = दुष्टलक्षणाकथनानुमिताज्ञानवत्पुरुषोच्चरितता ।

ननु हेतोराभासा हेत्वाभासा इति व्युत्पत्त्या, आभासपदस्य दोषरूपार्थे लक्षणां स्वीकृत्य हेत्वाभासशब्दस्य हेतुदोषार्थकत्वसम्भवात् हेतुदोषनिरूपणस्यैव प्रतिज्ञाततया तल्लक्षणाभिधानमेव युक्तं नतु दुष्टहेतुलक्षणाभिधानमित्यत आहान्यविधेति । हेतोराभासा हेत्वाभासा इति व्युत्पत्त्येत्यर्थः । हेत्वाभासेति । हेत्वाभासशब्दस्येत्यर्थः । एतेन हेत्वाभाससमुदायस्य वाक्यतया तस्य पदत्वाभिधानमयुक्तमित्याक्षेपो निरस्त इति ध्येयम् ।

हेतुदोषेति । हेतुदोषबोधेच्छयोच्चरितत्वसम्भवेऽपीत्यर्थः । ते चेत्यादिनेति । 'ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चे'ति ग्रन्थेनेत्यर्थः । दुष्टहेतूनामेवेति । सव्यभिचारविरुद्धादिशब्दस्य दोषविशिष्टहेतुपरत्वादित्याशयः । विभजनात् = विभागस्य हेत्वाभासत्वावच्छिन्नानां परस्परविरुद्धव्याप्यधर्मेण

❀ कलाविलास ❀

भाववद्वृत्तिद्रव्यत्वरूपव्यभिचारनिश्चयीयद्रव्यत्वविषयतामादाय तत्र तत्र हेतौ लक्षणसमन्वयसम्भवे सामान्यलक्षणे कथमव्याप्तिरभिहितेति चेन्न, उत्पत्तिकालीन। घटो गन्धवान् पृथिवीत्वादित्याद्यसंकीर्णबाधितपृथिवीत्वहेतावव्याप्तेरभिहितत्वात् -

❀ गादाधरी ❀

प्रतिज्ञातत्वे तदसङ्गतेः, एवं दुष्टहेतुनिरूपणस्याऽप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात्, उपधेयसङ्करेऽपीत्यादिग्रन्थस्य उपाध्यसङ्करेण विभागोपपादनपरस्याऽसङ्गति-

❀ चन्द्रकला ❀

धर्मिणः प्रतिपादनस्य करणात् । दुष्टेति । दुष्टहेतुविषयकज्ञानानुकूलव्यापारस्येत्यर्थः । अप्रतिज्ञातत्वे = अव्यवहितोत्तरकालकर्तव्यत्वप्रकारकशिष्यसमवेतबोधानुकूलव्यापारविषयत्वाभावे । तदसंगतेरिति । यन्निरूपणं प्रतिज्ञातं भवति तस्यैव विभाग इतिनियमात् दोषनिरूपणस्य प्रतिज्ञातत्वे दुष्टहेतूनां विभागो न सम्भवतीति हृदयम् ।

दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वे दोषान्तरमप्याहैवमिति । अप्रकृतत्वे = अप्रतिज्ञातत्वे । दोषनिरूपणस्यैव प्रतिज्ञातत्वे इति शेषः । विभागेति = विभागविषयत्वाभावेनेत्यर्थः । दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वादितिभावः ।

तेषाम् = दुष्टहेतूनाम् । संकरेण=अभिन्नत्वेन । विभागेति सामान्यधर्मावच्छिन्नानां दुष्टहेतूनां परस्परविरुद्धव्याप्यधर्मेण धर्मिप्रतिपत्त्यनुकूलव्यापारस्य यः व्याघातोऽसम्भवस्तच्छङ्काया इत्यर्थः । अनवतारादिति । अयं वह्निमान् जलत्वादित्यादौ वह्न्यभाववद्वृत्तित्वविशिष्टस्य व्यभिचारिणो हेतोर्वह्न्यधिकरणवृत्तित्वाभावविशिष्टतया विरुद्धत्वेन व्यभिचारिविरुद्धयोर्भेदाभावात् व्यभिचारित्वविरुद्धत्वयोरेकत्र समावेशेन दुष्टहेतूनां विभाग एव न सम्भवति, मिथो विरुद्धधर्मेण धर्मिप्रतिपादनस्यैव विभागत्वादित्याशंकावतारस्तु दुष्टहेतुनिरूपणस्य प्रतिज्ञातत्वे एव सम्भवति नान्यथेत्याशयः ।

निरुक्तायाः शंकाया अनवतारे तत्समाधानपरोत्तरग्रन्थस्याप्यसंगतिरित्याहोपधेयेति । उपधेयस्य उपाधिरूपदोषविशिष्टस्य दुष्टहेतोः संकरेणाभिन्नत्वेनापि उपाधेः—दोषस्य असंकरात् भिन्नत्वादित्यर्थपरस्य उपधेयसंकरेऽप्युपाधेरसंकरादिति मूलग्रन्थस्येत्यर्थः । उपाध्यसंकरात् = उपाधेर्दोषस्य भिन्नत्वात् । विभागेति । विभागोपपादनबोधेच्छयोच्चरितस्येत्यर्थः । असंगतिरिति । दोषनिरूपणस्य प्रतिज्ञा-

❀ कलाविलासः ❀

न च गन्धाभावव्याप्यपृथिवीत्ववत्तादृशघटरूपसत्प्रतिपक्षनिश्चयीयपृथिवीत्वविषयतामादाय लक्षणसमन्वयसम्भव इति वाच्यम्, निरवच्छिन्नसाध्याभावाधिकरणताश्रयावृत्तित्वरूपाया गन्धाभावव्याप्तेः पृथिवीत्वहेतावप्रसिद्धतया सत्प्रतिपक्षनिश्चयस्य यथार्थत्वाऽसम्भवेन तादृशनिश्चयविषयत्वमादायापि तत्र लक्षणसमन्वयासम्भवात् । केचित्तु बाधेन दुष्ट इति व्यवहारानुपपत्तिरेवात्राव्याप्तिपदार्थ इत्याहुः ।

❀ गादाधरी ❀

रित्यत आह तद्वत्त्वं चेति। तादृशदोषवत्त्वं चेत्यर्थः। दुष्टहेतूनां लक्षणमित्यनुषज्यते। स्फुटमिति शेषः। तथा च दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽपि दोषलक्षणे कृते तद्वत्त्वरूपदुष्टहेतुलक्षणस्य स्फुटतया लाभेन दोषलक्षणाभिधानस्य तत्र तात्पर्यान्नोक्तानुपपत्तिरिति भावः। तदभिप्रायेणैवेति। दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः।

❀ चन्द्रकला ❀

तत्त्वे दोषलक्षणस्यैव वक्तव्यतया दुष्टलक्षणस्याप्रतिज्ञातत्वेन दुष्टहेतुलक्षणानभिधानस्यौचित्ये दुष्टहेतूनां विभागानुपपत्त्याऽऽशंकाया अनवतारेण तेषां विभागोपपादनपरस्य उपधेयेत्यादिग्रन्थस्यासंगतिर्दुर्वारेति भावः। तादृशेति। यथार्थज्ञाननिष्ठप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयीभूतदोषवत्त्वमित्यर्थः। दुष्टलक्षणस्य स्फुटतां सूचयितुं भावमाह तथाचेति। अप्रकृतत्वेऽपि = अप्रतिज्ञातत्वेऽपि। दुष्टहेत्विति। दोषवत्त्वरूपेत्यादिः। नोक्तेति। न दुष्टहेतूनां संकरेण विभागव्याघाताशंकानुपपत्तिर्नवा दुष्टहेतुविभागोपपादनपरस्योपधेयसंकरेत्यादिग्रन्थस्य संगत्यनुपपत्तिरिति भावः।

उपधेयेत्यादिग्रन्थस्तु दुष्टलक्षणाभिप्रायक एवेति दृढीकर्त्तुमाह दुष्टहेतुलक्षणेति। दोषवत्त्वं दुष्टत्वमित्याकारकदुष्टलक्षणेच्छयैवेत्यर्थः।

"अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्व" मेतल्लक्षणघटकानुमितिपदं यदि अनुमितिसामान्यपरं तदा अनुमितित्वव्यापककार्यतानिरूपितकारणतावान् योऽभावस्तत्प्रतियोगियथार्थज्ञानविषयत्वं, यथार्थज्ञाननिष्ठा या अनुमितित्वव्यापकप्रतिबध्यतानिरूपिता प्रतिबन्धकता तदवच्छेदकविषयताश्रयत्वं वा हेत्वाभासत्वमित्यस्यैव प्रथमलक्षणार्थतायाः पर्यवसिततया असम्भवापत्तेः, ह्रदादिपक्षकवह्न्यादिसाध्यकस्थले वह्न्याद्यभावविशिष्टह्रदादिनिश्चयात्मकयथार्थज्ञानाभावकार्यताया निरुक्तनिश्चयप्रतिबध्यताया वा अनुमितित्वाऽव्यापकत्वात्। अनुमितित्वस्य घटाद्यनुमितावपि सत्त्वेन तत्र तादृशनिश्चयप्रतिबध्यताविरहात्। यादृशयथार्थज्ञानप्रतिबध्यता अनुमितित्वव्यापिका तादृशयथार्थज्ञानविषयस्यैव हेत्वाभासतायाः पर्यवसितत्वात्।

यदि च तादृशानुमितिपदं यत्किञ्चिदनुमितिपरं, तदा यथार्थज्ञाननिष्ठा या यत्किञ्चिदनुमितिव्यक्तिनिष्ठप्रतिबध्यतानिरूपिता प्रतिबन्धकता तदवच्छेदकविषयताश्रयत्वस्य लक्षणार्थतया ह्रदविशेष्यक-वह्निसाध्यकानुमितेरेव यत्किञ्चिदनुमितिपदेन धर्त्तुं शक्यत्वेन तादृशानुमितिप्रतिबन्धकीभूतवह्न्यभावविशिष्टह्रदादिनिश्चयविषयत्वमादाय ह्रदादौ वह्न्यादिसाध्यकस्थले लक्षण-

❀ गादाधरी ❀

अनुमितिपदस्याऽनुमितिसामान्यपरत्वेऽसम्भवात्, यत्किञ्चिदनुमिति-परत्वेऽतिप्रसङ्गात् प्रकृतपक्षसाध्यहेतुकाऽनुमितिपरत्वमावश्यकम्,

❀ चन्द्रकला ❀

समन्वयसम्भवादसम्भवाभावेऽपि पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाव-विशिष्टह्रदादावतिव्याप्तिः स्यात् यत्किञ्चिदनुमितिपदेन तत्र ह्रदधर्मिक-वह्न्याद्यनुमितिमादाय तत्प्रतिबन्धकयथार्थज्ञानविषयताया वह्न्यभावविशिष्ट-ह्रदादौ सत्त्वादित्यकामेनापि तादृशानुमितिपदं प्रकृतहेतुप्रकारकनिश्चयोत्तर-जायमानप्रकृतपक्षकप्रकृतसाध्यकानुमितिपरमवश्यं वक्तव्यं, तथासति नासम्भ-वो न वातिव्याप्तिः । प्रकृतपक्षीभूतह्रदादिधर्मिकवह्न्याद्यनुमितौ वह्न्य-भाववद्ध्रदादिनिश्चयस्य प्रतिबन्धकत्वात् तथाविधपर्वतादिधर्मिकवह्न्याद्यनु-मितौ च तादृशनिश्चयस्याप्रतिबन्धकत्वादित्याहानुमितिपदस्येति । प्रकृतलक्षण-घटकीभूतेत्यादिः ।

असम्भवादिति । घटपटाद्यनुमितिघटितयावदनुमितौ कस्यापि निश्चयस्याप्रतिबन्धकत्वादिति भावः । अतिप्रसंगादिति । पर्वतादिपक्षक-वह्न्यादिसाध्यकस्थले यत्किञ्चिद्ध्रदो वह्निमानित्यनुमितिप्रतिबन्धकयथार्थ-ज्ञानविषतताया वह्न्यभावविशिष्टह्रदादौ सत्त्वात् तस्य पर्वतपक्षकवह्न्यादिसाध्यक-धूमादिहेतुकस्थले दोषतापत्तिरित्याशयः ।

अनुमितिपदस्य प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकनिश्चयोत्तरजायमान-प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमिति-

❀ कलाविलासः ❀

ननु अनुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तनिवेशोऽपि उदासीने-तिव्याप्तिवारणमशक्यं वह्न्यभावजलोभयवान् ह्रद इत्याकारकज्ञानीयोभयत्वावच्छिन्न-प्रकारताया ऐक्येन ह्रदधर्मिकवह्न्यभावत्वावच्छिन्नप्रकारतात्वेन प्रकृतानुमितिप्रति-बन्धकतावच्छेदकतया तदाश्रयत्वस्य जलादौ सत्त्वादिति चेन्न, तादृशातिव्याप्तिवार-णाय प्रकृतानुमितिप्रतिबन्धकतावच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नविषयताश्रयत्वस्यैव विवक्षणीयत्वादितिध्येयम् ।

प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकमिति । अत्र प्रकृतहेतुकत्वनिवेशो निरर्थक इति तु नाशंकनीयम्, तदनुपादाने पर्वतो वह्निमान् महानसीयवह्नीतर-वह्न्यभाववत्पर्वतकालीनधूमादित्यादौ महानसीयवह्न्यभाववत्पर्वतरूपबाधेऽव्याप्त्या-पत्तेस्तादृशबाधनिश्चयस्य प्रकृतपक्षसाध्यकपर्वतधर्मिकवह्न्यनुमितिं प्रत्यप्रतिबन्ध-कत्वात् । तदुपादाने तु नियमत इतरबाधस्थले वह्निमहानसीयवह्निविषयकसमूहा-

❀ गादाधरी ❀

तथाच व्यभिचारादावव्याप्तिः, वह्निर्धूमव्यभिचारीतिज्ञानाभावस्य पर्वतः धूमवानित्यनुमित्यजनकत्वात्, लक्षणया तस्य तादृशानुमितिजनकज्ञानमात्र-परत्वे च बाधादावव्याप्तिः, बाधादिज्ञानस्य परामर्शाऽप्रतिबन्धकत्वादतः

❀ चन्द्रकला ❀

परत्वेऽपि न निस्तार इत्याह तथाचेति। अनुमितिपदस्य प्रकृतपक्षसाध्यहेतु-कानुमितिपरत्वेऽपि चेत्यर्थः। व्यभिचारादाविति। आदिपदात् विरोधादि-परिग्रहः। अव्याप्तौ हेतुमाह वह्निरिति। वह्निधूमाभावाधिकरणवृत्तितावानित्या-दिनिश्चयाभावस्येत्यर्थः।

अनुमित्यजनकत्वादिति। तथाच पर्वतो धूमवान् वह्नेरित्यादौ धूमाभाव-वद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिः स्यात यद्यनुमितिपदं प्रकृतपक्षसाध्य-हेतुकानुमितिपरं स्यात्, तत्प्रकारकबुद्धौ तदभावनिश्चयस्यैव प्रतिबन्धकतया धूमाभाववद्वृत्तित्वविशिष्टवह्निनिश्चयस्य धूमाभाववद्वृत्तिवह्निरूपव्याप्तिज्ञानप्रति-बन्धकताया आवश्यकतया प्रकृतपक्षीभूतपर्वतधर्मिकधूमानुमित्यप्रतिबन्धकत्वात् निरुक्तव्यभिचारनिश्चयाभावस्य यथाविवक्षितानुमितिकारणीभूताभावपदेन धर्त्तु-मशक्यत्वादितिभावः।

ननु अत्रानुमितिपदं प्रकृतपक्षसाध्यकानुमितिकारणीभूतपरामर्शे लाक्षणिकमेवेति न व्यभिचारादावव्याप्तिः। पर्वतो धूमवान् वह्नेरित्यादौ तादृशानुमितिकारणीभूते धूमाभाववद्वृत्तित्वविशिष्टवह्निमान् पर्वत इत्याकारकपरामर्शे धूमाभाव-वद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारनिश्चयस्य तदभावप्रकारकनिश्चयमुद्रया प्रतिबन्धकत्वेन निरुक्तव्यभिचारज्ञानाभावस्य अनुमितिपदार्थीभूतयथोक्तपरामर्शं प्रति जनकत्वसम्भवादित्यत आह लक्षणयेति। प्रकृतपक्षोद्देश्यकप्रकृतसाध्य-विधेयकनिश्चये अनुमितिपदस्य शक्ततया लक्षणयेत्युक्तमितिध्येयम्।

तस्य = निरुक्तलक्षणघटकीभूतानुमितिपदस्य। तादृशेति। प्रकृतपक्षसाध्य-हेतुकानुमितिकारणपरामर्शमात्रपरत्वे इत्यर्थः। मात्रपदात् तस्य प्रकृतपक्षसाध्यकानु-मितिपरत्वव्यवच्छेदः। बाधादाविति। आदिना सत्प्रतिपक्षपरिग्रहः। अव्याप्ति-मुपपादयति बाधादीति। बाधादिनिश्चयात्मकयथार्थज्ञानस्येत्यर्थः।

परामर्शाऽप्रतिबन्धकत्वादिति। ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाव-विशिष्टह्रदरूपबाधनिश्चयस्य ह्रदधर्मिकवह्निप्रकारकबुद्धावेव प्रतिबन्धकतया ह्रदधर्मिकवह्न्यनुमितिकारणीभूतवह्निव्याप्यधूमवान्ह्रद इत्याकारकपरामर्शं प्रति ग्राह्याभावानवगाहित्वेनाप्रतिबन्धकत्वात् तादृशबाधादिनिश्चयस्य अनुमिति-प्रतिबन्धकयथार्थज्ञानत्वेनोपादानाऽसम्भवादिति भावः। अतः =

❀ दीधितिः ❀

तत्राऽनुमितिपदम् अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनाऽनुमिति—तत्कारणज्ञानपरम् ।

❀ गादाधरी ❀

अनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे—तत्रेति । तादृशलक्षणवाक्य इत्यर्थः । लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेति । अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति, अतो न वक्ष्यमाणाऽतिप्रसङ्गः।

❀ चन्द्रकला ❀

निरुक्ताव्याप्त्यादिदोषतः । अनुमितिपदमिति । लक्षणघटकीभूतेत्यादिः । अजहत्स्वार्थेति । अपरित्यक्तानुमितिपदार्थलक्षणयेत्यर्थः । तदुभयपरतया = प्रकृतपक्षसाध्यहेतुकानुमितितत्कारणपरामर्शोभयपरतया । व्याचष्ट इति । तथाच यथा काकेभ्यो दधि रक्ष्यतामित्यादौ सर्वतो दधिरक्षाया आवश्यकत्वात् दध्युपघातकत्वेन रूपेण काकपदं काकाकाके लाक्षणिकं तथाऽत्राप्यनुमितिपदं प्रकृतपक्षसाध्यकानुमितिनिष्ठकार्यतानिरूपकसम्बन्धवत्त्वेन रूपेण तादृशानुमिति-तत्कारणपरामर्शोभयस्मिन् लाक्षणिकमेव, तथा सति न बाधादौ नवा व्यभिचारादावव्याप्तिः, बाधादिनिश्चयस्य प्रकृतपक्षसाध्यकानुमितौ व्यभिचारादिनिश्चयस्य च निरुक्तानुमितिकारणीभूतपरामर्शप्रतिबन्धकतया तादृशनिश्चयविषयत्वस्य बाधादौ सत्त्वादिति भावः ।

तादृशलक्षणेति । अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमित्याकारकलक्षणवाक्य इत्यर्थः । येन रूपेण लक्षणा भवति तद्रूपं लक्षणाघटकतावच्छेदकमित्याह लक्षणेति । उभयसाधारणम् = प्रकृतानुमितितत्कारणपरामर्शोभयस्मिन् वर्त्तमानम् । अनुगतरूपम् = अनुगतं धर्ममाह दीधितिकार इति शेषः ।

अनुमितीति । प्रथमलक्षणादिघटकीभूतेत्यादिः । स्वयमेव = दीधितिकारः एव । वक्ष्यमाणेति । पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदे वक्ष्यमाणातिव्याप्तिरित्यर्थः । निरुक्तानुमितिसामान्यप्रतिबन्धकयथार्थज्ञानविवक्षया न वक्ष्यमाणातिव्याप्तिः सम्भवतीति हृदयम् ।

❀ कलाविलासः ❀

-लम्बनानुमितेरेवोत्पादात् तादृशहेतुप्रकारकनिश्चयोत्तरानुमितिपदेन महानसीयवह्न्यनुमितेरपि धर्त्तुं शक्यतया तद्विरोधित्वस्य निरुक्तबाधे सत्त्वान्नाव्याप्तिः ।

❀ गादाधरी ❀

**निरूपकत्वं चाऽत्र यदि प्रतियोगित्वं, तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसंग्रहः, अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य**

❀ चन्द्रकला ❀

निरूपकत्वमित्यादि। प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यतानिरूपकसम्बन्धित्वेनेत्यत्र निरूपकत्वं च यदीत्यर्थः। कार्यस्य = प्रकृतानुमितिरूपकार्यस्य। कार्यतेति। कार्यताप्रतियोगित्वस्य प्रकृतानुमितिकारणीभूतपरामर्श एव वर्त्तमानत्वादित्याशयः। अनुमित्यसंग्रह इति। तथाच प्रकृतपक्षसाध्यहेतुकानुमितेस्तादृशानुमितिनिष्ठकार्यतानिरूपकप्रतियोगित्वरूपसम्बन्धवत्त्वेनोपादानाऽसम्भवाद् बाधसत्प्रतिपक्षादावव्याप्तिः; बाधादिनिश्चयस्य तादृशकार्यताप्रतियोगिपरामर्शाप्रतिबन्धकत्वात्, तस्य प्रकृतपक्षसाध्यकानुमितिं प्रत्येव प्रतिबन्धकत्वादिति भावः।

अतः = कार्यतानिरूपकसम्बन्धवत्त्वेन प्रकृतानुमितेरसंग्रहतः। सम्बन्धिपदमिति। निरूपकपर्यन्तोपादानेनोपपत्तावित्यादिः। सम्बन्धीति। कार्यतारूपसम्बन्धस्य सम्बन्धि यत् प्रकृतानुमिति-तत्कारणपरामर्शद्वयम्, तत्र वर्त्तमानस्येत्यर्थः।

❀ कलाविलासः ❀

वस्तुतस्तु तद्धेतुकानुमितौ तद्धेतुकव्यभिचारज्ञानाभावस्य प्राचीनमते कारणतया व्यभिचारसंग्रहायैव तदुपादानम्, नव्यमते च तादृशकार्यकारणभावे मानाभावेन तन्मताभिप्रायेणैव व्यभिचारादावव्याप्तिरित्युक्तं भट्टाचार्येणेति संक्षेपः।

अतः सम्बन्धिपदमित्यादि। अत्र कल्पे द्वितीयसाक्षात्कारपदाऽनुपादाने प्रकृतानुमितिनिष्ठकार्यतासाक्षात्कारजनकीभूतं यत् तद्विषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वविवक्षणे यादृशस्थले पर्वतः वह्निमानित्याकारकानुमितित्वेन घटवद्भूतलावगाहिज्ञानस्य साक्षात्कारो जातस्तादृशस्थले निरुक्तभ्रमात्मकसाक्षात्कारस्यापि प्रकृतानुमितिनिष्ठकार्यतासाक्षात्कारजनकतया तद्विषयघटवद्भूतलज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषये घटाभाववद्भूतलेऽतिव्याप्तिः। तदुपादाने तु यद्रूपावच्छिन्नविषयताशालिसाक्षात्कारत्वव्यापकं निरुक्तानुमितिनिष्ठकार्यतासाक्षात्कारजनकत्वं तद्रूपाश्रयग्रहनिष्ठप्रतिबध्यतेत्यादिनिवेशान्न दोषः, पर्वतो वह्निमानित्याकारकानुमितित्वाश्रयानुमितिप्रतिबन्धकयथार्थज्ञानविषयस्याप्रसिद्धत्वात्।

एवञ्च यदि प्रथमसाक्षात्कारपदं न दीयते तदा पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिः प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यतावती घटवद्भूतलविषयकज्ञानात् इत्याकारिका या कार्यताविषयकानुमिति-

❀ गादाधरी ❀

तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय ।

❀ चन्द्रकला ❀

तत्साक्षात्कारेति। कार्यतारूपसम्बन्धसाक्षात्कारजनकीभूतो योऽनुमितिसाक्षात्कारः परामर्शसाक्षात्कारश्च तद्विषयतात्मकनिरूपकत्वस्य लाभायेत्यर्थः। सम्बन्धसाक्षात्कारं प्रति प्रतियोग्यनुयोगिरूपसम्बन्धिद्वयसाक्षात्कारो हेतुः, भूतलप्रत्यक्षं घटप्रत्यक्षञ्च विना भूतलघटयोः संयोगस्य प्रत्यक्षानुदयात्, एवञ्च प्रकृतपक्षसाध्यकानुमिति-निष्ठकार्यतारूपसम्बन्धसाक्षात्कारं प्रत्यपि तादृशकार्यतासम्बन्धप्रतियोगिपरामर्श-प्रत्यक्षस्य तादृशसम्बन्धानुयोग्यनुमितिप्रत्यक्षस्य प्रकृतपरामर्शवानहं प्रकृतानुमिति-माँश्चाहमित्याकारकस्य जनकतया तादृशकार्यतासम्बन्धप्रत्यक्षजनकीभूतनिरुक्त-सम्बन्धिप्रत्यक्षविषयताया अनुमितौ परामर्शे च सत्त्वात् प्रकृतपक्षसाध्यहेतुकानु-मितित्वावच्छिन्नकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपित-प्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमित्यस्यैव लक्षणार्थस्य पर्य-वसिततया न बाधादौ न वा व्यभिचारादावव्याप्तिरिति तु परमार्थः ।

ननु अनुमितिपदस्याऽजहत्स्वार्थलक्षणया प्रकृतानुमितितत्कारणोभयपरत्वे प्रकृतानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरूपित-प्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्यैव लक्षणार्थतया सर्वत्र लक्षणसमन्वय-सम्भवाद्व्याप्त्याद्यसम्भवे साध्यव्याप्येत्यादिनानुमितिपदस्य प्रकृतपक्षविशे-ष्यकप्रकृतसाध्यप्रकारकप्रकृतसाध्यव्याप्यहेतुप्रकारकसमूहालम्बनानुमितिपरत्वाभि-धानं दीधितिकृतामनुचितमित्यतः पर्यवसितनिरुक्तलक्षणेऽतिव्याप्तिरूपदोषमाहा-त्रेति। अनुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरू-पितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वार्थकप्रथमलक्षण इत्यर्थः ।

❀ कलाविलासः ❀

स्तज्जनको यः कार्यत्वव्याप्यघटवद्भूतलविषयकज्ञानवती तादृशानुमितिरित्या-कारकालौकिकसाक्षात्कारात्मकः परामर्शस्तद्विषयघटवद्भूतलज्ञाननिष्ठप्रतिबध्यता-निरूपितप्रतिबन्धकताशालि यद् घटाभाववद्भूतलमिति यथार्थज्ञानं तद्विषये घटाभाववद्भूतलेऽतिप्रसंगः स्यात् ।

यद्रूपावच्छिन्नविषयताशालिसाक्षात्कारत्वव्यापिका निरुक्तजनकता तद्रूपाश्रयग्रहनि-ष्ठप्रतिबध्यतेत्यादिनिवेशेऽपि पर्वतो वह्निमान् इत्यनुमितिः परामर्शकार्या तादृशानुमित्य-नुयोगिककालिकसम्बन्धेन घटवद्भूतलविषयकज्ञानादित्यनुमितिमादाय तद्दोषो बोध्यः, यद्रूपपदेन पक्षवृत्तिसाध्यव्याप्यहेतुतावच्छेदकधर्मस्य धर्तुं शक्यतया तादृशानुमिति-वृत्तिपरामर्शकार्यताव्याप्यघटवद्भूतलज्ञानत्वावच्छिन्नसाक्षात्कारत्वव्यापकताया निरुक्त-कार्यताविषयकानुमितिजनकतायां सत्त्वात् ।

❀ गादाधरी ❀

अत्र पर्वतो वह्निमान् ह्रदश्च तथेत्यादिसमूहालम्बनानुमित्यादिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने

❀ चन्द्रकला ❀

तथा = वह्निमान् । इत्यादीति इत्याद्याकारकसमूहालम्बनानुमितिप्रतिबन्धकयथार्थज्ञानविषयीभूतह्रदनिष्ठवह्न्यभावादिरूपह्रदपक्षकवह्निसाध्यकस्थलीय - बाधादेरित्यर्थः । आदिना ह्रदादिनिष्ठवह्न्यभावव्याप्यादिरूपसत्प्रतिपक्षपरिग्रहः । पर्वतादाविति । आदिपदात् महानसादिपरिग्रहः । धूमादिनेति । आदिनेन्धनादिपरिग्रहः । वह्न्यादिसाधने = वह्न्याद्यनुमितौ । आदिना आलोकपरिग्रहः ।

❀ कलाविलासः ❀

वस्तुतस्तु धर्मसम्बन्धसाधारणैकावच्छेदकत्वविरहेण कार्यताविषयकत्वनिष्ठधर्मविधया यदवच्छेदकत्वं तन्निरूपितजन्यतानिरूपितजनकतानिरूपितं यद् धर्मविधयावच्छेदकत्वं तदाश्रयविषयताश्रयग्रहघटितलक्षणार्थनिर्वचने यादृशस्थलविशेषे तद्व्यक्तित्वेन प्रतियोगिसाक्षात्कारस्तद्व्यक्तित्वेनानुयोगिसाक्षात्कारश्च प्रमात्मक एव भवति, तदनन्तरं कार्यतासाक्षात्कारोऽपि तादृशप्रमात्मक एव जायते, तादृशस्थलविशेषे लाघवाद् विषयितासम्बन्धेन तद्व्यक्तिविशिष्टसाक्षात्कारं प्रति विषयितासम्बन्धेन तद्व्यक्तिविशिष्टसाक्षात्कारत्वेनैव कारणत्वं वाच्यम्, एवञ्च कार्यताविषयकत्वस्य तादृशस्थले धर्मविधया अवच्छेदकत्वविरहेणाऽव्याप्तिः स्यादतस्तादृशकार्यताविषयकसाक्षात्कारत्वव्यापकजन्यतानिरूपितजनकत्वं यद्विषयकसाक्षात्कारत्वव्यापकं तत्त्वमर्थो वक्तव्यस्तथाच साक्षात्कारत्वपर्यन्तानुक्तौ कार्यताविषयकत्वादेरनुमितिशाब्दबोधादौ सत्त्वादसम्भवः स्यादिति ध्येयम् ।

नच कार्यताप्रतियोगित्वानुयोगित्वान्यतरवद्ग्रहनिष्ठप्रतिबध्यतानिवेशेनैवोपपत्तौ साक्षात्कारपदद्वयघटितलक्षणार्थाभिधानमसंगतमिति वाच्यम्, अन्यतरत्वस्य भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपतया लाघवानवकाशात् ।

नच भवन्मते जन्यत्वजनकत्वयोः प्रवेशात् ततो गौरवमिति वाच्यम्, तयोः स्वरूपसम्बन्धरूपत्वाभ्युपगमात् ।

नच जन्यत्वजनकतावच्छेदकत्वयोरनतिरिक्तवृत्तित्वरूपतायाः आवश्यकतया भवन्मते लाघवानवकाश इति वाच्यम्, व्यवहारं प्रति व्यवहर्तव्यज्ञानस्य कारणत्वेन दोषव्यवहारे निरुक्तलक्षणज्ञानस्य कारणताया वारयितुमशक्यतया तादृशान्यतरत्वघटकभेदयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्तेः।

एतेन स्वनिरूपितकारणत्व-स्वरूपान्यतरसम्बन्धेन कार्यताविशिष्टग्रहनिष्ठप्रतिबध्यतैव लाघवान्निवेशनीयेति पूर्वपक्षोऽपि निरस्त इति ध्येयम् ।

❀ गादाधरी ❀

दोषताप्रसङ्गः, प्रकृतानुमितिनिष्ठकार्यतासम्बन्धिग्रहत्वस्य कस्यापि प्रतिब-

❀ चन्द्रकला ❀

दोषताप्रसंग इति। तथाच प्रकृतानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहनिष्ठप्रतिबध्यतानिरुपितप्रतिबन्धकतावद्यथार्थज्ञानविषयत्वमिति लक्षणे पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादावतिव्याप्तिः, पर्वतो वह्निमान् ह्रदश्च वह्निमानित्याकारकसमूहालम्बनानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयनिरुक्तसमूहालम्बनानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावतो वह्न्यभाववद्ध्रदादिनिश्चयस्य विषयताया वह्न्यभाववद्ध्रदादौ सत्त्वादिति भावः।

ननु प्रकृतपक्षसाध्यहेतुकानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे नोक्तातिव्याप्तिः, वह्न्यभाववद्ध्रदनिश्चयप्रतिबध्यताया ह्रदधर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नतया तादृशप्रत्यक्षविषयताश्रयग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः वन्ह्यभावविशिष्टह्रदनिश्चये विरहादित्याशंकते—प्रकृतेति।

पक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतुकानुमितित्वावच्छिन्नकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वस्येत्यर्थः।

कस्यापीति। बाधादिनिश्चयस्येत्यर्थः। तथाच प्रकृतानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता—

❀ कलाविलासः ❀

तथाच प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यतासम्बन्धविशिष्टग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं लक्षणार्थः, वैशिष्ट्यं स्वविषयकसाक्षात्कारत्वव्यापकजन्यतानिरुपितजनकतावत्त्वसम्बन्धेन। जनकतावत्त्वञ्च स्ववृत्तित्वसम्बन्धेन, वृत्तित्वमपि स्वनिष्ठविषयतानिरूपकसाक्षात्कारत्वव्यापकत्वसम्बन्धेन।

न च हेतुतावच्छेदकावच्छिन्नपरामर्शाव्यवहितोत्तरजायमानत्वार्थकप्रकृतहेतुकत्वदलप्रवेशो निरर्थक इति वाच्यम्, तथा सति पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभाववद्वृत्तिद्रव्येऽतिव्याप्त्यापत्तेरिति ध्येयम्।

अथ धूमालोकादिपरामर्शानां प्रत्येकजन्यानुमितौ व्यभिचारवारणाय तत्तत्परामर्शाव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशनीयतया तत्तत्परामर्शाव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव तत्तत्परामर्शत्वेन कारणत्वसम्भवे प्रकृतपक्षसाध्यकानु-

❀ गादाधरी ❀

ध्यतानवच्छेदकतया तद्वच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशाऽसम्भवात् । तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चाऽनुमित्यविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाऽव्याप्तिः,

❀ चन्द्रकला ❀

शालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वविवक्षणे निरुक्तातिव्याप्तिवारणेऽपि सर्वत्राऽसम्भवः स्यात्, तदभावनिश्चयनिरूपितप्रतिबध्यतायाः तत्प्रकारकबुद्धित्वावच्छिन्नतया कस्यापि बाधव्यभिचारादेर्निश्चयस्य प्रतिबध्यतायाः तादृशग्रहत्वावच्छिन्नत्वाऽसम्भवात् तादृशग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य कुत्रापि दोषादावुपपादयितुमशक्यत्वादिति भावः ।

तदवच्छिन्नेति तादृशग्रहत्वावच्छिन्नार्थकम् । तथाच पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावविशिष्टहृदादेर्दोषताप्रसंगोऽस्तीति हृदयम् ।

ननु तथापि नेयमतिव्याप्तिः प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वविवक्षणात् । तादृशविषयताश्रयग्रहत्वस्य समूहालम्बनात्मिकायां केवलपर्वतो वह्निमानित्याकारिकायामनुमितावपि वर्त्तमानतया तत्र वह्न्यभाववद्ह्रदनिश्चयप्रतिबध्यताया विरहेण वह्न्यभाववद्ह्रदनिश्चयप्रतिबध्यतायास्तादृशग्रहत्वाऽव्यापकत्वात् यन्निश्चयप्रतिबध्यत्वं तादृशग्रहत्वव्यापकं तन्निश्चयविषयस्यैव दोषत्वादित्याह तथाविधेति । प्रकृतानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वार्थकम् । अनुमित्यविरोधिनि = केवलपक्षधर्मिकसाध्यप्रकारकव्याप्त्याद्यविषयकानुमितिप्रतिबन्धकयथार्थज्ञानविषयीभूते । व्यभिचारादाविति । आदिना विरोधादिपरिग्रहः । परामर्शेति । साध्यवत्पक्षाद्यविषयकपरामर्शप्रतिबन्धकतानवच्छेदकविषयताश्रयीभूते इत्यर्थः । बाधादाविति । आदिना सत्प्रतिपक्षादिपरिग्रहः ।

अव्याप्तिरिति । तथाच तादृशप्रत्यक्षविषयताश्रयग्रहत्वस्य केवलपक्षविशेष्यकसाध्यप्रकारकानुमितावपि सत्त्वेन तत्र साध्याभाववद्वृत्तित्वविशिष्ट-

❀ कलाविलासः ❀

मितिरवस्य कार्यतावच्छेदकत्वाऽप्रसिद्ध्या लक्षणमिदमसम्भवीति चेन्न, यत्र प्रथमं भाविज्ञानं धूमाभाववति धूमप्रकारकमित्यप्रामाण्यज्ञानं ततो वह्निव्याप्यधूमवान् घटव्याप्यपटवांश्च पर्वत इत्याकारकसमूहालम्बनपरामर्शस्ततो घटानुमितिस्ततो वह्न्यनुमितिस्तत्र घटानुमितेरप्युक्तकार्यतावच्छेदकाक्रान्ततया तत्पूर्वम-

❀ दीधितिः ❀

**साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारानुमितिपरं वा।**

❀ गादाधरी ❀

**उभयविरोधिपक्षाऽप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वादतः कल्पान्तरमाह साध्यव्याप्येति ।**

❀ चन्द्रकला ❀

हेत्वादिरूपव्यभिचारनिश्चयप्रतिबध्यतायाः तादृशविषयताश्रयग्रहत्वस्य केवलपरामर्शेऽपि वर्त्तमानतया तत्र च साध्याभाववत्पक्षादिरूपबाधादिनिश्चयप्रतिबध्यतायाश्च विरहेण व्यभिचारबाधादिनिश्चयप्रतिबध्यतायाः तादृशविषयताश्रयग्रहत्वाऽव्यापकतया यथार्थज्ञानात्मकनिश्चयपदेन व्यभिचारबाधादिनिश्चयस्योपादानाऽसम्भवाद् भवति बाधादावव्याप्तिरित्याशयः ।

ननु प्रकृतानुमितिनिष्ठकार्यताप्रत्यक्षजनकप्रत्यक्षविषयताश्रयग्रहत्वव्यापकप्रतिबध्यताघटितस्य लक्षणार्थत्वेऽसम्भवसम्भवे व्यभिचारबाधादावव्याप्तिदानमनुचितमित्यत आहोभयेति । अनुमिति-तत्कारणोभयप्रतिबन्धकीभूतयथार्थज्ञानविषयपक्षतावच्छेदकाभाववत्पक्षरूपपक्षाप्रसिद्ध्यादावेवेत्यर्थः । आदिपदात् साध्यतावच्छेदकाभाववत्साध्यरूपसाध्याप्रसिद्धिपरिग्रहः ।

तादृशेति । तादृशविषयताश्रयग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य सत्त्वादित्यर्थः । तादृशग्रहत्वव्यापकप्रतिबध्यताघटितस्य लक्षणार्थत्वे पूर्वोक्तक्रमेण व्यभिचारबाधादावव्याप्तिरेव नत्वसम्भवः, काञ्चनमयपर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्धौ काञ्चनमयत्वाभाववद्वह्निरूपसाध्याप्रसिद्धौ च लक्षणसमन्वयसम्भवात् निरुक्ताश्रयासिद्ध्यादिनिश्चयप्रतिबध्यताया अनुमितौ अनुमितिकारणीभूते परामर्शेऽपि सत्त्वेन यथोक्तनिश्चयप्रतिबध्यतायां तादृशविषयताश्रयग्रहत्वव्यापकत्वस्याक्षतत्वात् , अनुमितेः परामर्शस्य च पक्षतावच्छेदकविशिष्टपक्षादिविषयकत्वादिति भावः ।

अतः = पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादेर्दोषताप्रसंगतः।

❀ कलाविलासः ❀

प्रामाण्यज्ञानानास्कन्दित वह्निव्याप्यधूमवत्तानिश्चयरूपकारणविरहेण व्यभिचारः स्यादतः पक्षसाध्यविषयिताया: कार्यतावच्छेदककोटौ निवेशनीयतया असम्भवानवकाशात् यद्यदप्रामाण्यज्ञानव्यक्तिसत्त्वे परामर्शसत्त्वेऽनुमितिर्न जायते तत्तदप्रामाण्यज्ञानस्योत्तेजकताया विवक्षणे महागौरवं स्यादित्यास्तां विस्तरः ।

कल्पान्तरमाहेति । ननु स्वावच्छेदकत्व-स्वनिरूपितकारणतावच्छेदकत्वा-

❀ गादाधरी ❀

प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नतद्व्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः। एवं च समूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारादिज्ञानप्रतिबध्यत्वान्न व्यभिचाराद्यसङ्ग्रहः। दर्शितसमूहालम्बनानुमितिप्रतिबन्धकतामादायाऽतिप्रसङ्गवारणाय सामान्यपदम्। तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं

❀ चन्द्रकला ❀

प्रकृतेति। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारता प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तित्वावच्छिन्न - प्रकारतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताकानुमितिसामान्येच्छया लक्षणघटकीभूतमनुमितिपदमुच्चरितमित्यर्थः।

अव्याप्त्यादिकं वारयितुमाह एवञ्चेति। अनुमितिपदस्य निरुक्तानुमितिसामान्यपरत्वाभिधाने चेत्यर्थः। तादृशेति। पक्षः साध्यवान् साध्यव्याप्यहेतुमानित्याकारकानुमितेरित्यर्थः। व्याप्त्यादीति। व्याप्त्यवच्छिन्नहेतुप्रकारकतया साध्यप्रकारकतया चेत्यर्थः। व्यभिचारेति। व्यभिचारबाधादिविषयकयथार्थज्ञानप्रतिबध्यत्वादित्यर्थः। न व्यभिचाराद्यसंग्रहः=न व्यभिचारबाधादावव्याप्तिरसम्भवो वा।

सामान्यपदप्रयोजनमाह दर्शितेति। पर्वतो वह्निमान् ह्रदश्च तथा वह्निव्याप्यधूमवांश्चेत्याकारकसमूहालम्बनानुमितिप्रतिबन्धकतामादायेत्यर्थः। अतिप्रसंगवारणाय = पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले वह्न्यभावविशिष्टह्रदादावतिव्याप्तिवारणाय।

ननु सामान्यपदोपादानात् कथं नातिव्याप्तिरित्यत आह तथाचेति। सामान्यपदोपादाने चेत्यर्थः। तादृशानुमितित्वेति। प्रकृतपक्षविशेष्यक-

❀ कलाविलासः ❀

न्यतरसम्बन्धेन तादृशानुमितित्वावच्छिन्नकार्यताविशिष्टा या विषयिता तदवच्छिन्नप्रतिबध्यतानिरूपितेत्यादिरीत्या लक्षणार्थनिर्वचने न पूर्वोक्तातिव्याप्तिः। वह्न्यभावविशिष्टह्रदनिश्चयप्रतिबध्यतायाः पर्वतधर्मिकवह्न्यनुमितिनिष्ठकार्यताविशिष्टविषयित्वानवच्छिन्नत्वात्।

न वा बाधव्यभिचारादावव्याप्तिर्बाधादिनिश्चयप्रतिबध्यतायाः पक्षधर्मिकसाध्यानुमितित्वावच्छिन्नकार्यताविशिष्टविषयित्वावच्छिन्नत्वादिति चेन्न, अन्यतरत्वस्याऽखण्डस्यासत्त्वे गौरवस्य पूर्वं प्रदर्शितत्वात् इति तु विभावनीयम्।

तथाच तादृशानुमितित्वव्यापकेति। अथ पदार्थान्तराविषयकनिरुक्त-

❀ गादाधरी ❀

पर्यवसितार्थः । एवं च साध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ ह्रदो न वह्निमानित्यादिनिश्चयस्याऽप्रतिबन्धकत्वान्नातिप्रसङ्गः ।

❀ चन्द्रकला ❀

प्रकृतसाध्यप्रकारकप्रकृतसाध्यव्याप्यहेतुप्रकारकसमूहालम्बनानुमितित्वार्थकम् । पर्यवसितोऽर्थइति । लक्षणस्येत्यादिः। जिज्ञासानिवृत्तये त्वाह साध्यतेति । प्रकृतेत्यादिः। नातिप्रसङ्ग इति । तथा च पक्षः साध्यवान् साध्यव्याप्याहेतुमाँश्चेत्याकारकसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे न पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादावतिव्याप्तिः, पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितित्वस्य वह्निमद्ध्रदाद्यविषयककेवल-पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेत्याकारकानुमितावपि सत्त्वेन तत्र वह्न्यभावविशिष्टह्रदादिनिश्चयप्रतिबध्यताविरहेण वह्न्यभाववद्ध्रदनिश्चयप्रतिबध्यत्वस्य पर्वतो वह्निमान् वह्निव्याप्यधूमवाँश्चेत्याकारकसमूहालम्बनानुमितित्वाऽव्यापकत्वात्, यथार्थज्ञानपदेन वह्न्यभावविशिष्टह्रदविषयकनिश्चयस्योपादातुमशक्यत्वादिति भावः ।

❀ कलाविलासः ❀

समूहालम्बनयत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमित्युक्तावेव पदार्थान्तरविषयकताद्दशानुमितिमादायोदासीने ऽतिव्याप्तिवारणसम्भवे ताद्दशानुमितित्वव्यापकप्रतिबध्यत्वनिवेशनमनुचितमिति चेन्न, याद्दशस्थले ह्रदो वह्निमान् वह्निव्याप्यधूमवाँश्च ह्रद इत्याकारिकानुमितिः कदाचिद् घटवद्भूतलविषयिणी कदाचिच्च पटवद्भूतलविषयिणी नियमतो भवति, नतु ताद्दशाऽन्यतरावगाहित्वं परित्यज्य भवति, ताद्दशस्थले घटाद्यभाववद्भूतलादावतिव्याप्त्याऽऽपत्तेः, निरुक्तान्यतरावगाहि-अनुमितिव्यक्तिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य घटाद्यभाववद्भूतलादिनिश्चये सत्त्वात् ।

व्यापकत्वस्य निवेशे तु न तत्राऽतिव्याप्तिः ताद्दशानुमितित्वस्य पटवद्भूतलादिविषयकानुमितावपि सत्त्वेन तत्र घटाद्यभाववद्भूतलादिनिश्चयप्रतिबध्यत्वविरहात् निरुक्तानुमितित्वव्यापकताया घटाद्यभाववद्भूतलादिनिश्चयप्रतिबध्यतायामसत्त्वात् ।

❀ गादाधरी ❀

बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिषु अव्याप्तिवारणाय प्रकृत-पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः। द्रव्यत्वादिना ह्रदादि-विशेष्यकानुमितौ तथाविधबाधनिश्चयस्याऽप्रतिबन्धकत्वात्तद्दोषतादव-स्थ्यमतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम्।

❀ चन्द्रकला ❀

ननु केवलसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकानुमितिसामान्यप्रतिबन्धकत्वं-घटितमेव लक्षणमुच्यतामनुमितौ पक्षविशेष्यकत्वनिवेशो निरर्थक इत्यत आह बाधेति।

तथाचानुमितौ पक्षविशेष्यकत्वाऽविवक्षणे ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधे वह्न्यभावव्याप्यविशिष्टह्रदरूपसत्प्रतिपक्षे धूमाभाव-विशिष्टह्रदात्मकस्वरूपासिद्धौ काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ काञ्चन-मयत्वाभावविशिष्टपर्वतरूपाश्रयासिद्धौ चाव्याप्तिः, साध्यप्रकारकसाध्यव्याप्यहेतु-प्रकारकानुमितित्वस्य जलं वह्निमद् वह्निव्याप्यधूमवच्चेत्याकारकानुमितावपि सत्त्वेन तत्र तादृशबाधादिनिश्चयप्रतिबध्यत्वविरहे पक्षविशेष्यकत्वाघटितानुमितित्व-व्यापकत्वस्य निरुक्तबाधादिनिश्चयप्रतिबध्यतायामसत्त्वात्, यन्निश्चयप्रतिबध्यत्वं तादृशसाध्यादिप्रकारकानुमित्वव्यापकं तन्निश्चयविषयस्यैव दोषत्वादिति हृदयम्।

ननु तथापि पक्षनिष्ठविशेष्यताकत्वस्यानुमितौ विवक्षणे नोक्ताव्याप्तिः, जलादेः पक्षानात्मकतया तद्विशेष्यकानुमितौ साध्यादिप्रकारकानुमितित्वाऽसम्भवा-दित्यत आह द्रव्यत्वादिनेति।

आदिपदात् प्रमेयत्वादिपरिग्रहः। तथाविधेति। वह्न्यभावविशिष्टह्रदादि-रूपबाधादिनिश्चयस्येत्यर्थः। तद्दोषतेति। बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रया-सिद्धिष्वव्याप्तितादवस्थ्यमित्यर्थः।

❀ कलाविलासः ❀

बाधसत्प्रतिपक्षेति। ननु असाधारण्येऽप्यव्याप्तिः, साध्यव्यापकीभूताभाव-प्रतियोगिहेतुरूपाऽसाधारण्यनिश्चयस्य पक्षधर्मिकहेतुमत्त्वज्ञानसहकारेणैव प्रकृतपक्षधर्मिकप्रकृतसाध्यानुमितिप्रतिबन्धकत्वादिति तत्राऽव्याप्तिपरित्यागः निर्युक्तिकः। नच प्रकृतपक्षविशेष्यकत्वनिवेशेऽपि तत्राऽव्याप्तिरस्ति साध्य-व्यापकीभूताभावप्रतियोगिहेतुनिश्चयत्वस्य पक्षधर्मिकहेतुमत्त्वज्ञानाऽकालीनेऽपि तादृशनिश्चये सत्त्वात्, तत्राऽनुमितिप्रतिबन्धकत्वस्य विरहादिति वाच्यम्, यद्रूपावच्छिन्नविषयिताव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्व—पक्षधर्मिकहेतुमत्त्वा-ज्ञानकालीनत्वोभयाभावस्तद्रूपवत्त्वस्य विवक्षितत्वात्। भवन्मते वह्नि-

❀ चन्द्रकला ❀

पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वं विहाय पक्षविशेष्यकत्वमात्रस्यानुमितौ निवेशणेऽपि पूर्वोक्तबाधादावव्याप्तिः, ह्रदनिष्ठविशेष्यताकवह्निप्रकारकत्व वह्निव्याप्यधूमप्रकारकानुमितित्वस्य द्रव्यं वह्निमद् वह्निव्याप्यधूमवच्चेत्याकारकानुमितावपि वर्तमानतया तत्र वह्न्यभावादिविशिष्टह्रदादिनिश्चयप्रतिबध्यस्याऽसत्त्वात् यन्निश्चयपदेन निरुक्तबाधादिनिश्चयस्य धर्तुमशक्यत्वादिति भवति पूर्वोक्तबाधादावव्याप्तिरिति तात्पर्यम् ।

पक्षतावच्छेदकावच्छिन्नत्वं विशेष्यतायां न पक्षतावच्छेदकनिष्ठावच्छेदकताकत्वमपितु पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वरूपमेव । वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-

❀ कलाविलासः ❀

व्यापकीभूताभावप्रतियोगि जलं जलवांश्च ह्रद इत्याकारकनिश्चये प्रकृतपक्षाघटितानुमित्यप्रतिबन्धकत्व-पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वयोः द्वयोः सत्त्वेन तत्राव्याप्तिवारणाऽसम्भवादिति चेन्न, यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्व-असाधारण्यविषयिताशून्यत्वोभयाभावस्तद्रूपवत्त्वमित्युक्तौ असाधारण्येऽव्याप्तिशंकावतारासम्भवात्, यत्रासाधारण्याप्रसिद्धिस्तत्रापि भ्रमज्ञानीयासाधारण्यविषयितायाः प्रसिद्धिसम्भवादिति वदन्ति ।

नच द्वितीयदले प्रकृतपक्षस्य प्रवेशादेव स्वरूपासिद्ध्यादौ नाव्याप्तिरिति कथं तत्राव्याप्त्यभिधानमिति वाच्यम्, अनुमितौ प्रकृतपक्षकत्वस्य सकृन्निवेशाभिप्रायत एव तत्र तत्राव्याप्तेरभिहितत्वात् । तथाच पक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्यादिरीत्या लक्षणार्थस्य निर्वाच्यतया तद्घटकपक्षतावच्छेदकादेरप्रवेशे भवति स्वरूपासिद्ध्यादावव्याप्तिः । वैशिष्ट्यं स्वावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-स्वावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यव्याप्यहेतुप्रकारताकत्वोभयसम्बन्धेनेति ध्येयम् ।

अथवा साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टसाध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितिपरमनुमितिपदं, वैशिष्ट्यम् स्वनिरूपकज्ञानीयत्व—स्वनिरूपितविशेष्यतावच्छेदकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेनेति न कोऽपि दोषः ।

❀ गादाधरी ❀

अवच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम्, तेनाऽतेजस्वी पर्वतो वह्निमानित्यादौ विशिष्टपर्वतत्वादिमति वह्न्याद्यभावरूपबाधस्य, काञ्चनमयपर्वतो वह्निमानित्यादौ चाऽश्रयाऽसिद्धेः शुद्धपर्वतत्वावच्छिन्नपक्षकाऽनुमित्यविरोधित्वेऽपि नाऽसंग्रहः। एवमग्रेऽपि बोध्यम्।

❀ चन्द्रकला ❀

योगितावच्छेदकत्वसम्बन्धेन, स्वं विशेष्यत्वमित्याहावच्छेदकत्वञ्चेति। पक्षतावच्छेदकत्वञ्चेत्यर्थः।

तत्पर्याप्त्येति। पक्षतावच्छेदकतापर्याप्त्यधिकरणत्वमित्यर्थः। तेन = तत्पर्याप्त्यधिकरणत्वरूपस्य पक्षतावच्छेदकत्वस्य विवक्षणेन। अतेजस्वी = तेजःसामान्याभाववान्। विशिष्टेति। तेजःसामान्याभावविशिष्टपर्वतत्वावच्छिन्ने इत्यर्थः। पक्षाप्रसिद्धेः = काञ्चनमयत्वाभाववत्पर्वतरूपपक्षाऽप्रसिद्धेः। शुद्धेति। पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितिप्रतिबन्धकज्ञानाऽविषयत्वेऽपीत्यर्थः। नासंग्रहः = नाव्याप्तिः।

पक्षतावच्छेदकनिष्ठावच्छेदकताकविशेष्यताकत्वमात्रस्यानुमितौ निवेशे अतेजस्वी पर्वतो वह्निमानित्यत्र वह्न्यभावविशिष्टातेजस्विपर्वतरूपबाधे काञ्चनमयपर्वतो वह्निमानित्यत्र काञ्चनमयत्वाभावविशिष्टपर्वतरूपाऽश्रयासिद्धौ चाव्याप्तिः, पक्षतावच्छेदकनिष्ठावच्छेदकताकानुमितित्वस्य पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितावपि सत्त्वेन तत्र निरुक्तबाधादिनिश्चयप्रतिबध्यत्वस्य विरहात् पक्षतावच्छेदकनिष्ठविशेष्यताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानपदेन यथोक्तबाधाश्रयासिद्धिनिश्चयस्योपादानासम्भवादिति भावः।

❀ कलाविलासः ❀

तत्पर्याप्त्यधिकरणत्वमिति। नन्वत्रातेजस्वी पर्वतो वह्निमानित्यत्र वह्न्यभावव्याप्यवत्तादृशपर्वतरूपसत्प्रतिपक्षेऽप्यव्याप्तिसम्भवे तदनुक्तौ न्यूनतेति चेन्न।

सत्प्रतिपक्षत्वावच्छेदेनाव्याप्तिविरहात्, तत्राव्याप्तेरनभिहितत्वात्, तद्व्यक्तित्वव्यापकवह्न्यभावसमानाधिकरणतद्व्यक्तित्ववत्पर्वतरूपसत्प्रतिपक्षे लक्षणसमन्वयसम्भवात, तादृशसत्प्रतिपक्षनिश्चयप्रतिबध्यताया अतेजस्वी पर्वतो वह्निमान् पर्वतःवह्निमानितिज्ञानद्वयसाधारणतया प्रतिबध्यतावच्छेदककोटौ पर्वतत्वांशे इतरवारकपर्याप्त्यनिवेशेन तादृशानुमितित्वव्यापकत्वात्, निरुक्तज्ञानविशिष्टज्ञानात्मकसत्प्रतिपक्षनिश्चयस्य पर्वतत्वसामानाधिकरण्यावगाहित्वेऽपि पर्वतत्वसामानाधिकरण्यावगाहिनिरुक्तानुमितिप्रतिबन्धकतायास्तर्कग्रन्थे मथुरानाथेनोक्तत्वादिति ध्येयम्।

❀ गादाधरी ❀

साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वाऽनिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः, तत्र साध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेऽपि तद्दोषतादवस्थ्यम्, वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याद्यनुमित्यप्रतिबन्धकत्वात्।

❀ चन्द्रकला ❀

इतरवारकपर्याप्तिनिवेशव्यावृत्तिस्तु ग्रन्थकृतैवाग्रे प्रदर्शयिष्यते। एवमग्रेऽपि = अत्र वदन्तीत्यादिलक्षणेऽपि।

ननु अनुमितौ साध्यव्याप्यहेतुप्रकारकत्वमात्रनिवेशेनैवोपपत्तौ तत्र साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वनिवेशनमनुचितमित्यत आह साध्यतेति। परामर्शाविरोधितया = साध्यव्याप्यहेतुप्रकारकपक्षविशेष्यकज्ञानप्रतिबन्धकयथार्थज्ञानाऽविषयतया।

अव्याप्तिरिति। ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधनिश्चयस्य वह्न्यभावव्याप्यविशिष्टह्रदरूपसत्प्रतिपक्षनिश्चयस्य च ह्रदो वह्निव्याप्यधूमवानित्याकारकानुमित्यप्रतिबन्धकतया निरुक्तबाधादावव्याप्तिः स्यात्, यदि प्रकृतसाध्यप्रकारकत्वस्यानुमितौ निवेशो न स्यादिति हृदयम्।

यद्यपि साध्यनिष्ठप्रकारताकत्वमात्रस्यानुमितौ विवक्षणेऽपि नोक्ताव्याप्तिः साध्यव्याप्यहेतुमात्रनिष्ठप्रकारताकानुमितेः साध्याप्रकारकत्वादित्युच्यते तथापि न निस्तार इत्याह तत्रेति। लक्षणघटकीभूतानुमितीयसाध्यनिष्ठप्रकारतायामित्यर्थः। तद्दोषतादवस्थ्यम् = पूर्वोक्तबाधसत्प्रतिपक्षयोरव्याप्तितादवस्थ्यम्। कथमित्याकांक्षायामाह वह्नित्वेति। तथाचानुमितौ साध्यनिष्ठप्रकारताकत्वविवक्षणे ह्रदो वह्निमान् धूमादित्यादौ पूर्वोक्तबाधसत्प्रतिपक्षयोरव्याप्तिः, वह्निरूपसाध्यनिष्ठप्रकारताकानुमितित्वस्य ह्रदो धूमजनकतेजस्वी वह्निव्याप्यधूमवाँश्चेत्याकारकानुमितावपि सत्त्वेन तत्र यथोक्तबाधादिनिश्चयप्रतिबध्यत्वविरहात् साध्यव्याप्यहेतुप्रकारकसाध्यनिष्ठप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपित -

❀ कलाविलासः ❀

नच न्यूनवारकपर्याप्त्यनिवेशे अतेजस्वी पर्वतो वह्निमानित्यत्रैव तेजस्वित्वविशिष्टपर्वतरूपाश्रयासिद्धावव्याप्तिसम्भवे काञ्चनमयपर्वतो वह्निमानित्यत्राश्रयासिद्धावव्याप्तिदानमनुचितमितिवाच्यम्, पर्वतत्वसामानाधिकरण्येन तेजःसामान्याभावस्य पक्षतावच्छेदकतया तादृशपक्षतावच्छेदकविशिष्टपक्षज्ञानं प्रति पर्वतत्वावच्छेदेन तेजोवत्त्वनिश्चयस्य विरोधित्वात् तादृशनिश्चयविषयस्याप्रसिद्ध्या स्थलान्तर एवाश्रयासिद्धावव्याप्तेरभिहितत्वात्।

❀ गादाधरी ❀

यत्तु साध्याऽप्रसिद्ध्यव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्येति तन्न

❀ चन्द्रकला ❀

प्रतिबन्धकताशालियथार्थज्ञानविषयतया वह्न्यभावादिमद्ध्रदादिरूपबाधादावु-पपादयितुमशक्यत्वादिति भावः। अत्र प्रकारतायां साध्यतावच्छेदकावच्छिन्नत्व-मपि साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-वृत्तित्वरूपं वक्तव्यम्। वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्वसम्बन्धेन। स्वं प्रकारत्वम्, तेन पर्वतो वह्निजलोभयवान् धूमादित्यादौ वह्निजलोभयाभाववत्पर्वतरूपबाधनिश्चयस्य पर्वतो वह्निमानि-त्याकारकानुमित्यप्रतिबन्धकत्वेऽपि न तादृशोभयाभावविशिष्टपर्वतादिरूपबाधादा-वव्याप्तिः न वा ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादिरूपबाधनिश्चयस्य ह्रदविशेष्यकवह्निघटोभयप्रकारकानुमित्यप्रतिबन्धकत्वेऽपि तादृशबाधादावव्या-प्तिरिति ध्येयम्।

प्रकारान्तरेण प्रकारतायां साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वनि-वेशप्रयोजनं वर्णयतां मतं दूषयितुमुपन्यस्यति यत्त्विति। साध्यतावच्छेदकता-पर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताकत्वं विहाय साध्यनिष्ठप्रकारताकत्वस्यानु-मितौ विवक्षणे पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाव-वद्वह्निरूपसाध्याप्रसिद्धावव्याप्तिः, साध्यनिष्ठप्रकारताकानुमितिपदेन पर्वतो वह्नि-मानित्याकारकानुमितेरपि धर्तुं शक्यतया तादृशानुमितिप्रतिबन्धकतया यथोक्तसाध्याप्रसिद्धिनिश्चये विरहात् साध्यनिष्ठप्रकारताकानुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य तादृशसाध्याप्रसि-द्धावसत्त्वादित्यभिमानेनाह साध्याप्रसिद्ध्येति। तदुपादानस्य = प्रकारतायां साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वोपादानस्य।

❀ कलाविलासः ❀

न च तथापि बाधस्वरूपासिद्ध्यादिष्वपि पक्षतावच्छेदकतायाः पर्याप्त्यनिवेशे अव्याप्तिसम्भवे तदनुक्तौ पुनर्न्यूनता स्यादिति वाच्यम्, आद्यन्तोत्कीर्त्तनेन मध्यपतितयोरपि ग्रहणसम्भवात्, यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वासाधारण्यविषयिताशून्यत्वोभयाभावस्तद्रूपवत्त्वमित्यस्य वि-वक्षणीयतयाऽसाधारण्येऽव्याप्तिविरहाच्च।

केचित्तु पर्वतो वह्निमान् गगनादित्यत्र अवृत्तिगगनादेरेव स्वरूपासिद्धितया स्वरूपासिद्धित्वावच्छेदेन पक्षतावच्छेदकतापर्याप्त्यनिवेशे अव्याप्त्यसम्भवाद् बाधाश्रयासिद्ध्योरव्याप्त्यभिधानमित्याहुः।

❁ गादाधरी ❁

सत्, वह्निर्न काञ्चनमय इतिनिर्णयस्य शुद्धवह्नित्वादिना वह्न्याद्यनुमित्य-विरोधित्वेऽपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात्, तस्य काञ्चनमयवह्निव्याप्यधूमवान्पर्वत इत्यनुमितिविरोधितया तत्र लक्ष-णगमनात्।

❁ चन्द्रकला ❁

तादृशाभिमानं निराकर्त्तुमाहेति तु न सदिति। तादृशाभिमानमूलकं यत्तु-मतं न युक्तमित्यर्थः। निरुक्तमतस्यायुक्तत्वे हेतुमाह वह्निर्नेति। इत्यादिनिर्ण-यस्य = इत्याकारकसाध्याप्रसिद्धिनिश्चयस्य। शुद्धेति काञ्चनमयत्वाद्यप्रकारक-वह्नित्वमात्रप्रकारकत्वेनेत्यर्थः। वह्न्येति। पर्वतो वह्निमानित्याकारकानुमित्य-प्रतिबन्धकत्वेऽपीत्यर्थः। द्वितीयदले = द्वितीयदलघटकीभूतसाध्यप्रकारतायाम्। तस्य = पूर्वोक्तसाध्याप्रसिद्धिनिर्णयस्य। इत्यनुमितिविरोधितया = इत्याकारका-नुमितिप्रतिबन्धकतया। तत्र = निरुक्तसाध्याप्रसिद्धौ। लक्षणगमनादिति। अयमाशयः, काञ्चनमयत्वाभावविशिष्टवह्निनिश्चयस्य काञ्चनमयत्वप्रकारेण वह्नि-विषयकबुद्धिमात्रप्रतिबन्धकतया लक्षणघटकानुमितौ पक्षांशे साध्यनिष्ठप्रकारता-कत्वमात्रविवक्षणेऽपि नोक्तनिश्चयविषयीभूतायां साध्याप्रसिद्धावव्याप्तिः, तादृश-साध्यप्रकारकानुमितेः पर्वतो वह्निमान् काञ्चनमयवह्निव्याप्यधूमवाँश्चेत्याकार-कानुमितिस्वरूपतायाः आवश्यकतया काञ्चनमयत्वविशिष्टवह्निविषयकत्वाऽव्याघातेन तत्र यथोक्तसाध्याप्रसिद्धिनिश्चयस्य प्रतिबन्धकत्वादिति।

ननु अनुमितौ पक्षांशे साध्यप्रकारकत्वमात्रस्यैव निवेशोऽस्तु किं तत्र

❁ कलाविलासः ❁

वह्निर्न काञ्चनमय इत्यादि। नन्वत्रापि प्रकृतपक्षस्येव साध्यस्यापि सकृन्नि-वेशसम्भवे साध्याप्रसिद्ध्यादावव्याप्तिवारणेन यत्तुमतखण्डनमसंगतम्, तथा च साध्यतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतानिरूपितेत्यादिरीत्या लक्षणं निर्वाच्यम्, वैशिष्ट्यम् स्वावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षविशेष्यताकत्व—स्वावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुप्रकारतानिरूपितप्रकृतपक्षविशेष्यताकत्वो-भयसम्बन्धेनेति चेन्न, निरुक्तपरम्परायाः संसर्गत्वस्वीकारे मानाभावात्, पक्षपदस्य सकृदुल्लेखेन सकृन्निवेशोपयोगिपूर्वोक्तपरम्परायाः संसर्गत्वस्याभ्युपगमात्, साध्यपदस्य द्विधोल्लेखेन सकृन्निवेशोपयोगिनिरुक्तपरम्परायाः संसर्गत्वस्यास्वी-करणीयत्वादिति ध्येयम्।

❀ गादाधरी ❀

द्वितीयदलप्रवेशाद् व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिपु नाऽव्याप्तिः, तत्रापि साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनिवेशाव्यभिचारविरोधयोर्नाव्याप्तिः। वह्निर्धूमव्यभिचारीतिज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्भानसम्भवात्तद्दोषतादवस्थ्यमतो व्या-

❀ चन्द्रकला ❀

साध्यव्याप्यहेतुप्रकारकत्वनिवेशेनेत्यत आह द्वितीयदलेति। साध्यव्याप्यहेतुप्रकारकत्वस्यानुमितौ प्रवेशादेवेत्यर्थः। व्यभिचारेति। साध्याभाववद्वृत्तित्वविशिष्टहेतुरूपव्यभिचार-साध्याधिकरणवृत्तित्वाभावविशिष्टहेतुरूपविरोध-हेतुतावच्छेदकाभावविशिष्टहेतुरूपसाधनाप्रसिद्धि-हेत्वभाववत्पक्षात्मकस्वरूपासिद्धिष्वित्यर्थः। नाव्याप्तिरिति। अन्यथा द्वितीयदलाप्रवेशे व्यभिचारादिनिश्चयस्य पक्षः साध्यवानित्याकारकानुमितिमात्राऽप्रतिबन्धकतया व्यभिचारादावव्याप्तिरेव स्यादिति भावः। तत्रापीति। द्वितीयदलघटकहेतावपीत्यर्थः। साध्यतेति। साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वस्य हेतौ निवेशादित्यर्थः। व्याप्त्यंशे साध्यनिरूपितत्वाऽनिवेशे पर्वतो धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारे गोत्ववानश्वत्वादित्यादौ गोत्वाधिकरणवृत्तित्वाभावविशिष्टाश्वत्वरूपविरोधे चाव्याप्तिः, पक्षः साध्यवान् किञ्चिन्निरूपितव्याप्तिविशिष्टहेतुमानित्याकारकानुमितित्वस्य पर्वतो धूमवान् रूपादिव्याप्यवह्निमांश्चेत्याद्यनुमितावपि सत्त्वेन तत्र निरुक्तव्यभिचारादिनिश्चयप्रतिबध्यत्वविरहेण यथोक्तव्यभिचारादावव्याप्तिरित्याह व्यभिचारेति।

ननु व्याप्तौ साध्यतावच्छेदकावच्छिन्ननिरूपितत्वं न निवेश्यते अपितु साध्यनिरूपितत्वमात्रं तथापि नाव्याप्तिः, निरुक्तस्थले रूपादिनिरूपिताया व्याप्तेः साध्यीभूतधूमनिरूपितत्वाऽसम्भवात् धूमनिरूपितव्याप्तिविशिष्टहेतुप्रकारकानुमितेः पर्वतो धूमवान् धूमव्याप्यवह्निमानित्याकारकतया तत्र चोक्तव्यभिचारादिनिश्चयस्य प्रतिबन्धकत्वादत आह वह्निर्धूमेति। धूमाभाववद्वृत्तित्वविशिष्टवह्निरित्याकारकव्यभिचारादिनिश्चयदशायामपीत्यर्थः। आदिना वह्निमान् जलत्वादित्यादिस्थलीय-वह्निमद्वृत्तित्वाभावविशिष्टजलत्वादिरूपविरोधपरिग्रहः। द्रव्यत्वादिनेत्यादि। द्रव्यव्याप्यधूमवानयं धूमवानित्याकारकानुमित्युदयसम्भवादित्यर्थः। तद्दोषतेति। व्यभिचारविरोधयोरव्याप्तितादवस्थ्यमित्यर्थः। व्याप्तौ साध्यता-

❀ कलाविलासः ❀

द्वितीयदलप्रवेशादिति। ननु द्वितीयदलाप्रवेशे अनुपसंहारित्वे साध्यव्याप्त्याभाववद्धेतुरूपव्याप्यत्वासिद्धौ चाव्याप्तिसम्भवे तदनभिधानान्न्यूनतेति चेन्न,

❀ गादाधरी ❀

प्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः । अन्वयव्याप्तिव्यतिरेकव्याप्ती—

❀ चन्द्रकला ❀

वच्छेदकावच्छिन्ननिरूपितत्वं परित्यज्य साध्यनिरूपितत्वमात्रविवक्षणेऽपि धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारे वह्निमान् जलत्वादित्यादौ वह्निमद्वृत्तित्वाभावविशिष्टजलत्वरूपविरोधे चाव्याप्तिः, निरुक्तव्यभिचारादिनिश्चयस्य साध्यनिरूपितव्याप्तिविशिष्टहेतुप्रकारकानुमितिसामान्यान्तर्गतायां धूमवान् द्रव्यव्याप्यवह्निमांश्चायमित्याकारकानुमितावप्रतिबन्धकत्वादिति भावः । व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः = साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताकत्वं व्याप्तौ निवेशनीयमिति तात्पर्यम् । वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन , स्वं निरूपितत्वसम्बन्धावच्छिन्नप्रकारत्वम् । तेन महानसीयवह्निमान् धूमादित्यादौ महानसीयवह्न्यभाववद्वृत्तित्वविशिष्टधूमरूपव्यभिचारनिश्चयस्य वह्निव्याप्यधूमवान् महानसीयवह्निमाँश्चायमित्याकारकानुमितावप्रतिबन्धकत्वेऽपि न तादृशव्यभिचारेऽव्याप्तिः, महानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्तिग्रहं प्रति निरुक्तव्यभिचारनिश्चयस्य प्रतिबन्धकताया निर्विवादत्वादिति ध्येयम् ।

ननु साध्यतावच्छेदकावच्छिन्ननिरूपितं यद्यन्वयव्याप्तिमात्रमत्र विवक्षितं स्यात् तदा सर्वमनित्यं प्रमेयत्वादित्यादौ नित्यत्वव्यापकीभूताभावाप्रतियोगित्वविशिष्टप्रमेयत्वरूपानुपसंहारित्वेऽव्याप्तिः, साध्याभाववदवृत्तित्वादिरूपान्वयव्याप्तिबुद्धौ निरुक्तानुपसंहारित्वनिश्चयस्याऽप्रतिबन्धकत्वात् । तादृशव्याप्तेर्व्यतिरेकव्याप्तिमात्रपरत्वे तु धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिर्दुर्वारा स्यात्, साध्याभावव्यापकाभावप्रतियोगिहेतुरूपव्यतिरेकव्याप्तिबुद्धौ निरुक्तव्यभिचारनिश्चयस्याप्रतिबन्धकत्वादित्यत आह अन्वयेति ।

❀ कलाविलासः ❀

अनुपसंहारित्वस्य व्यभिचारान्तर्गतत्वाद् व्यभिचारपदेनैव तल्लाभसम्भवात् । साध्यतेऽनुमीयतेऽनेनेति व्युत्पत्त्या साधनं हेतुः व्याप्तिश्च, साधनञ्च साधनञ्च साधने तयोरप्रसिद्धिरितिव्युत्पत्त्या च साधनाऽप्रसिद्धिपदेन हेत्वसिद्धिव्याप्यत्वाऽसिद्धयोर्द्वयोरुपादानसम्भवात् ।

अन्वयव्याप्तीति । एकत्र द्वयमित्यादिरीत्या व्याप्तिद्वयस्य प्रकृतहेत्वंशे विशेषणत्वे तादृशव्याप्तिद्वयाभावविशिष्टहेतावतिव्याप्तिः स्यात् अतस्तादृशरीत्या निवेशो नात्राभिहितः । निवेशरीतिस्त्वन्यत्रानुसन्धेया ।

❀ गादाधरी ❀

विशिष्योपादाय तदुभयविशिष्टहेतुप्रकारकत्वमेव निवेश्यम, एकतरमात्रव्याप्त्युपादाने साधारण्याऽनुपसंहारित्वयोरेकतराऽसंग्रहप्रसङ्गादित्यग्रे व्यक्तीभविष्यति।

तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायाः तत्साध्यकतद्धेतुका-

❀ चन्द्रकला ❀

अन्वयनिरूपितां साध्याभाववदवृत्तित्वादिरूपां स्वव्यापकसाध्यसामानाधिकरण्यरूपां वा व्याप्तिं व्यतिरेकनिरूपितां साध्याभावव्यापकाभावप्रतियोगित्वविशिष्टहेतुरूपाञ्च व्याप्तिमित्यर्थः। विशिष्योपादाय = एकैकां तादृशीं व्याप्तिमुपादाय। तदुभयेति। तत्तद्व्याप्तिप्रकारतानिरूपितविशेष्यत्वावच्छिन्नहेतुप्रकारताकत्वमेवेत्यर्थः। निवेश्यमिति। लक्षणघटकीभूतायामनुमिताविव्यादिः। तथाच पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारता या च साध्यतावच्छेदकावच्छिन्ननिरूपितान्वयव्याप्तिप्रकारतानिरूपितविशेष्यत्वावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रकारता तन्निरूपकत्वे सति या वा साध्यतावच्छेदकावच्छिन्ननिरूपितव्यतिरेकव्याप्तिप्रकारतानिरूपितविशेष्यत्वाव – च्छिन्नहेतुप्रकारता तन्निरूपकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणार्थः पर्यवसितः, अन्यथोभयव्याप्तिविशिष्टहेतुप्रकारताकत्वस्यानुमितौ विवक्षणे तादृशव्याप्तिद्वयाभावविशिष्टहेतावतिव्याप्तिः स्यादिति भावः। एकतरेति। व्यतिरेकव्याप्तिमात्रस्योपादाने अन्वयव्याप्तिमात्रस्योपादाने वेत्यर्थः। साधारण्येति। साध्याभाववद्वृत्तित्वविशिष्टहेतुरूपव्यभिचार-साध्याभावव्यापकीभूताभावाऽप्रतियोगित्वविशिष्टहेतुस्वरूपानुपसंहारित्वयोरित्यर्थः। एकतरेति। व्यतिरेकव्याप्तिमात्रविवक्षणे व्यभिचारे अन्वयव्याप्तिमात्रनिवेशे चानुपसंहारित्वेऽव्याप्तिप्रसंगादित्यर्थः। अग्रे = अत्र वदन्ति वल्पे। अधिकमभिहितम्प्राक्। प्रकृतपक्षकप्रकृतसाध्यहेतुकानुमितिजनकतावच्छेदकत्वमन्वयव्याप्तिप्रकारतायामिव व्यतिरेकव्याप्तिप्रकारतायामप्यावश्यकमिति तादृशानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकपक्षविशेष्यतानिरूपितहेतुप्रकारतावच्छिन्नविशेष्यतानिरूपितत्वावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताघटितलक्षणार्थनिर्वचनेनैव व्याप्तिद्वयप्रकारताया लाभसम्भवे उभयव्याप्तिविशिष्टहेतुप्रकारताकानुमितित्वव्यापकप्रतिबध्यताघटितलक्षणानुसरणमनुचितमित्यत आह तादृशेति, अन्वयव्यतिरेकार्थकम्। तत्साध्येति।

❀ कलाविलासः ❀

तत्साध्यकतद्धेतुकेति। अत्र कल्पे अनुमितौ प्रकृतसाध्यकत्वनिवेशनं निरर्थकमिति तु नाशंकनीयम्, तन्निवेशाभावे पर्वतो धूमवान् वह्नेरित्यत्र

❀ गादाधरी ❀

नुमितिजनकतावच्छेदकप्रकारतात्वेनाऽनुगमय्य निवेशन्तु न सम्भवति, साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्ताज्ञानोत्पत्त्या साधारण्यादेस्तादृशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावात् ।

❀ चन्द्रकला ❀

प्रकृतसाध्यकप्रकृतहेतुकानुमितिजनकतावच्छेदकसाध्यप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वेनेत्यर्थः । निवेशस्त्विति । हेत्वाभासप्रथमलक्षणघटकतयेत्यादिः । तादृशनिवेशाभावे हेतुमाह साध्येति । हेतुधर्मिकसाध्याभाववद्वृत्तित्वज्ञानकाले इत्यर्थः । केवलेति । अन्वयव्याप्त्यविषयकसाध्याभावव्यापकाभावप्रतियोगित्वादिरूपव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकपक्षविशेष्यकानुमितेरुत्पत्त्येत्यर्थः । साधारण्यादेरिति । आदिनानुपसंहारित्वपरिग्रहः । तादृशेति । प्रकृतानुमितिजनकतावच्छेदकसाध्यविषयतानिरूपितव्याप्तिविषयतानिरूपितहेतुप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वाभावादित्यर्थः । अयं भावः, प्रकृतसाध्यहेतुकानुमितिजनकतावच्छेदकसाध्यप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तिप्रकारतानिरूपितहेतुप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यादिरीत्या लक्षणार्थनिर्वचने-धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्निरूपव्यभिचारे सर्वमनित्यं प्रमेयत्वादित्यादौ च नित्यत्वव्यापकीभूताभावाप्रतियोगिप्रमेयत्वरूपानुपसंहारित्वे चाव्याप्तिः, तादृशहेतुप्रकारकानुमितित्वस्य पर्वतो धूमवान् धूमाभावव्यापकाभावप्रतियोगिवह्निमानित्याकारककेवलव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकानुमितौ सर्वमनित्यम् अनित्यत्वान्वयव्याप्तिविशिष्टप्रमेयत्ववदित्याकारकानुमितावपि च सत्त्वेन व्यतिरेकव्याप्तिविषयकानुमितौ धूमाभाववद्वृत्तिवह्निनिश्चयप्रतिबध्यताया अनित्यत्वान्वयव्याप्तिविशिष्टप्रमेयत्वप्रकारकानुमितौ च नित्यत्वव्यापकीभूताभावाप्रतियोगिप्रमेयत्वनिश्चयप्रतिबध्यतायाश्च विरहाद् व्यभिचारानुपसंहारित्वनिश्चयप्रतिबध्यतायां तादृशप्रकारताशाल्यनुमितित्वव्यापकत्वासम्भवादिति ।

❀ कलाविलासः ❀

धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्त्यापत्तेः द्रव्यव्याप्यवह्निमान् पर्वत इत्याकारकपरामर्शोत्तरजायमानद्रव्यव्याप्तिविषयकानुमितेरपि प्रकृतहेतुकानुमितिसामान्यान्तर्गततया तत्र निरुक्तव्यभिचारनिश्चयस्याप्रतिबन्धकत्वादतोऽनुमितौ प्रकृतसाध्यकत्वोपादानम् ।

❀ गादाधरी ❀

व्याप्तिविशिष्टविषयकत्वमात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्न-विषयकत्वमात्रस्य वा निवेशे स्वरूपासिद्धावव्याप्तिः, अतः पक्षांशे ता-दृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशः । पक्षांशे व्या-

❀ चन्द्रकला ❀

साध्यान्वयव्याप्तिविषयकसाध्यव्यतिरेकव्याप्तिविषयकानुमितिप्रतिबन्धकत्व-विवक्षणे ह्रदो द्रव्यं धूमादित्यादौ धूमाद्यभावविशिष्टह्रदादिरूपस्वरूपासिद्ध्यादाव-व्याप्तिः ह्रदो द्रव्यत्ववान् द्रव्यत्वव्याप्तिमद् द्रव्यव्याप्यवान् वा द्रव्यत्वव्याप्यो धूमो वेत्याकारकानुमितावपि व्याप्तिविशिष्टविषयकानुमितित्वस्य सत्त्वात् तत्र निरुक्तस्वरूपासिद्धिनिश्चयस्याप्रतिबन्धकत्वादित्याह तादृशेति । अन्वयव्यतिरेक-व्याप्तिविशिष्टविषयकमात्रस्येत्यर्थः । मात्रपदेन अनुमितौ तादृशव्याप्तिविशिष्टहेतु-प्रकारकत्वव्यवच्छेदः । तद्विशिष्टेति । साध्यान्वयव्यतिरेकव्याप्तिविशिष्टहेतुता-वच्छेदकावच्छिन्नविशेष्यकानुमितिमात्रस्य वा निवेशे इत्यर्थः । अतः = निरुक्ता-व्याप्तितः । पक्षांशे इत्यादि । अनुमितौ पक्षविशेष्यकसाध्यान्वयव्यतिरेकव्या-प्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेश इत्यर्थः ।

ननु पक्षविशेष्यकसाध्यव्याप्तिविशिष्टहेतुनिष्ठप्रकारताकानुमितिविवक्षणेऽपि न स्वरूपासिद्धावव्याप्तिः, द्रव्यत्वव्याप्यधूमवान् ह्रदो द्रव्यमित्याकारकानुमितौ धूमाभाववान् ह्रद इत्याकारकनिश्चयस्य प्रतिबन्धकत्वादिति हेतुतावच्छेद-कावच्छिन्नप्रकारताकत्वस्यानुमितिविशेषणत्वं निरर्थकमित्यत आह पक्षांश इत्यादि । पक्षविशेष्यकसाध्यान्वयव्यतिरेकव्याप्तिविशिष्टहेतुनिष्ठप्रकारताकत्वमात्रस्येत्यर्थः ।

❀ कलाविलासः ❀

यदि निरुक्तव्यभिचारेऽव्याप्तिः स्वमतेऽप्यस्तीति विभाव्यते तदा यादृशस्थल-विशेषे एकविधव्याप्तिज्ञानादेवानुमितिस्तत्रत्यसाधारण्यादावव्याप्तिर्बोध्येति ध्येयम् ।

प्रकृतहेतुकत्वस्यानुमितावनिवेशे गोत्ववान् गोत्वाभावादित्यत्र गोत्वाऽसमाना-धिकरणगोत्वाभावरूपविरोधेऽव्याप्तिः, गोत्वव्याप्याभाववानयमित्याकारकनिश्चयो-त्तरजायमानानुमितेरपि प्रकृतसाध्यकानुमितिसामान्यान्तर्गततया तत्र निरुक्त-विरोधनिश्चयस्याप्रतिबन्धकत्वात् । नचानुमितिपदं व्यर्थमिति वाच्यम्, तत्पक्ष-साध्यहेतुकप्रत्यक्षादेर्हेतुप्रकारकत्वाप्रयोज्यतया तादृशहेतुकत्वादेः परामर्शजन्य-तावच्छेदकत्वलाभाय तदुपादानसम्भवादिति वदन्ति ।

ननु तथापि तादृशानुमितित्वावच्छिन्नजन्यताविशिष्टप्रतिबध्यतानिरूपित-प्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे न व्यभिचारादावव्याप्तिः, वैशिष्ट्यम् स्वविशिष्टानुमितित्वव्यापकत्वसम्बन्धेन, स्ववैशिष्ट्यमनुमितौ स्वकालीन-

❀ गादाधरी ❀

प्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोषतादवस्थ्यम्, धूमाभाववान् ह्रद इति ज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाऽविरोधित्वात् साधारण्या-

❀ चन्द्रकला ❀

मात्रपदेन तादृशहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वनिवेशव्यवच्छेदः । तद्दोषतेति । पुनः स्वरूपासिद्धौ अव्याप्तितादवस्थ्यमित्यर्थः । पक्षविशेष्यकसाध्यप्रकारकसाध्यनिरूपिततादृशव्याप्तिविशिष्टहेतुनिष्ठप्रकारताकानुमितिविवक्षणे ह्रदो वह्निमान् धूमादित्यादौ धूमाभावविशिष्टह्रदरूपस्वरूपासिद्धावव्याप्तिः तादृशव्याप्तिविशिष्टहेतुनिष्ठप्रकारताकानुमितिपदेन ह्रदो वह्निमान् वह्निव्याप्यद्रव्यवान् ह्रदो वह्निमानित्यनुमितेरपि धर्तुं शक्यतया तत्र च धूमाभावद्ह्रदनिश्चयस्याऽप्रतिबन्धकत्वादित्याह धूमाभाववानिति । द्रव्यत्वादिनेत्यादि । वह्न्यादिव्याप्यद्रव्यवान् ह्रद इत्याकारकानुमित्यप्रतिबन्धकत्वादित्यर्थः । तादृशव्याप्तिविशिष्टहेतुनिष्ठप्रकारताकानुमितिनिवेशे न केवलं स्वरूपासिद्धावव्याप्तिः, व्यभिचारादावप्यव्याप्तिरित्याह साधारण्येति । आदिना विरोधपरिग्रहः । अव्याप्तिमुपपादयति

❀ कलाविलासः ❀

प्रकृतसाध्यप्रकारतानिरूपितप्रकृतपक्षविशेष्यताकत्व–स्वनिरूपितजनकतावच्छेदकप्रकृतहेतुप्रकारतानिरूपितप्रकृतपक्षविशेष्यताकत्वोभयसम्बन्धेन । तथाच तत्तत्परामर्शजन्यानुमितित्वावच्छिन्नयत्किञ्चिज्जन्यतामादायैव व्यभिचारादौ लक्षणसमन्वयः सम्भवतीति हृदयम् ।

यद्यपि निरुक्तपरम्परायाः संसर्गत्वमस्वीकृत्यैव व्यभिचारादावव्याप्तिरभिहितेत्युच्यते तथापि प्रकृतानुमितित्वावच्छिन्नजन्यतानिष्ठोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितजनकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता सती या साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितप्रकृतपक्षविशेष्यता-निष्ठावच्छेदकतानिरूपितानुमितित्वावच्छिन्नावच्छेदकता तन्निरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदत्वावच्छिन्नावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपिता या अवच्छेदकतात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्प्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यादिरीत्या प्रकारमुद्रयानुगमेन यत्किञ्चिज्जन्यतामादायैव तद्व्यक्तिनिरूपितजनकतावच्छेदकतावद्धेतुप्रकारतानिरूपितपक्षविशेष्यताशालिनी साध्यतावच्छेदकावच्छिन्न-

❀ गादाधरी ❀

द्व्याप्तिश्च वह्नित्वावच्छिन्ने धूमाभाववद्वृत्तित्वग्रहस्य धूमादिव्याप्तिविशिष्टतद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाऽविरोधित्वादतो हेतुतावच्छेदकावच्छिन्नत्वनिवेशः। पक्षांशे साध्यादिप्रकारकस्य संस्कारादेः आहार्यज्ञा-

❀ चन्द्रकला ❀

वह्नित्वेति। तथाच तादृशहेतुनिष्ठप्रकारताकानुमितित्वस्य धूमव्याप्यतद्व्यक्तिमान्यमित्याकारकानुमितावपि सत्त्वेन तत्र धूमाभाववद्वृत्तिवह्निनिश्चयप्रतिबध्यत्वाभावेन व्यभिचारादिनिश्चयप्रतिबध्यतायास्तादृशानुमितित्वाव्यापकत्वादिति भावः। हेतुतावच्छेदकावच्छिन्नत्वनिवेश इति। तादृशव्याप्तिविशिष्टहेतुप्रकारताया-मित्यादिः। ननु हेतुतावच्छेदकनिष्ठावच्छेदकताकप्रकारताकत्वनिवेशेनैव नोक्तस्वरूपासिद्ध्यादावव्याप्तिः ह्रदो वह्निमान् वह्निव्याप्यद्रव्यवान् इत्याकारकानुमितेर्धूमरूपद्रव्यनिष्ठप्रकारताकत्वेऽपि धूमत्वनिष्ठावच्छेदकताकधूमनिष्ठप्रकारताकत्वविरहेण तस्या धूमत्वरूपहेतुतावच्छेदकनिष्ठावच्छेदकताकप्रकारताकानुमितिपदेनोपादानाऽसम्भवादिति वाच्यम्, तथा सति पर्वतो वह्निमान् महानसीयधूमादित्यादौ महानसीयधूमाभाववत्पर्वतरूपस्वरूपासिद्धावव्याप्तिः स्यात् पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितेरपि हेतुतावच्छेदकयत्किञ्चिद्धूमत्वनिष्ठावच्छेदकताकप्रकारताकत्वेनोपादातुं शक्यतया तत्र महानसीयधूमाभाववत्पर्वतनिश्चयस्याऽप्रतिबन्धकत्वादिति ध्येयम्।

वस्तुतो हेतुतावच्छेदकावच्छिन्नत्वं प्रकारतायां तादृशव्याप्ति-हेतुतावच्छेदकोभयपर्याप्तावच्छेदकताकत्वम्, तच्च तादृशोभयनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम्, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, स्वम् प्रकारतेति वदन्ति।

ननु लाघवात् पक्षविशेष्यकसाध्यप्रकारकसाध्यनिरूपिततादृशव्याप्तिविशिष्टतादृशहेतुप्रकारकत्वव्यापिका तादृशहेतुप्रकारकज्ञानत्वव्यापिका वा या प्रतिबध्यता तन्निरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वमेव विवक्ष्यतां तादृशानुमितिपर्यन्तनिवेशनं निरर्थकमित्याशंकायामाह पक्षांश इत्यादि। यदि तादृशहेत्वादिप्रकारकत्वव्यापकत्वं प्रतिबध्यतायां निवेश्यते तदाऽसम्भवः स्यात्, तादृशहेत्वादिप्रकारकत्वस्य पक्षः साध्यवान् साध्यव्याप्यहेतुमान् इत्याकारकसंस्कारेऽपि सत्त्वात् तत्र च कस्यापि निश्चयस्य प्रतिबध्यताया विरहेण तादृशसाध्यहेतुप्रकारकत्वव्यापकप्रतिबध्यताया अप्रसिद्धत्वात्। एवं तादृशपक्षविशेष्यकसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकज्ञानत्वव्यापकप्रतिबध्यतानिवेशेऽपि असम्भव एव भवति, तादृश-

❀ गादाधरी ❀

नादेश्च बाधादिज्ञानाऽप्रतिबध्यत्वादसंभव इत्यतस्तादृशानुमितित्वव्यापकतानिवेशः।

साध्यव्याप्यहेतुधर्मिनावच्छेदककसाध्यवत्ताज्ञानस्यैव साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याकारकतया तादृशाकारलिखनस्वरसात्तादृशहेतुर्विशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकाऽनुमितित्वव्यापकप्रतिबध्यत्वस्य लक्षणघटकत्वोपगमे पर्वतत्वा-

❀ चन्द्रकला ❀

हेतुप्रकारकज्ञानत्वस्य साध्याभाववान् पक्षः साध्यवान् साध्यव्याप्यहेतुमानित्याकारकाहार्यज्ञानेऽपि वर्त्तमानतया तत्र कस्यापि निश्चयस्य प्रतिबध्यत्वस्याऽसत्त्वादित्याह तादृशानुमितित्वव्यापकतानिवेश इति। दीधितिकृता कृत इति शेषः।

ननु साध्यव्याप्यहेतुमान् पक्षः साध्यवान् इत्याकारकानुमितिपरं चेति दीधितिकारलिखनस्वरसात् साध्यव्याप्यहेतुनिष्ठावच्छेदकतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकसाध्यप्रकारकानुमितेरेव लक्षणघटकानुमितिपदेन विवक्षणीयत्वसम्भवात् तादृशानुमितिपदेन पक्षः साध्यवान् साध्यव्याप्यहेतुमाँश्चेत्याकारकसमूहालम्बनपक्षविशेष्यकसाध्यप्रकारकसाध्यव्याप्यहेतुप्रकारकानुमितिपर्यन्तनिवेशनमनुचितमित्यत आह साध्यव्याप्येति। साध्यव्याप्यहेततावच्छेदकावच्छिन्नधर्मितावच्छेदकताकपक्षविशेष्यकसाध्यप्रकारकानुमितेरेवेत्यर्थः। तादृशाकारेति। साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारेत्यर्थकम्। तादृशेति। साध्यव्याप्तिविशिष्टेत्यर्थकम्। लक्षणघटकेति। साध्यव्याप्तिविशिष्टहेतुविशिष्टप्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वस्य प्रथमलक्षणार्थत्वाभ्युपगमे तु इत्यर्थः। पर्वतत्वा-

❀ कलाविलासः ❀

प्रकारतानिरूपितपक्षविशेष्यताशालिनी च याऽनुमितिस्तद्वृत्तिभेदीयप्रतियोगितानिरूपितावच्छेदकत्वं नास्तीत्याकारकव्यापकतारूपाभावमादाय साधारण्यादौ लक्षणसमन्वयसम्भव इति चेन्न, तादृशग्रहत्वरूपानुमितित्वस्य अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकानिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताकसाध्यतावच्छेदकवदभाववदवृत्तिमान् पक्षः इत्याकारकानुमितावपि वर्त्तमानतया तत्र स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकमेयत्वाभाववदभावविषयकनिश्चयस्याऽप्रतिबन्धकत्वेन तादृशमेयत्वाभावविशिष्टाभावरूपव्याप्यत्वासिद्धावव्याप्तेरिति ध्येयम्।

❀ गादाधरी ❀

वच्छेदेन वह्नेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसङ्गः। सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वावच्छेदेन वह्न्यादिज्ञानं प्रत्येव प्रतिबन्धकतया धूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकवह्न्यादिज्ञानाऽप्रतिबन्धकत्वादिति तदुपेक्षितम्।

न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेऽपि शुद्धपर्वतत्वावच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभा-

❀ चन्द्रकला ❀

वच्छेदेन = पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन। तत्सामानाधिकरण्येन = पर्वतत्वसामानाधिकरण्येन। पर्वतादौ स्वरूपत्वमात्रावच्छिन्नसंसर्गेणेति यावत्। साध्याभावादेरिति। आदिना वह्न्यभावव्याप्यपरिग्रहः। अदोषताप्रसंग इति। शुद्धस्वरूपेण वह्न्यभावविशिष्टपर्वतादावव्याप्तिरित्यर्थः। अव्याप्तिमुपपादयति सामानाधिकरण्येति। पर्वतत्वाद्यवच्छिन्नविशेष्यकस्वरूपत्वमात्रावच्छिन्नसंसर्गताकवह्न्यभावादिप्रकारकनिश्चयस्येत्यर्थः। पर्वतत्वेति। पर्वतत्वादिव्यापकवह्न्यादिप्रतियोगिकसंयोगेनेत्यर्थः। वह्न्यादिप्रकारकबुद्धिं प्रत्येवेत्यर्थः। धूमविशिष्टेति। वह्न्यादिव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकवह्न्यादिप्रकारकज्ञानाप्रतिबन्धकत्वादित्यर्थः। वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानित्याकारकानुमितेः पर्वतत्वसामानाधिकरण्यावगाहितया सामानाधिकरण्यावगाहितत्प्रकारकबुद्धौ सामानाधिकरण्यावगाहितदभावनिश्चयस्याप्रतिबन्धकत्वात्, पर्वतत्वावच्छेदेन वह्न्यभावादिनिश्चयस्य तादृशधूमविशिष्टपर्वतधर्मिकवह्न्यादिज्ञानं प्रति प्रतिबन्धकत्वेऽपि पर्वतत्वावच्छेदेन वह्न्यभावविशिष्टपर्वतस्याप्रसिद्धतया तस्य दोषत्वाभ्युपगमाऽसम्भवादिति हृदयम्। तदुपेक्षितमिति। अस्माभिरिति शेषः।

ननु वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारकानुमितौ तादृशधूमपर्वतत्वयोर्द्वयोरेव धर्मितावच्छेदकतया भानेऽपि पर्वतत्वावच्छेदेन वह्नेर्यत्र साध्यता तत्र निरुक्तानुमितेरपि केवलपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगावगाहित्वमेव स्वीकरणीयम् न तु तादृशधूमपर्वतत्वरूपधर्मितावच्छेदकधर्मद्वयव्यापकसंयोगावगाहित्वमपि तत्राभ्युपगन्तव्यम् येन तादृशानुमितेः धर्मितावच्छेदकसामानाधिकरण्यावगाहित्वं स्यादिति न पर्वतत्वावच्छेदेन वह्निसाध्यकस्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभावादेर्दोषतानुपपत्तिरित्याशंकते न चेति। वाच्यमिति परेणान्वयः। विशेष्यतेति। अनुमितीयेत्यादिः। भानेऽपि = धर्मितावच्छेदकत्वेऽपि। शुद्धेति। पर्वतत्वमात्रव्यापकवह्निप्रतियोगिकत्वसम्बन्धेन पर्वतत्वविशिष्टसंयोगादेरित्यर्थः। पर्वतत्वेति। पर्वतादिविशेष्यकस्वरूपत्वमात्रधर्मावच्छिन्नस्व-

❀ गादाधरी ❀

वादिज्ञानस्य प्रतिबन्धकत्वमावश्यकम्, तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादिति वाच्यम्, धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशावच्छिन्नत्वमपि, तद्धर्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात्।

❀ चन्द्रकला ❀

रूपसम्बन्धावच्छिन्नवह्न्यभावादिप्रकारताकनिश्चयस्येत्यर्थः। आवश्यकमिति। पर्वतत्वसामानाधिकरण्येन वह्न्यादिप्रकारकनिश्चयस्य पर्वतत्वावच्छेदेन वह्निप्रकारकबुद्धिप्रतिबन्धकतायाः सर्ववादिसिद्धत्वादित्याशयः। तादृशानुमितेरपि = वह्न्यादिव्याप्यधूमादिविशिष्टपर्वतो वह्न्यादिमानित्यनुमितेरपि। शुद्धेति। पर्वतत्वमात्रव्यापकवह्निप्रतियोगिकसंयोगेनेत्यर्थः। वह्न्याद्येति। वह्निप्रकारकत्वादित्यर्थः। तथा च न पर्वतत्वसामानाधिकरण्येन वह्न्यभावादेरदोषताप्रसंग इति भावः। समाधत्ते धर्मितेति। वह्निव्याप्यधूमपर्वतत्वद्वयावच्छेदेनेत्यर्थः। विशिष्टबुद्धौ = वह्निविशिष्टायामनुमितौ। धर्मितेति। धर्मितावच्छेदकतापर्याप्त्यधिकरणीभूतवह्न्यादिव्याप्यधूमपर्वतत्वादिरूपद्वितयधर्मव्यापकवह्न्यादिप्रतियोगिकत्वावच्छिन्नत्वमेवेत्यर्थः। संसर्गांशे = संयोगाद्यंशे। भासते = विषयीभूतं भवति। एवकारार्थं विवृणोति नत्विति। तदेकदेशावच्छिन्नत्वमपि = धर्मितावच्छेदकतापर्याप्त्यधिकरणीभूतयत्किञ्चिद्धर्मव्यापकसाध्यप्रतियोगिकत्वावच्छिन्नत्वमपि। तद्धर्मेति। वह्निव्याप्यधूमपर्वतत्वरूपधर्मद्वयावच्छिन्नविशेष्यतानिरूपिततादृशधर्मद्वयैकदेशीभूतपर्वतत्वमात्रव्यापकवह्न्यादिप्रतियोगिकत्वावच्छिन्नसंसर्गताया इत्यर्थः। अप्रामाणिकत्वादिति। न च तादृशसंसर्गताया अभ्युपगमे को दोष इति वाच्यम्; तथा सति वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानित्याकारकानुमितिजन्यतादृशसंस्कारस्य पर्वतो वह्निमानित्याकारकस्मरणाद् विनाशापत्तेः, पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगावगाहिसंस्कारनाशं प्रति पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगावगाहिस्मरणस्यैव जनकत्वात् निरुक्तानुमितिजन्यसंस्कारस्यैव भवन्मते तादृशत्वादिति ध्येयम्।

❀ कलाविलासः ❀

केचित्तु ह्रदो वह्निमान् धूमादित्यादौ वह्निव्याप्याभाववद्ध्रदेऽतिव्याप्तेरुक्तरीत्यापि वारणाऽसम्भवात, सिद्धान्ते च साध्यव्याप्यो हेतुः हेतुमान् पक्षः साध्यवानित्याकारकत्रिखण्डाकारानुमितेरेव लक्षणघटकतया नोक्तदोषः सम्भवतीत्याहुः।

अप्रामाणिकत्वादिति। तथाच स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिता-

❀ गादाधरी ❀

अथ लिङ्गोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्तादृश-संसर्गताभ्युपगम आवश्यकः, अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्ता-

❀ चन्द्रकला ❀

ननु पर्वतत्वावच्छिन्नविशेष्यकवह्निविधेयकानुमितित्वावच्छिन्नंप्रति वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यक निश्चयत्वेन वह्निव्याप्यालोकादिप्रकारकपर्वतविशेष्यकनिश्चयत्वादिना च हेतुत्वकल्पने वह्निव्याप्यधूममात्रप्रकारकनिश्चयादिजन्यायामनुमितौ व्यभिचारः, तादृशालोकादिप्रकारकनिश्चयविरहादतः वह्निव्याप्यधूमप्रकारकनिश्चयाव्यवहितोत्तरजायमानपर्वतधर्मिकवह्न्यनुमितौ तादृशनिश्चयत्वेन जनकताया मणिकारमतसिद्धत्वेऽपि अव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशनीयतया गौरवमित्युदयनाचार्यमतमेव समीचीनं तन्मते वह्निव्याप्यधूमविशिष्टपर्वतधर्मिकवह्न्यनुमितिं प्रति वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यकनिश्चयत्वादिना पृथक् हेतुत्वस्य लाघवात् कल्पनीयतया न व्यभिचारः, तथाच वक्ष्यमाणरीपेण तन्मते एकदेशव्यापकत्वावच्छिन्नसंसर्गताया आवश्यकत्वे लक्षणघटकानुमितिपदस्य तन्मतसिद्धानुमितिपरत्वव्याख्यानमेव युक्तमित्याशंकते अथेति। लिंगोपधानमते = साध्यव्याप्यहेतुविशिष्टे पक्षे केवलहेतुविशिष्टे वा पक्षे साध्यानुमितिमभ्युपगच्छतामुदयनाचार्यमतानुयायिनां मते। हेतोरिति। साध्यव्याप्येत्यादिः। सर्वत्रैव = सकलानुमितौ, अनुमितिमात्रे इति यावत्। तादृशेति। धर्मितावच्छेदकतापर्याप्त्यधिकरणयत्किञ्चिदेकधर्मव्यापकत्वावच्छिन्नसंसर्गताभ्युपगम इत्यर्थः। आवश्यक इति। तथा च आचार्यानुमितिपरमेव निरुक्तलक्षणघटकीभूतानुमितिपदमस्त्विति भावः। तादृशैकदेशव्यापकत्वावच्छिन्नसंसर्गतानभ्युपगमे दोषमाहान्यथेति। आचार्यमते तादृशैव देशव्यापकत्वावच्छिन्नसंसर्गतानभ्युपगमे इत्यर्थः। शुद्धेति। पर्वतत्वमात्रव्यापकधूमादिप्रतियोगिकसंयोगेनेत्यर्थः। हेत्विति। साध्यव्याप्यहेतुप्रकारकनिश्चयस्थले-

❀ कलाविलासः ❀

कपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धर्मितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यताव्यापकत्वमेव संसर्गांशे भासत इति तात्पर्यम्।

न चैवमेकदेशव्यापकत्वस्य प्रामाणिकत्वे किं दूषणमिति वाच्यम्, तथा सति द्रव्यपक्षकवह्निसाध्यकस्थले वह्निव्याप्यधूमविशिष्टद्रव्यं वह्निमदित्यनुमितेः प्रमात्वापत्तेः। आचार्यमते तु तादृशानुमितेरेकदेशव्यापकतावगाहिताया अनभ्युपगमेन तादृशापत्तेरसम्भवादिति वदन्ति। यद्यप्येकदेशव्यापकत्वावच्छिन्नसंसर्ग-

❀ गादाधरी ❀

ज्ञानस्थले हेतुविशिष्टपर्वतत्वावच्छिन्नधर्मिकसंयोगादिसंसर्गकानुमितेरेवोपगमे पर्वतत्वसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि तत्र तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तेः. नहि सामानाधिकरण्येन बाध-

❀ चन्द्रकला ❀

धीत्यर्थः। विशिष्टेति। वह्निव्याप्यधूम-पर्वतत्वरूपधर्मद्वयव्यापकवह्न्यादिप्रतियोगिकसंयोगसंसर्गताकवह्न्याद्यनुमितेः प्रामाणिकत्वाभ्युपगमे इत्यर्थः। पर्वतत्वेति। पर्वतत्वाद्यवच्छिन्नविशेष्यकस्वरूपत्वमात्रावच्छिन्नसंसर्गताकवह्न्यभावादिनिश्चयकाले इत्यर्थः। तथाविधेनि। पर्वतत्वसामानाधिकरण्येन वह्न्यादिनिश्चयवत इत्यर्थः। तथाच पर्वतत्वावच्छिन्नविशेष्यक संयोगत्वमात्रावच्छिन्न संसर्गताक वह्न्यादि प्रकारक निश्चयवतः पुरुषादेरिति पर्यवसितार्थः।

अनुमित्यापत्तेरिति। वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमानित्याकारकानुमित्यापत्तेरित्यर्थः। पर्वतत्वावच्छेदेन वह्न्यादिसाध्यकस्थलेऽपि तादृशधूमपर्वतत्वधर्मद्वयव्यापकत्वावच्छिन्नसंयोगादिसंसर्गताकनिरुक्तवह्न्यनुमित्युत्पादस्वीकारे तादृशानुमितेः पर्वतत्वादिसामानाधिकरण्यावगाहितया तत्र पर्वतत्वसामानाधिकरण्यावगाहिबाधनिश्चयस्याप्रतिबन्धकत्वात् तादृशबाधनिश्चयदशायां तादृशानुमितिवारणमशक्यं स्यात्। एवं निरुक्तानुमितेस्तादृशधूमपर्वतत्वधर्मद्वयव्यापकसंयोगावगाहितया संयोगत्वमात्रावच्छिन्नसंयोगावगाहि-

❀ कलाविलासः ❀

ताया अस्वीकारे पर्वतत्वावच्छेदेन वह्निसाध्यकस्थले वह्निव्याप्यधूमविशिष्टपर्वते वह्न्यनुमितौ लाघवमित्याकारकलाघवज्ञानाधानायां तादृशधूमविशिष्टपर्वतो वह्निमानित्यनुमितेरेवोदयात। तत्र पर्वतत्वसामानाधिकरण्येन बाधनिश्चयस्याप्रतिबन्धकतया तादृशवह्न्यभाववत्पर्वतादेर्दोषत्वप्रसंगस्तथापि विशेष्यांशे लाघवज्ञानस्यानुमितावप्रयोजकतायाः स्वीकरणीयतया तत्र तादृशानुमितेरेवानुत्पत्तेस्तादृशबाधस्य दोषत्वं निराबाधमिति ध्येयम्।

केचित्तु एकदेशव्यापकत्वावच्छिन्नसंसर्गता यदि प्रामाणिकी स्यात तदा नीलपर्वतादिविशेष्यकवह्न्याद्यनुमितौ पर्वतादिविशेष्यकवह्न्याद्यनुमितौ च शुद्धपर्वतत्वावच्छेद्यत्वावगाहित्वस्यावश्यकतया पर्वतत्वावच्छेदेन वह्न्याद्यनुमितिस्थल एव पृथक् पृथक् कार्यकारणभावकल्पने गौरवापत्तिः स्यादस्माकन्तु पर्वतत्वावच्छेदेन पर्वतमात्रविशेष्यकानुमितेरसम्भवादेकविधकार्यकारणभावोपपत्तिरित्याहुः।

तथाविधसाध्यादिनिश्चयवतोऽनुमित्यापत्तेरिति। अत्रेदं बोध्यम्, यत्र सामानाधिकरण्येन बाधनिश्चयः सामानाधिकरण्येन साध्यनिश्चयश्च वर्त्तते तत्र

❀ गादाधरी ❀

सिद्ध्योः सत्योः कश्चिदनुमितिमुपैति तादृशबाधादिग्रहस्य क्वचिदप्यनुमितौ प्रतिबन्धकत्वाऽसम्भवात्तेषां हेत्वाभासताविलोपापत्तिश्च इति चेद्,

❀ चन्द्रकला ❀

वह्न्याद्यनुमितिं प्रत्येव पर्वतत्वादिसामानाधिकरण्याद्यवगाहिवह्न्यादिनिश्चयस्य प्रतिबन्धकतया निरुक्तसाध्यनिश्चयसत्त्वेऽपि तादृशानुमित्यापत्तिवारणमशक्यमिति भावः

निरुक्तानुमितेरिष्टापत्ति नसम्भवतीत्याह नहीति। अनुमितिम्=पर्वतत्वावच्छेदेन वह्न्यादिसाध्यकस्थले वह्निव्याप्यधूम-पर्वतत्वधर्मद्वयव्यापकसंयोगावगाह्यनुमितिम्। तादृशानुमितेः सामानाधिकरण्यावगाहित्वेन सामानाधिकरण्येन साध्यादिनिश्चयसत्त्वे तादृशानुमितेरुत्पादो नेष्ट इति हृदयम्।

तादृशेति। पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिपर्वतधर्मिकवह्न्यभावादिरूपबाधादिनिश्चयस्येत्यर्थः। क्वचिदपीति। आचार्यमते एकदेशावच्छिन्नसंसर्गतानभ्युपगमे कुत्रापि अवच्छेदावच्छेदेनानुमितौ निरुक्तबाधनिश्चयस्य प्रतिबन्धकत्वस्याऽसम्भवादिति पर्यवसितार्थः। तेषाम्=अवच्छेदावच्छेदेन साध्यस्थले शुद्धस्वरूपेण वह्न्यभावविशिष्टपर्वतादीनाम्। हेत्वाभासता=हेतुदोषता। विलोपापत्तिरिति। अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्य तत्राऽसत्त्वादित्याशयः। इदमत्रावधातव्यम्, पर्वतत्वसामानाधिकरण्येन वह्न्यादिनिश्चयदशायां यथा पर्वतीयसंयोगेन पर्वते वह्न्यनुमितिर्भवति तथा पर्वतत्वावच्छेदेन वह्न्यादेः साध्यतास्थले वह्निव्याप्यधूम-पर्वतत्वधर्मद्वयव्यापकसंयोगेन वह्न्यनुमितेः स्वीकारेऽपि पर्वतत्वसामानाधिकरण्येन वह्न्यादिनिश्चयदशायां तादृशानुमितिरपि भवत्येव। सामानाधिकरण्येन साध्यनिश्चयदशायां अवच्छेदावच्छेदेनानुमित्युत्पादस्य सर्ववादिसिद्धतया पर्वतत्वसामानाधिकरण्येन वह्न्यादिनिश्चयकाले शुद्धपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन पर्वतादौ वह्न्याद्यनुमितिस्त्वप्यत एवेत्यापत्तिदानं विभावनीयमिति। यद्यपि आचार्यमते निरुक्तापत्त्यादिवारणायैकदेशव्यापकत्वावच्छिन्नसंसर्गताभ्युपगम आवश्यकस्तथापि यथोक्त-

❀ कलाविलासः ❀

तादृशनिश्चयप्रतिबध्यतावच्छेदककोटौ धर्मितावच्छेदकताया इतरवारकपर्याप्तेरवश्यं निवेशनीयतया आचार्यमते सर्वदैव हेतुविशिष्टपक्षतावच्छेदकस्यैव भानात् अनुमितिसामान्यापत्तिरेवाभ्युपगन्तव्येति।

अथ लिंगोपधानमते ह्रदो वह्निमान् घटत्वादित्यादौ वह्न्यभावव्याप्यवद्घटेऽतिव्याप्तिरेवं ह्रदो गगनवान् धूमादित्यत्र वृत्त्यवच्छेदेन गगनाभाववत्त्वस्यापि

❀ गादाधरी ❀

एवमपि लिङ्गानुपधानमते तादृशविषयतायां मानाभाव एव, प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः, तन्मतेऽनुमितेः सर्वत्रैव तथाकारतया तादृशाकारत्वस्याऽव्यावर्त्तकतयाऽनुमितिपदस्य तादृशानुमितिपरत्वप्रदर्शनाऽसंगतेः ।

केचित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय यथाश्रुतपरतानिर्वाहाय लिङ्गोपधानमतमाश्रयते साध्यव्याप्येत्यादिना, इत्याकारानुमितिपरम् अनुमितेरित्याकारकतामताभिप्रायकम्, इति व्याचक्षते ।

❀ चन्द्रकला ❀

लक्षणघटकानुमितपदं नाचार्यमतसिद्धानुमितिपरमित्याह एवमपीति । प्रकृतग्रन्थस्तु = साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरं वेतिदीधितिग्रन्थस्तु । न लिंगोपधानेति । नाचार्यमताभिप्रायक इत्यर्थः । कथमित्याकांक्षायामाह तन्मत इति । आचार्यमत इत्यर्थः । सर्वत्रैव = पक्षतावच्छेदकावच्छेदेन साध्यस्थले पक्षतावच्छेदकसामानाधिकरण्येन साध्यस्थले च । तदाकारतया = साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारतया । तादृशेति । साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं चेत्यत्राकारत्वस्येत्यर्थः । अव्यावर्त्तकतया = व्यावृत्त्यप्रयोजकतया । तादृशेति । दीधितावनुमितिपदस्य तादृशाकारानुमितिपरत्वप्रदर्शनासंगतेरित्यर्थः । तथाच लक्षणघटकीभूतानुमितिपदं नाचार्यमतसिद्धानुमितिपरमिति भावः । जगदीशव्याख्यानमुपन्यस्यति केचित्त्विति । लिंगानुपधानमते = आचार्यातिरिक्तमते । अनुमितिपदस्येति । लक्षणघटकीभूतेत्यादिः । तदुभयेति । अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धवत्त्वेनेत्यादिः । अनुमितितत्कारणोभयपरत्वमित्यर्थः । यथाश्रुतेति । अनुमितिपदस्य शक्यार्थपरतानिर्वाहायेत्यर्थः । लिंगोपधानेति । आचार्यमतमित्यर्थः । आश्रयते दीधितिकार इति शेषः । नन्वेवं इत्याकारकानुमितिपरं चेत्यभिधानमसंगतमित्यत इत्याकारकानुमितिपरमित्यस्य जगदीशाभिप्रेतव्याख्यानमाहानुमितेरिति । लक्षणघटकानुमितेरित्यर्थः । इत्याकारकतेति । साध्यव्याप्यहेतुविशिष्टे पक्षे साध्यप्रकारकत्वमताभिप्रायकमित्यर्थः । तथा चैतन्मते पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभावादेर्वाधत्वादिरक्षार्थमेकदेशव्यापकत्वावच्छिन्नसंसर्गताभ्युपगम आवश्यक इति भावः । अनुमितिपदस्य निरुक्तसमूहालम्बनानुमितिपरत्वव्याख्ययैव सर्वसामञ्जस्ये यथोक्तरीत्या व्यायाख्यानमनुचितगौरवग्रस्तमित्यत: केचिदित्युक्तमितिध्येयम् ।

❀ दीधितिः ❀

**तेन एकत्र हेतौ व्यभिचारादिग्रहेऽपि अन्यस्य परामर्शादनुमि-**

❀ गादाधरी ❀

एतादृश व्याख्या (याः) प्रयोजनं स्फुटयति तेनेति । एकत्र = वह्नित्वा-द्येकधर्मावच्छिन्ने । व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः । अन्यस्य

❀ चन्द्रकला ❀

एतादृशेति । लक्षणघटकीभूतानुमितिपदस्य अनुमितिनिष्ठकार्यतानिरूपक-सम्बन्धवत्त्वेनानुमिति-तत्कारणपरत्वव्याख्यानस्य साध्यव्याप्यहेतुमान् पक्षःसाध्य-वानित्याकारकानुमितिपरत्वव्याख्यानस्य च प्रयोजनं पूर्वोक्तव्यभिचारादावव्याप्ति-वारणं प्रकाशयतीत्यर्थः ।

[ दीधितौ तेनैकत्रेत्यादि । अनुमितिपदस्य साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरत्वाभिधानेन । एकत्र = हेतुतावच्छेदकवह्नित्वाद्येक-धर्मविशिष्टवह्न्यादिहेतौ । व्यभिचारग्रहेऽपि = धूमाभावाधिकरणनिरूपितवृत्ति-त्वनिश्चयेऽपि । अन्यस्य = महानसीयवह्नित्वादिविशिष्टस्य महानसीयवह्नेः । परामर्शात् = धूमव्याप्यमहानसीयवह्निमान् पर्वत इत्याकारकनिश्चयात् । अनु-मित्युत्पादेन = धूमविधेयकानुमितिजननेन । व्यभिचारादिति । धूमविधेय-कानुमितौ धूमव्यभिचारज्ञानाभावस्य कारणत्वे धूमाभाववद्वृत्तिर्वह्निरित्याकारक-व्यभिचारज्ञानकाले कारणाभावात् धूमविधेयकानुमित्युत्पादेन व्यभिचारात् यदि व्यभिचारज्ञानाभावो न साध्यविधेयताकानुमितिहेतुः स्यात् तदा लक्षणघटकानु-मितिपदस्य साध्यविधेयताकानुमितिपरत्वे धूमवान् वह्नेरित्यादौ व्यभिचारेऽव्याप्तिः स्यात्, तादृशानुमितिकारणीभूताभावपदेन वह्निधर्मिकनिरुक्तव्यभिचारज्ञानाभावस्य धर्तुमशक्यत्वादिति भावः ।

यदि च तल्लिङ्गकपरामर्शाव्यवहितोत्तरजायमानतत्साध्यविधेयताकानुमितौ तल्लिङ्ग-धर्मिकव्यभिचारनिश्चयाभावस्य जनकत्वे न व्यभिचारः, महानसीयवह्न्यादिधर्मिक-धूमव्यभिचारग्रहस्याऽसत्त्वात्, तदाप्याह व्याप्त्यादिज्ञानेनेति । तथाच धूमसाध्य-कानुमितौ हेतुधर्मिकधूमव्याप्तिज्ञानत्वेन जनकत्वस्य सर्वसम्मतस्य कल्पनेनैवोपपत्तौ तत्साध्यकानुमितौ तत्साध्यव्यभिचारग्रहाभावोऽन्यथासिद्ध एवेति हृदयम् ।

व्यभिचारादिग्रहाभावस्य = धूमव्यभिचारी वह्निरित्याकारकनिश्चयाभावस्य । अनुमित्यजनकत्वेऽपि = साध्यविधेयताकानुमित्यजनकत्वेऽपि । न क्षतिरिति । तादृशानुमितिपदस्य साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरतया तस्याश्च व्याप्त्यादिविषयकत्वेन व्याप्त्यादिग्रहविरोधिनि व्यभिचारादौ नाव्याप्ति-रित्याशयः । ] व्यभिचारादिग्रहे इत्यत्रादिपदप्रयोजनमाह टीकायाम् आदिनेति । दीधित्युक्ततादृशादिनेत्यर्थः । स्वरूपासिद्धिपरिग्रह इति । तथाच हृदो

❀ गादाधरी ❀

परामर्शात्=तत्तद्वह्नित्वादिरूपाऽपरधर्मावच्छिन्ने व्याप्तिपक्षधमत्वावगाहि-ज्ञानात् । व्यभिचारादिति=व्यभिचारादिग्रहाभावस्याऽनुमित्यजनकत्वेऽपीत्य-नेन सम्बन्धः । यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथंचि-त्तद्रूपाच्छिन्नलिङ्गकपरामर्शस्तत्र क्षणैकविलम्बेनाऽनुमित्युपगमाद्व्यभि-

❀ चन्द्रकला ❀

वह्निमान् धूमादित्यादौ ह्रदादौ धूमाभावनिश्चयकालेऽपि जलादिलिङ्गकपरामर्शात् ह्रदादौ वह्न्याद्यनुमित्युत्पादेन व्यभिचारात् स्वरूपासिद्धिनिश्चयाभावस्य तत्साध्य-कानुमित्यकारणत्वेऽपि अनुमितिपदस्य यथोक्तानुमितिपरत्वाभिधानान्न स्वरूपा-सिद्धावप्यव्याप्तिरिति भावः । तद्वह्नित्वादीति । महानसीयवह्नित्वादिरूपापरधर्मा-वच्छिन्न इत्यर्थः । व्याप्तीति । धूमव्याप्यमहानसीयवह्न्यादिमान् पर्वत इत्याकारकनिश्चयादित्यर्थः । व्यभिचारादित्यत्र पञ्चम्यर्थहेतुताया व्यभिचारग्रहा-भावनिष्ठानुमितिजनकत्वाभाव एवान्वय इत्याह व्यभिचारादित्यादीति । अनु-मित्यजनकत्वेऽपि = साध्यमात्रविधेयताकानुमितिजनकत्वाभावेऽपि । सम्बन्ध इति । तथाच व्यभिचारग्रहाभावः साध्यमात्रविधेयताकानुमितिजनकत्वाभाववान् स्वाभावप्रयोज्याभावाप्रतियोगिताद्दशानुमितिकत्वरूपव्यभिचारादिति प्रयोगे तात्पर्यम् , स्वं व्यभिचारग्रहाभावः ।

ननु यादृशस्थले प्रथमे धूमव्यभिचारी वह्निरिति व्यभिचारज्ञानं ततो लौकिक-सन्निकर्षवशात् धूमव्याप्यवह्निमानयमिति परामर्शस्ततः पर्वतो धूमवानित्य-नुमितिर्भवति तादृशस्थले वह्निरूपैकहेतौ व्यभिचारग्रहपरामर्शयोरुत्पादेन व्यभिचारग्रहदशायामेव धूमानुमित्युत्पादादेकहेतावेव व्यभिचारग्रहाभावस्य व्यभिचारसम्भवे हेत्वन्तरस्य परामर्शदशायां व्यभिचाराभिधानमनुचितमित्यत आह यत्रेति । यादृशस्थल इत्यर्थः । तद्रूपेति । वह्निस्वरूपधर्मावच्छिन्ने इत्यर्थः । व्यभिचारेति । धूमाद्यभाववद्वृत्तित्वज्ञानोत्पत्तिद्वितीयक्षण इत्यर्थः । कथञ्चित्= लौकिकसन्निकर्षादिना । यद्रूपेति । वह्नित्वादिधर्मावच्छिन्नलिंगधर्मिक-धूमव्याप्तिपक्षधर्मतानिश्चयात्मकपरामर्श इत्यर्थः । तत्र = तादृशस्थले । क्षणविलम्बेन = व्यभिचारज्ञानोत्पत्तिचतुर्थक्षणात्मकपरामर्शोत्पत्तितृतीयक्षणेन । अनुमित्युपगमात् = धूमाद्यनुमितिस्वीकारात् । व्यभिचाराभावाच्चेति । व्यभि-

❀ कलाविलासः ❀

दोषत्वापत्तिः, तादृशगगनाभावादिनिश्चयस्य धूमव्यापकतावच्छेदकगगनत्वा-वच्छिन्नसमानाधिकरणधूमवान् ह्रदो गगनवानित्याकारकानुमितिप्रतिबन्धकत्वा-दिति चेन्न, अलक्ष्यीभूततत्तत्पदार्थनिश्चयनिष्ठतत्तत्प्रतिबन्धकताभेदस्य लक्षण-घटकीभूतप्रतिबन्धकतायां विवक्षितत्वादिति संक्षेपः ।

❀ गादाधरी ❀

चाराभावाच्च न तत्र व्यभिचारो दर्शितः।

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचार-

❀ चन्द्रकला ❀

चारग्रहाभावस्येत्यादिः। तत्र = एकहेतुकव्यभिचारादिग्रहकाले। दर्शित इति। नेति पूर्वेण सम्बन्धः। तथाचोक्तस्थले व्यभिचारज्ञानोत्पत्तिचतुर्थक्षणरूपपरामर्श-तृतीयक्षणे अनुमितिस्वीकारे व्यभिचारग्रहाभावस्य न व्यभिचारः, व्यभिचारज्ञानस्य अनुमितिपूर्वक्षण एव विनष्टत्वात्तदानीञ्च व्यभिचारग्रहाभावरूपकारणस्य विद्यमान-त्वादत एकहेतौ व्यभिचारग्रहकालीनान्यहेतुकपरामर्शदशायामनुमित्युत्पादेन व्यभिचारो दीधितिकृता प्रदर्शितः, यत्रादौ तद्वह्निलिंगकपरामर्शस्ततो वह्नि-लिंगकव्यभिचारग्रहस्तत्र क्षणविलम्बेनानुमित्युत्पादस्य कथमपि वक्तुमशक्य-त्वादिति भावः।

व्याप्त्यादिज्ञानेनेत्यादिदीधितिमवतारयति नन्विति। तथाच महानसीय-वह्नित्वावच्छिन्नलिंगकानुमितौ महानसीयवह्नित्वावच्छिन्नलिंगकव्यभिचारग्रहा-भावस्यैव जनकतया तस्य च निरुक्तस्थले अनुमितिपूर्वं सत्त्वान्न व्यभिचारः, व्यभिचाराभावे च व्यभिचारग्रहाभावस्यानुमितिकारणीभूतस्य प्रतियोगियथार्थ-ज्ञानविषयताया व्यभिचारादौ सत्त्वात् तत्र लक्षणसमन्वयसम्भवेऽनुमितिपदस्य तादृशानुमितिपरत्वाभिधानमसंगतमिति भावः।

ननु वह्नित्वावच्छिन्नधर्मिकव्यभिचारग्रहकालीनतद्वह्नित्वावच्छिन्नलिङ्गकपरा-मर्शोत्तरं जायमानानुमितेर्यदि वह्नित्वावच्छिन्नलिङ्गकानुमितित्वं तदा दीधितिकार-प्रदर्शितस्थलेऽपि व्यभिचारोऽस्त्येवेति व्याप्त्यादिज्ञानेनेत्याद्यभिधानमसंगतमित्यत आह तद्धर्मावच्छिन्नेति। व्यभिचारज्ञानाभावकार्यतावच्छेदकमित्यादिः।

❀ कलाविलासः ❀

न तत्र व्यभिचारो दर्शित इति। ननु यत्रैकदैव व्यभिचारज्ञानं व्याप्तिज्ञानञ्च वह्नित्वादिसामानाधिकरण्येन जातं तत्र यत्रादौ अपेक्षाबुद्ध्यात्मकं व्यभिचारज्ञानं ततो लौकिकसन्निकर्षात् परामर्शस्तत्र क्षणैकविलम्बेनानुमितेः स्वीकारेऽपि व्यभि-चारतादवस्थ्यम्, एवं यत्रैकहेतौ व्यभिचारज्ञानोत्पत्तिचतुर्थक्षणे बाधनिश्चयो जातस्तत्र क्षणविलम्बेनानुमितेः स्वीकर्तुमशक्यत्वाद् व्यभिचारतादवस्थ्यमिति चेन्न, सामानाधिकरण्येन व्याप्तिज्ञानस्य कारणत्वं अपेक्षाबुद्धिद्वितीयक्षणे ज्ञानान्तरोत्पाद बाधनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धकत्वञ्चास्वीकृत्यैव न तत्रेत्यादेर-भिहितत्वादिति ध्येयम्।

❀ गादाधरी ❀

ज्ञानाभावस्य हेतुत्वोपगमान्न व्यभिचारः, तद्धर्मावच्छिन्नलिङ्गकत्वं च अव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वम्, तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यम्, तेन धूमव्याप्यवह्निमानयमित्यादिशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो वह्निर्धूमव्यभिचारी धूमव्याप्येन्धनवानित्याकारकसमूहालम्बनग्रहः तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नि-

❀ चन्द्रकला ❀

तद्रूपेति। तद्वह्नित्वादिधर्मावच्छिन्नविशेष्यकं यद् व्याप्त्यादिज्ञानं अव्यवहितोत्तरत्वसम्बन्धेन तद्विशिष्टत्वं तद्वह्नित्वादिविशेष्यकव्यभिचारज्ञानाभावजन्यतावच्छेदकं वाच्यमिति योजना। अत्राऽव्यवहितोत्तरत्वं तादृशव्याप्त्यादिज्ञानध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तादृशव्याप्त्यादिज्ञानध्वंसाधिकरणकालत्वरूपं तृतीयक्षणसाधारणं बोध्यमित्यन्यत्र विस्तरः।

तादृशसम्बन्धेन = अव्यवहितोत्तरत्वसम्बन्धेन। व्यभिचारज्ञानेति। तद्धर्मावच्छिन्नधर्मिकमित्यादिः। तदन्यत्वम् = तद्भिन्नत्वम्। तद्भिन्नानुमितित्वमितियावत्। जन्यतावच्छेदकमिति। व्यभिचारज्ञानाभावस्येत्यादिः। तेनेति। तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यदित्यादिद्वितीयकल्पानुसरणेनेत्यर्थः। धूमव्याप्यवह्निमानयमित्याकारकपरामर्शस्य लौकिकसन्निकर्षादिजन्यत्वे तादृशपरामर्शोत्तरं वह्निधर्मिकधूमव्यभिचारग्रहस्य लौकिकसन्निकर्षजन्यस्यापि उत्पादो न सम्भवति लौकिकसन्निकर्षजन्यतत्प्रकारकप्रत्यक्षे लौकिकसन्निकर्षजन्यतदभावनिश्चयस्य प्रतिबन्धकत्वादतस्तादृशपरामर्शस्य शाब्दबोधाद्यात्मकत्वमाह धूमव्याप्येति। शाब्दादीत्यत्रादिनाऽनुमित्यादिपरिग्रहः। लौकिकसन्निकर्षजन्यप्रत्यक्षस्य सर्वतो बलवत्त्वेन विपरीतशाब्दनिश्चयाप्रतिबध्यत्वादाह लौकिकेति। धूमव्यभिचारी = धूमाभाववद्वृत्तिः। निरुक्तव्यभिचारज्ञानोत्तरमप्यनुमितिरवश्यमुत्पद्यते इत्याह धूमव्याप्य इति। इत्याकारकसमूहालम्बनग्रहः = इत्याकारकव्यभिचारग्रहात्मकपरामर्शः। तत्र = तादृशस्थले। तज्जन्यानुमितेः = निरुक्तेन्धनलिंगकसमूहालम्बनपरामर्शजन्यानुमितेः। उक्तसम्बन्धेन = अव्यवहितोत्तरत्वसम्बन्धेन।

❀ कलाविलासः ❀

तद्धर्मावच्छिन्नलिंगकत्वमित्यादि। अत्राव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं बोध्यम्, तेन यत्रादौ वह्नित्वावच्छिन्ने धूमव्यभिचारग्रहस्ततो लौकिकसन्निकर्षवशाद् धूमव्याप्यवह्निमानयमितिपरामर्शस्ततः परामर्शतृतीयक्षणेऽनुमितिस्तादृशानुमितेः परामर्शद्वितीयक्षणे नापत्तिः, नवा यत्रापेक्षाबुद्ध्यात्मकव्यभिचारज्ञानं ततोऽपेक्षा-

❀ दीधितिः ❀

त्युत्पादेन व्यभिचाराद् व्याप्त्यादिज्ञानेनाऽन्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्याऽनुमित्यजनकत्वेऽपि न क्षतिरिति

❀ गादाधरी ❀

त्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरत आह व्याप्त्यादीति । क्लृप्तकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणाऽनुमितिव्यतिरेकस्याऽसिद्धत्वादिति भावः । व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावादिना अन्यथासिद्धत्वशङ्का तु प्रागेव निराकृता । न क्षतिः= न व्यभिचारादावव्याप्तिः । यत्राऽसद्धेतुविशेषे तादृशानुमितेरप्रसिद्धिः

❀ चन्द्रकला ❀

न क्षतिः=न व्यभिचारतादवस्थ्यम् । अयं भावः, अव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्याप्तिज्ञानविशिष्टानुमितिं प्रति तद्धेतुधर्मिकव्यभिचारज्ञानाभावस्य कारणत्वविवक्षणे यादृशस्थले धूमव्याप्यवह्निमानयमितिशाब्दबोधाद्यात्मकः परामर्शस्ततो लौकिकसन्निकर्षात् धूमव्यभिचारी वह्निः धूमव्याप्येन्धनवाँश्चायमित्याकारकसमूहालम्बनवह्निधर्मिकधूमव्यभिचारग्रहात्मकेन्धनलिंगकपरामर्शस्ततो धूमानुमितिस्तादृशानुमितेरव्यवहितोत्तरत्वसम्बन्धेन वह्निधर्मिकधूमव्याप्तिज्ञानविशिष्टतया निरुक्तानुमितिं प्रति वह्निधर्मिकव्यभिचारज्ञानाभावस्य जनकतया तस्य चा नुमत्यव्यवहितपूर्वक्षणेऽसत्त्वात्, अतोऽव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यानुमितित्वावच्छिन्नं प्रत्येव तद्धेतुधर्मिकव्यभिचारज्ञानाभावस्य हेतुत्वं वक्तव्यम्, एवञ्च निरुक्तरीत्या कार्यकारणभावकल्पने नोक्तस्थले व्यभिचारः, निरुक्तानुमितेरव्यवहितोत्तरत्वसम्बन्धेन वह्निधर्मिकधूमव्यभिचारज्ञानविशिष्टतया तदन्यानुमितिं प्रत्येव वह्निधर्मिकधूमव्यभिचारज्ञानाभावस्य जनकत्वात् नतु यथोक्तानुमिताविति । क्लृप्तेति । अवश्यक्लृप्ता प्रकृतानुमितिकारणता यत्र तादृशव्याप्तिज्ञानसत्त्वदशायामित्यर्थः । व्यभिचारेति=व्यभिचारज्ञानसत्त्वेपीत्यर्थः । अनुमितीति=प्रकृतानुमित्यनुत्पादस्य । असिद्धत्वादिति । व्यभिचारज्ञानाभावस्यान्यथासिद्धत्वादनुमितिपदस्य यथाश्रुतार्थपरत्वे भवति व्यभिचारादावव्याप्तिरित्याशयः ।

ननु व्याप्तिज्ञानस्यैव व्यभिचारज्ञानाभावेनान्यथासिद्धत्वमस्त्वित्यत आह व्याप्तिज्ञानादेरिति । प्रागेवेति । तेनैकहेतावित्यादिग्रन्थेनेत्यादिः । नाव्याप्तिरिति । लक्षणघटकीभूतानुमितिपदस्य साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरत्वव्याख्यानेनेत्यादिः । आहार्यपरोक्षज्ञानानभ्युपगमात् निर्वह्निपर्वतो वह्निमान् धूमादित्यादौ अनुमित्यप्रसिद्ध्या अनुमितिघटितलक्षणं तादृशस्थलीयदोषेऽव्याप्तमित्यतो दीधितिकृता वदन्तीत्युक्तमित्याह यत्रेति । असद्धेतुविशेषे = निर्वह्निपर्वतपक्षकवह्न्यादिसाध्यकधूमादिहेतुविशेषे ।

❀ दीधितिः ❀

वदन्ति ।

पर्वतो निर्वह्निर्धूमो वह्ने रभिधेयत्वं मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति ।

❀ गादाधरी ❀

तत्रत्यदोषेष्वव्याप्तेर्वक्ष्यमाणतया ईदृशव्याख्यायामनिर्भरसूचनाय वदन्तीत्युक्तम् ।

पर्वतो वह्निमानित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽतिव्याप्तिवारकतया यथार्थपदं सार्थकयति पर्वतो निर्वह्निरिति । अत्र इतिपदस्य त्रितयस्थले सम्बन्धाद् भ्रमत्रयलाभः । प्रत्येकभ्रममादायाऽतिप्रसङ्गसम्भवात् समूहालम्बनभ्रमपर्यन्तानुधावनवैफल्यात् तत्परत्वाऽसङ्गतिरिति ध्येयम् ।

❀ चन्द्रकला ❀

वक्ष्यमाणतयेति । दीधितिकृतेति शेषः। ईदृशेति । लक्षणघटकानुमितिपदस्य अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणपरत्वव्याख्यायां साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरत्वव्याख्यायाञ्चेत्यर्थ इति दिक् । बाधादीति । वह्न्यभाववान् पर्वत इत्याकारकनिश्चयविषयेषु वह्न्यभावपर्वतादिष्वित्यर्थः । आदिना व्यभिचारादिभ्रमपरिग्रहः । यथार्थपदम् प्रमाज्ञानार्थकम् । सार्थकयतीति । तथा च यथार्थपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ पर्वतादौ वह्न्यभावादौ चातिव्याप्तिः, पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्न्यभाववानित्याकारकभ्रमात्मकनिश्चयाभावस्यापि कारणतया अनुमितिकारणीभूताभावप्रतियोगितादृशभ्रमविषयतायाः पर्वतादौ सत्त्वात् । एवं वह्न्यभाववद्वृत्तित्वादावप्यतिव्याप्तिः प्रकृतानुमितेर्व्याप्त्यादिविषयकत्वेन व्याप्तिविषयकानुमितिप्रतिबन्धकवह्न्यभाववद्वृत्तिर्धूम इत्याकारकभ्रमविषयताया वह्न्याद्यभाववद्वृत्तित्वादावनपायात् न केवलं व्यतिरेकिसाध्यकस्थल एवातिव्याप्तिः केवलान्वयिसाध्यकप्रमेयमभिधेयत्वादित्यादावपि मेयत्वाभिधेयत्वादावतिव्याप्तिः, घटत्वाद्यभावादौ प्रतियोगितासम्बन्धेन मेयत्वभ्रमात्मकमेयत्वाभाववद्वृत्त्यभिधेयत्वमित्याकारकज्ञानस्यापि मेयत्वव्याप्तिविषयकानुमितिप्रतिबन्धकतया तद्विषयत्वस्य मेयत्वादौ सत्त्वात्, यथार्थपददाने तु न तत्र तत्रातिव्याप्तिः, पर्वतादौ वह्न्यभावादेर्ज्ञानस्य भ्रमात्मकतया यथार्थत्वासम्भवादिति भावः । अत्रेतिपदस्य = व्यभिचारीत्यादिग्रन्थघटकीभूतेतिपदस्य । त्रितयस्थले = पर्वतो निर्वह्निरित्यादिस्थले । सम्बन्धादिति । तथा च पर्वतो निर्वह्निरितिभ्रमात् धूमो वह्नेर्व्यभिचारीति भ्रमात् अभिधयेत्वं मेयत्वस्य व्यभिचारीति भ्रमादिति योजनेत्याशयः ।

ननु समूहालम्बनैकभ्रममादायैवातिव्याप्तिसम्भवे भ्रमत्रितयानुसरणमनुचितमित्यत आह प्रत्येकेति । तत्परत्वाऽसंगतिः =समूहालम्बनभ्रमपरत्वा-

### ❀ गादाधरी ❀

प्रथमभ्रमोऽनुमितौ विरोधी अन्त्यौ च तज्जनकज्ञाने तथा, तयोरपि अन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे भ्रमत्वम्, अन्त्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याऽप्रसिद्ध्या न तद्भ्रमत्वं, किन्तु अभावांशेऽनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादृत्य शिष्यव्युत्पादनायाऽनेकविधभ्रमकथनम्।

### ❀ चन्द्रकला ❀

संगतिः। प्रथमभ्रमः = पर्वतो निर्वह्निरित्याकारः पर्वतविशेष्यकवह्न्यभावप्रकारकभ्रमः। अनुमितौ = पर्वतो वह्निमान् इत्याकारकपर्वतविशेष्यकवह्निप्रकारकानुमितौ, विरोधी = प्रतिबन्धकः। अन्त्यौ = धूमो वह्नेर्व्यभिचारीत्याकारकः धूमविशेष्यकवह्न्यभाववद्वृत्तित्वरूपवह्निव्यभिचारभ्रमः अभिधेयत्वविशेष्यकप्रमेयत्वाभाववद्वृत्तित्वप्रकारकाभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकश्च। तज्जनकज्ञाने = वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शात्मकवह्न्यनुमितिजनकज्ञाने मेयत्वव्याप्याभिधेयत्ववानयमित्याकारकमेयत्वानुमितिजनकपरामर्शे च विरोधिनाविति शेषः। तयोरपि = निरुक्तान्त्यभ्रमयोर्मध्ये। प्रथमे = धूमो वह्नेर्व्यभिचारीत्याकारकभ्रमे। अन्यत्र = मीनादौ। साध्येति। वह्न्यभाववद्वृत्तित्वस्येत्यर्थः। धूमाद्यंशे = धूमादिरूपविशेष्ये। भ्रमत्वम् = वह्न्यभाववद्वृत्तित्वाभाववद्धूमनिष्ठविशेष्यतानिरूपितवह्न्यभाववद्वृत्तित्वनिष्ठप्रकारताकज्ञानत्वम्। अन्त्ये = अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकभ्रमे। प्रमेयत्वेति। अखण्डस्येत्यादिः। न तद्भ्रमत्वम् = न प्रमेयत्वाभाववद्वृत्तित्वाभाववद्विशेष्यकतादृशवृत्तित्वप्रकारकज्ञानत्वम्। कथन्तानिवृत्त्यर्थमाह किन्त्विति। अभावांशे = घटाद्यभावादिरूपविशेष्ये। अनुयोगितेति। स्वनिष्ठप्रतियोगितानिरूपितानुयोगितावत्त्वसम्बन्धेनेत्यर्थः। साध्यस्य = प्रमेयत्वस्य, भ्रमत्वम् = तादृशानुयोगितासम्बन्धेन प्रमेयत्वाभाववद्घटाभावादिनिष्ठविशेष्यतानिरूपिततादृशानुयोगितासम्बन्धेन प्रमेयत्वप्रकारकज्ञानत्वम्। इत्येतादृशेति। निरुक्तविभिन्नसम्बन्धमादृत्येत्यर्थः। शिष्येति। शिष्याणां विशेषज्ञानजननायेत्यर्थः। अनेकेति। विभिन्नभ्रमाभिधानं दीधितिकृत इति शेषः।

### ❀ कलाविलासः ❀

बुद्ध्यात्मकः परामर्शस्तत्र पञ्चमक्षणेऽनुमितिर्भवति तादृशानुमितेश्चतुर्थक्षण आपत्तिः।

❀ गादाधरी ❀

इदं त्ववधेयम् । अभिधेयत्वं मेयत्वस्य व्यभिचारीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वभ्रमो वाच्यः, प्रतियोगितांशे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः साध्याभाववदवृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात् , एवञ्च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्ब-

❀ चन्द्रकला ❀

शंकते इदन्त्ववधेयमिति । अन्त्यभ्रम इत्यादिः । भ्रम इति । अभावांशे इत्यादिः ।

ननु स्वरूपसम्बन्धानवच्छिन्नकेवलप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव प्रमेयत्वस्य भ्रमो वक्तव्यस्तथा च नानुपपत्तिः, भेदनिष्ठस्यैव केवलप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धत्वादित्यत आह प्रतियोगितांश इति । तदंशे = प्रतियोगित्वांशे । तदुभयेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वरूपोभयावगाहिव्यभिचारज्ञानस्येत्यर्थः । व्याप्तिज्ञानविरोधित्वादिति । तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वरूपव्याप्तिबुद्धौ तादृशसम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वरूपव्यभिचारज्ञानस्यैव प्रतिबन्धकतया केवलप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वविशिष्टाभाववदवृत्तित्वरूपव्यभिचारग्रहस्य अनुमितिजनकज्ञानाऽविरोधित्वेन प्रमेयत्वाभिधेयत्वादावतिव्याप्तिदानमनुचितं स्यादिति भावः ।

भ्रमानुपपत्तिं प्रदर्शयति एवञ्चेति । समानाकारकज्ञानस्यैव प्रतिबन्धकत्वे चेत्यर्थः । भेदादौ = अन्योन्याभावादौ । आदिना व्यधिकरणसमवायादिना प्रमेयत्वाभावपरिग्रहः । प्रसिद्धावपीति । प्रमेयत्वं नेत्याकारकान्योन्याभावस्य सर्ववादिसिद्धतया तस्यैव प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वादित्याशयः । स्वरूपेति । साध्यतावच्छेदकीभूतेत्यादिः । स्वरूपेण प्रमेयत्वं नास्तीत्याकारका-

❀ कलाविलासः ❀

प्रमेयत्वभ्रमो वाच्य इति । ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नप्रकारतानिरूपिताभावविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेनानुमितिहेतुत्वोक्तौ भ्रमस्य नानुपपत्तिः, स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्याभावांशे भ्रमत्वसम्भवादिति चेन्न, एवं सति गुणकर्मान्यत्वोपलक्षितसत्ताभाववदवृत्तित्वज्ञानात् शुद्धसत्तात्वावच्छिन्नविधेयताकानुमित्यनुपपत्तेः, उपलक्षणीभूतधर्मस्यापि

❀ गादाधरी ❀

न्धावच्छिन्नतादृशप्रतियोगिताकत्वाऽप्रसिद्ध्या तादृशसम्बन्धेन भ्रमत्वानुपपत्तिः। प्रतियोगितांशे सम्बन्धविशेषावच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम्। तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः।

❀ चन्द्रकला ❀

भावस्यालीकतयेतिभावः। तादृशेति। साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटाभावादौ प्रमेयत्वभ्रमानुपपत्तिरित्यर्थः। सदुपरागेणासतः संसर्गमर्यादया भानस्य उपाध्यायादीनामननुमतत्वादिति भावः। नचैवं भ्रमानुपपत्त्या यथाभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकव्यभिचारज्ञानाऽप्रसिद्धिस्तथा तत्प्रतिबध्यप्रमेयत्वव्याप्तिज्ञानस्याप्यप्रसिद्धिरिति तदकथनेन न्यूनता स्यादिति वाच्यम्, भ्रममात्रानुपपत्तिकथनेन निरुक्तव्यभिचारज्ञानाऽप्रसिद्धेरिव तादृशव्याप्तिज्ञानाऽप्रसिद्धेरपि भट्टाचार्यसम्मतत्वादिति ध्येयम्।

ननु भेदादौ प्रसिद्धस्य प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य घटकीभूतायां प्रतियोगितायामेव साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नत्वस्य भ्रमः इति न भ्रमानुपपत्तिरित्याशंकते प्रतियोगित्वांश इति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपसम्बन्धघटकीभूते इत्यादिः। सम्बन्धेति। स्वरूपसम्बन्धावच्छिन्नत्वस्येत्यर्थः। भ्रमः = स्वरूपसम्बन्धावच्छिन्नत्वाभाववत्तादृशप्रतियोगित्वनिष्ठविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नत्वनिष्ठप्रकारताकज्ञानम्। समाधत्ते इत्यपि न युक्तमिति। निरुक्तरीत्या भ्रमोपपादनमपि न युक्तमित्यर्थः। कथमित्याकाङ्क्षायामाह तस्येति। निरुक्तसम्बन्धविशेषावच्छिन्नत्वस्येत्यर्थः। सम्बन्धेति। तादृशप्रतियोगिताकत्वरूपसम्बन्धघटकतयेत्यर्थः। तत्प्रकारकत्वेति। स्वरूपसम्बन्धावच्छिन्नत्वप्रकारकत्वघटितस्य भ्रमस्यानुपपत्तेरित्यर्थः। सम्बन्धघटकपदार्थे विशेष्यविशेषणभावसत्त्वेऽपि तत्र प्रकारविशेष्यभावानभ्युपगमात् निरुक्तसम्बन्धघटकस्वरूपसम्बन्धावच्छिन्नत्वाभाववन्निष्ठविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नत्वनिष्ठप्रकारताकत्वघटितभ्रमो न सम्भवतीति हृदयम्।

❀ कलाविलासः ❀

प्रकारतावच्छेदकत्वात्, अतः प्रतियोगितायामेव साध्यतावच्छेदकमात्रावच्छिन्नत्वं देयमुपलक्षणीभूतधर्मस्य प्रतियोगितानवच्छेदकत्वेन तादृशानुपपत्तिवारणसम्भवादिति वदन्ति।

तत्प्रकारकत्वघटिततद्भ्रमत्वेति। अथ व्युत्पत्तिवादे संसर्गतावच्छेदकांशे

❀गादाधरी❀

**न च तेन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः नतु तदवच्छिन्नप्रतियोगितासंसर्गक इति वाच्यम्, लाघवात् प्रतियोगितासंसर्ग-**

❀ चन्द्रकला ❀

पुनः शंकते नचेति । वाच्यमिति परेणान्वयः । तेन रूपेण = साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वेन रूपेण । प्रतियोगिताप्रकारक इति । निरूपकत्वसम्बन्धेनेत्यादिः । अत्र = अभिधेयत्वं मेयत्वस्य व्यभिचारीत्यत्र । विवक्षित इति । तथा च निरुक्तप्रतियोगिताया अभावांशे निरूपकत्वसम्बन्धेन प्रकारतया तद्घटकीभूतपदार्थेऽपि प्रकारताया अवश्यं स्वीकरणीयतया सम्बन्धान्तरावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नत्वस्य भ्रमोऽवश्यमुपपद्यत इत्याशयः ।

प्रतियोगिप्रकारक एवेत्यत्रैवकारार्थं स्पष्टयति नत्विति । नतु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंसर्गक इत्यर्थः । उत्तरयति लाघवादिति । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वादेः संसर्गान्तरानभ्युपगमेनेत्यादिः । प्रतियोगितेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्व-

❀ कलाविलासः ❀

भ्रमत्वं भट्टाचार्येणैव स्वीकृतं व्याप्तिपञ्चके च जगदीशेन संसर्गप्रकारसाधारणविशेष्यविशेषणभावस्य भ्रमत्वघटकत्वादित्युक्तमुभयत्र का युक्तिरिति चेन्न, संसर्गतावच्छेदकांशे भ्रमत्वमंगीकुर्वतामयमाशयः, संसर्गांशे भ्रमत्वानभ्युपगमे प्रमात्वस्यापि तत्राऽस्वीकारापत्तेः, निर्विकल्पकान्यज्ञानस्य भ्रमत्वप्रमात्वान्यतरनियमेन संसर्गांशे तदस्वीकारेऽनुभवविरोधात्, अतः संसर्गांशे प्रकारविशेष्यभावविरहेऽपि विशेष्यविशेषणभावोऽस्ति, परन्तु संसर्गतावच्छेदकीयविषयताया विशेषणज्ञानजन्यतानवच्छेदकत्वेन तत्र प्रकारत्वं नाभ्युपगम्यते, एवञ्च तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठविशेषणताकज्ञानत्वमेव भ्रमत्वं पर्यवसितम् । संसर्गांशे भ्रमत्वमनभ्युपगच्छतां तावदयमाशयः, संसर्गांशे विशेष्यविशेषणभावोऽपि नास्त्येव, संसर्गतावच्छेदकत्वेनैव संसर्गगतधर्माणां भानं नतु विशेषणत्वेन; विशिष्टबुद्धावपि संसर्गांशे प्रमात्वं किमपि नास्तीत्यभिप्रेत्य भट्टाचार्येणात्र भ्रमत्वं खण्डितम्, परन्तु प्रकारांशे प्रमानिरूपितसांसर्गिकविषयत्वमेव संसर्गेऽभ्युपगम्यत इति ध्येयम् ।

लाघवात्प्रतियोगितासंसर्गकेति । ननु प्रतियोगिताप्रकारकज्ञानस्यैवानुमितिहेतुत्वे लाघवम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताघटितधर्मेण तद्धेतुत्वे

❀ गादाधरी ❀

कज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञानस्याऽकिञ्चित्कर-रत्वात् ।

अत्राहुः— स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता-

❀ चन्द्रकला ❀

रूपव्याप्तिज्ञानस्यैवेत्यर्थः । तत्प्रकारकेति । निरूपकत्वसम्बन्धेन साध्यतावच्छेद-कसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नत्वविशिष्टप्रतियोगिताविशिष्टाभाववदवृत्तित्वरूपव्यभिचारज्ञानस्येत्यर्थः । अकिञ्चित्करत्वादिति । तादृशव्याप्तिज्ञानाप्रतिबन्धकत्वादिति हृदयम् । प्रतियोगितासंसर्गकज्ञानस्यानुमितिहेतुत्वे प्रतियोगितानिष्ठस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वादेः संसर्गविषयतायाः कारणतावच्छेदककुक्षावप्रविष्टतया लाघवात् साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभाववद-वृत्तित्वरूपव्याप्तिबुद्धौ तादृशसम्बन्धेन साध्यविशिष्टाभाववदवृत्तित्वरूपव्यभिचार-ज्ञानस्यैव प्रतिबन्धकतया निरूपकत्वसम्बन्धेन तादृशप्रतियोगिताविशिष्टाभाव-वदवृत्त्यभिधेयत्वमित्याकारकव्यभिचारभ्रमस्य प्रतियोगितासंसर्गकतादृशव्याप्ति-ज्ञानाप्रतिबन्धकत्वात् यथार्थपदानुपादाने निरुक्तभ्रमविषयेऽतिव्याप्तिदानमसंगतं स्यादिति तु परमार्थः ।

समाधानमाह अत्राहुरिति । केचिदितिशेषः । स्वावच्छिन्नेति । स्वं साध्यतावच्छेदकम्, तथाच साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धा-वच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वप्रकारक-हेतुविशेष्यकव्याप्तिज्ञानमेवानुमितिकारणं वक्तव्यम्, सम्बन्धघटकपदार्थविषय-तायाः संसर्गानवच्छिन्नत्वेन कारणतावच्छेदकविषयताया लघुत्वात् । एवञ्च तादृश-व्याप्तिविशिष्टहेतुमान् पक्षः साध्यवानित्याकारकानुमितिप्रतिबन्धकव्यभिचारभ्रमस्य

❀ कलाविलासः ❀

तु साध्यतावच्छेदकस्य द्विधा प्रवेशेन गौरवम् । नच साध्यतावच्छेदकसम्बन्धा-वच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रकारतात्वेनैव प्रकारतायाः कारणतावच्छेदककोटौ प्रवेशो न तु साध्यतावच्छेदकावच्छिन्नत्वेनेति वाच्यम्, वह्नित्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटा-भाववदवृत्तिधूमवान् पर्वत इति परामर्शात्पर्वते वह्न्यनुमित्यापत्तेरिति चेन्न, प्रतियोगिताप्रकारकज्ञानस्यानुमितिकारणत्वे प्रतियोगित्वनिष्ठप्रकारताया अपि किञ्चित्सम्बन्धावच्छिन्नतया तत्सम्बन्धनिष्ठसांसर्गिकविषयतायाः प्रतियोगिता-कुक्षिप्रविष्टसाध्यतावच्छेदकधर्मावच्छिन्नत्वादिनिष्ठप्रकारताया अपि किञ्चित्सम्ब-

❀ गादाधरी ❀

ताकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वमेवाऽभावस्य साध्याभाववद्-वृत्तित्वरूपव्याप्तिघटकं लाघवात्। एवं च तादृशेन सम्बन्धेनाऽभावांशे साध्यतावच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्व-त्वादेः प्रसिद्धेन तादृशसम्बन्धेन प्रमेयत्वत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति न किञ्चिदनुपपन्नम्।

❀ चन्द्रकला ❀

नानुपपत्तिरित्याह एवञ्चेति। निरुक्तव्याप्तिज्ञानस्यानुमितिहेतुत्वे चेत्यर्थः। तादृशेति। स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेनेत्यर्थः। अभावांशे = अभावरूपविशेष्ये। साध्यतेति। साध्यतावच्छेद-कविशिष्टाभाववद्वृत्तिहेतुरित्याकारकसाध्यतावच्छेदकनिष्ठतादृशसम्बन्धावच्छिन्न-प्रकारतानिरूपिताभावनिष्ठविशेष्यताकव्यभिचारज्ञानस्येत्यर्थः। व्याप्तीति। तादृशसम्बन्धेन साध्यतावच्छेदकविशिष्टाभाववद्वृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धक-तयेत्यर्थः। घटत्वत्वादेरिति। आदिना पटत्वत्वादिपरिग्रहः। प्रसिद्धेनेति। स्वरूपेण घटत्वं नास्तीत्यभावादावित्यादिः। तादृशेति। स्वावच्छिन्नस्वरूप-सम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्यर्थः। प्रमेयत्वत्वादेरिति। साध्य-तावच्छेदकीभूतस्येत्यादिः। अभावांशे = व्यभिचारघटकाभावरूपविशेष्ये। भ्रमात्मकः = निरुक्तसम्बन्धेन प्रमेयत्वत्वशून्ये अभावे प्रमेयत्वप्रकारकज्ञाना-त्मकः। तथाविधग्रहः = प्रमेयत्वत्वविशिष्टाभाववद्वृत्त्यभिधेयत्वमित्याकारक-व्यभिचारग्रहः।

विवक्षित इति। तथाच स्वावच्छिन्नसाध्यतावच्छेदकस्वरूपसम्बन्धा-वच्छिन्नप्रतियोगिताकत्वसम्बन्धस्य स्वरूपेण घटत्वं नास्तीत्याकारकाभावादौ प्रसिद्धस्य प्रमेयत्वत्वव्यधिकरणसम्बन्धतया तेन सम्बन्धेन घटत्वाभावादौ प्रमेयत्वत्वप्रकारकभ्रमात्मक एव प्रमेयत्वत्वविशिष्टाभाववद्वृत्त्यभिधेयत्वमित्या-कारकव्यभिचारग्रहः सम्भवत्येवेति भावः। न किञ्चिदिति। न यथार्थपदानुपादाने भ्रमस्याप्रसिद्ध्या तद्विषये प्रमेयत्वादावतिव्याप्तिदानमनुपपन्नमित्यर्थः।

❀ कलाविलासः ❀

न्धावच्छिन्नतया तत्सम्बन्धनिष्ठसांसर्गिकविषयतायाश्चानुमितिजनकतावच्छेदककोटौ प्रवेशे महागौरवात्।

साध्यतावच्छेदकवत्त्वमेव व्याप्तिघटकमिति। अथैवं महानसीयवह्नि-मानित्यनुमितौ तद्व्याप्यवत्ताज्ञानस्य केन रूपेण कारणता? यदि वह्नित्वमहानसीयत्व-धर्मद्वयनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटितधर्मेण, तदा क्वचित्

❀ गादाधरी ❀

अन्ये तु प्रथमे साध्याभाववदवृत्तित्वज्ञानविरोधी हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य भ्रमः, द्वितीये च तदप्रसिद्ध्या व्यापकसामानाधिकरण्यज्ञानविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमोऽभिहितः, असमानप्रकारकज्ञानस्याऽविरोधितया द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनस्यैव लक्षणे

❀ चन्द्रकला ❀

प्रकारान्तरेण भ्रममुपपादयतां मतमाह अन्ये त्विति । प्रथमे = धूमो वह्निव्यभिचारीत्यादिस्थले । साध्येति । वह्निरूपेत्यादिः । हेतौ = धूमादौ । साध्येति । वह्न्यभाववद्वृत्तित्वस्य मीनादौ प्रसिद्धस्येत्यर्थः । भ्रमः = तादृशवृत्तित्वशून्ये वृत्तित्वप्रकारकज्ञानम् । द्वितीये च = अभिधेयत्वं मेयत्वस्य व्यभिचारीत्यादिस्थले च । तदप्रसिद्ध्या = साध्याभाववद्वृत्तित्वस्याप्रसिद्ध्या । साध्यीभूतप्रमेयत्वाभावस्याप्रसिद्ध्यैव तादृशवृत्तित्वस्याप्यप्रसिद्धिरिति हृदयम् । व्यापकेति । प्रतियोगिव्यधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यज्ञानप्रतिबन्धक इत्यर्थः । साध्यतावच्छेदके = प्रमेयत्वत्वादौ । हेत्विति । अभिधेयत्वादिमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकत्वस्येत्यर्थः ।

ननु लक्षणघटकीभूतानुमितिपदस्य साध्याभाववदवृत्तिहेतुमान् पक्षःसाध्यवानित्याकारकानुमितिपरत्वेऽपि कथं न द्विविधव्यभिचारसंग्रह इत्यत आह असमानेति स्वीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितस्वप्रकारतावच्छेदकधर्मावच्छिन्नाभावप्रकारकनिश्चयस्यैवेत्यर्थः । स्वं प्रतिबध्यत्वेनाभिमतं ज्ञानम् । अविरोधितया = अप्रतिबन्धकतया । द्विविधेति । हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगिताच्छेदकत्वरूपव्यभिचारस्य च संग्रहायेत्यर्थः । द्विविधव्याप्तीति । साध्याभाववदवृत्तित्वहेतुव्यापकसाध्यसामानाधिकरण्यविषयकसमूहालम्बनानुमितेरित्यर्थः । लक्षणे = हेत्वाभासलक्षणे । समूहालम्बनान्वयि घटकत्वं सप्तम्यर्थः ।

❀ कलाविलासः ❀

महानसीयवह्निमान् क्वचित् वह्निमहानसीयवानित्यनुमितिभेदो न स्यादिति चेन्न, परामर्शांशे यत्र अभावविशेषणतापन्नवह्न्यंशे वह्नित्वं धर्मितावच्छेदकीकृत्य महानसीयत्वं भासते तत्र धर्मिपारतन्त्र्येण सामानाधिकरण्यसम्बन्धेन महानसीयत्वस्य वह्नित्वेऽपि भानात् महानसीयत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटि-

❀ गादाधरी ❀

निवेशनीयत्वात् । न च हेतुः साध्यस्य व्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्य अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकता नोपपद्यते इति वाच्यम्, यतोऽभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं चेति द्वयमेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः । तत्र प्रथमव्यभिचारपदार्थैकदेशेऽभावेऽनुयोगितारूपषष्ठ्यर्थस्य, तत्र प्रकृत्यर्थ-

❀ चन्द्रकला ❀

निवेशनीयत्वादिति । तथाच हेतुः साध्याभाववद्वृत्तिरित्याकारकव्याप्तिग्रहम् प्रति हेतुः साध्याभाववद्वृत्तिरित्याकारकव्यभिचारज्ञानस्यैव प्रतिबन्धकतया साध्यतावच्छेदकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमित्याकारकव्यभिचारज्ञानस्य तादृशव्याप्तिग्रहाऽप्रतिबन्धकत्वादुक्तव्यभिचारसंग्रहार्थं साध्याभाववद्वृत्तित्व-प्रकारतानिरूपितहेतुविशेष्यत्वावच्छिन्नप्रकारताकत्वे सति हेतुव्यापकसाध्यसामानाधिकरण्यप्रकारतानिरूपितहेतुविशेष्यत्वावच्छिन्नप्रकारताकपक्षविशेष्यकसाध्यप्रकारकानुमितित्वव्यापकप्रतिबध्यताघटितस्यैव हेत्वाभाससामान्यलक्षणताया आवकत्वादिति भावः ।

ननु द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनानुमितेर्लक्षणघटकत्वेऽपि अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकशब्देन प्रमेयत्वत्व-रूपसाध्यतावच्छेदके अभिधेयत्वरूपहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्याप्रतिपादनात् कथं द्वितीयस्थले साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वभ्रमः सम्भवतीत्याशंकते नचेति । वाच्यमितिपरेणान्वयः । इत्यत्र = इत्याकारकज्ञाने । साध्यतावच्छेदके=प्रमेयत्वत्वादौ । हेत्विति । अभिधेयत्वाद्यर्थकम् । दुर्लभतया = अविषयीभूततया । तदवगाहीति । साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहिज्ञानस्येत्यर्थः । नोपपद्यत इति । अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीतिवाक्येन तादृशस्याप्रतिपादनादित्याशयः ।

उत्तरयति यत इत्यादि । व्यभिचारशब्दार्थस्य द्वैविध्यं व्युत्पादयति अभावेति । अभावाधिकरणनिरूपितवृत्तित्वमित्यर्थः । समानेति । अधिकरणवृत्तितावदभावप्रतियोगितावच्छेदकत्वमित्यर्थः । तत्र = तयोरर्थयोर्मध्ये । आदिमेति । प्रथमव्यभिचारतात्पर्यकधूमो वह्नेर्व्यभिचारीत्यादिशाब्दस्थले इत्यर्थः । व्यभिचारेति । अभाववद्वृत्तित्वरूपव्यभिचारेत्यर्थकम् । अनुयोगितेति । अभावत्वात्मकानुयोगितारूपवह्निपदोत्तरषष्ठ्यर्थस्येत्यर्थः । अन्वय इति परेण सम्बन्धः । तत्र = षष्ठ्यर्थानुयोगितायाम् । प्रकृत्यर्थेति । स्वनिष्ठेत्यादिः ।

❀ गादाधरी ❀

तावच्छेदकवह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः, मत्वर्थीयार्थः स्वरूपसम्बन्धवान् , तस्य चाभेदसम्बन्धेन प्रथमान्तार्थेऽन्वयः, द्वितीयतत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः, षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे, तस्य तद्धितार्थसम्बन्धिनः एकदेशे घटकत्वरूपसम्बन्धे, सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः । एवं चोक्तवाक्या-

❀ चन्द्रकला ❀

प्रकृत्यर्थस्य = वह्नेः । तस्य = मत्वर्थीयार्थस्य स्वरूपसम्बन्धवतः । प्रथमान्तार्थे = धूमादौ अन्वय इति । तथाच धूमो वह्नेर्व्यभिचारीत्याकारकवाक्यात् स्वनिष्ठप्रकृत्यर्थतावच्छेदकवह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धेन वह्निविशिष्टानुयोगितावदभावाधिकरणनिरूपितवृत्तित्वस्वरूपसम्बन्धवदभिन्नो धूम इत्यन्वयबोध इति भावः । द्वितीयेति । साध्यतावच्छेदके समानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारपराभिधेयत्वं प्रमेयत्वस्य व्यभिचारीतिवाक्यस्थले इत्यर्थः । तदेकदेशे = तादृशव्यभिचारपदार्थैकदेशे । सामानाधिकरण्ये = अधिकरणवृत्तित्वे । हेत्विति । अभिधेयत्वार्थकम् । अभिधेयत्वस्य प्रथमार्थनिरूपितत्वे स्वनिष्ठनिरूपकताकनिष्ठत्वसम्बन्धेनान्वयो बोध्यः । षष्ठीप्रकृतेः = प्रमेयत्वस्य । धर्मपरतया = प्रमेयत्वत्वबोधेच्छयोच्चरिततया । षष्ठ्यन्तार्थस्येत्यादि । निष्ठत्वार्थकषष्ठीप्रकृत्यर्थप्रमेयत्वत्वरूपसाध्यतावच्छेदकनिष्ठत्वस्येत्यर्थः । तादृशेति । अभिधेयत्वपदार्थान्वितप्रथमार्थनिरूपितत्वस्य सामानाधिकरण्ये योऽन्वयस्तल्लभ्याभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे इत्यर्थः । अन्वय इति परेण सम्बन्धः । तस्य = तादृशप्रतियोगितावच्छेदकत्वस्य । तद्धितेति । व्यभिचारपदोत्तरमत्वर्थीयप्रत्ययार्थो यो घटकत्वरूपसम्बन्धवान् तस्येत्यर्थः । सम्बन्धिनः = घटकत्वसम्बन्धवतः । प्रथमान्तार्थे = अभिधेयत्वरूपप्रथमान्तपदार्थे । अन्वय इति । तथाच अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीतिवाक्यात् प्रमेयत्वत्वनिष्ठं यत् अभिधेयत्वविशिष्टनिरूपितत्वविशिष्टसामानाधिकरण्यवदभावप्रतियोगितावच्छेदकत्वम् तद्घटकतात्मकसम्बन्धवदभिन्नमभिधेयत्वमित्याकारकः शाब्दबोधः पर्यवसित इति भावः । एवञ्चेति । निरुक्तरीत्यान्वयस्य पर्यवसितत्वे चेत्यर्थः । उक्तवाक्यात् = अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीतिवाक्यात् ।

❀ गादाधरी ❀

तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि लाभात्तत्र तदवगाहिभ्रमस्य दर्शिताकारतासम्भवादित्यपि वदन्ति। भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वम्, तस्य प्रतिबन्धपदार्थेऽनुत्पादेऽन्वयः। यथार्थेतीति। यथार्थपदेन स्वव्यधिकरणप्रकारावच्छिन्ना या या

❀ चन्द्रकला ❀

तत्रेत्यादि। तस्मिन् प्रमेयत्वत्वरूपसाध्यतावच्छेदके इत्यर्थः। तत्र = तादृशसाध्यतावच्छेदके। तदवगाहिभ्रमस्य = अभिधेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहिभ्रमस्य। दर्शितेति। अभिधेयत्वं मेयत्वस्य व्यभिचारीत्याकारकतासम्भव इत्यर्थः। वदन्तीति। अन्ये त्वितिपूर्वेणान्वयः। अनया रीत्या अभिधेयत्वं मेयत्वस्य व्यभिचारीति वाक्यजन्यबोधस्य सर्वेवाद्यसिद्धस्य भ्रमत्वोपपादनं क्लिष्टकल्पनयैवेत्यस्वरसबीजं वदन्तीत्युक्त्वा सूचितमिति ध्येयम्।

पञ्चम्यर्थ इति। तथाच पर्वतो वह्न्यभाववानित्यादिभ्रमप्रयुक्तानुमित्यनुत्पादेऽपि यथार्थपदोपादानान्न तत्र तत्र पर्वताभिधेयत्वादौ अतिव्याप्तिरिति समुदितदीधितितात्पर्यमित्याशयः।

ननु यथार्थपदस्य तद्वति तत्प्रकारकज्ञानार्थकतया तदुपादानेऽपि पर्वतो वह्न्यभाववानित्याकारकज्ञानमादाय पर्वतादावतिव्याप्तिः, तादृशज्ञानस्य वह्नित्वादिमति वह्नित्वादिप्रकारकतया यथार्थज्ञानपदेन धर्तुं शक्यत्वात्। न च भ्रमभिन्नत्वमेव याथार्थ्यं निरुक्तज्ञानस्य वह्न्यभावाभाववति वह्न्यभावप्रकारकत्वेन भ्रमत्वान्न तादृशज्ञानमादायातिव्याप्तिरिति वाच्यम्, तथा सति ह्रदो वह्निमानित्यादौ यदा घटत्वेन पटावगाहिघटो वह्न्यभाववांश्च ह्रद इति समूहालम्बनं ज्ञानं जातं तदा वह्न्यभावविशिष्टे ह्रदे लक्षणसमन्वयानुपपत्तेः निरुक्तसमूहालम्बनज्ञानस्य भ्रमत्वात्। भेदस्याव्याप्यवृत्तितामते पर्वतो निर्वह्निरित्यादिज्ञानस्यापि वह्नित्ववद्विशेष्यकत्वावच्छेदेन भ्रमभिन्नत्वाच्चेति ध्येयमित्यत आह स्वव्यधिकरणेति। स्वं विशेष्यता, तद्व्यधिकरणस्तदधिकरणेऽवर्त्तमानो यः प्रकारस्तन्निष्ठप्रकारतानिरूपिता या या

❀ कलाविलासः ❀

तद्धर्मेण महानसीयवह्निमानित्यनुमितिकारणत्वम्, एवं यत्र महानसीयत्वं धर्मितावच्छेदकीकृत्य वह्नित्वं भासते तत्र महानसीयाभाववदवृत्तिधूमवानितिपरामर्शस्य वह्नित्वावच्छिन्नमहानसीयत्वनि[illegible]ावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नमहानसीयनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताघटितधर्मेण वह्निमहानसीयवानित्यनुमितौ कारणत्वमिति न काप्यनुपपत्तिः।

स्वव्यधिकरणेति। विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वमेव सर्वांशे

❀ गादाधरी ❀

विषयता तदनिरूपकत्वस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तानादाय दोष इति भावः ।

❀ चन्द्रकला ❀

विशेष्यता तत्तदनिरूपकत्वरूपस्येत्यर्थः । जलं वह्निमदित्याकारकभ्रमीयतथाविधजलनिष्ठविशेष्यत्वानिरूपकत्वस्य पर्वतो निर्वह्निरित्याकारकज्ञानेऽपि सत्त्वेन तस्य यथार्थतया तादृशज्ञानमादायातिव्याप्तितादवस्थ्यं स्यादतो या येति वीप्सादरः । तथाच यावदन्तर्गतनिरुक्तज्ञानीयपर्वतनिष्ठविशेष्यताया अप्युपादानसम्भवान्न कोऽपि दोषः । सर्वांशे = स्वविषयीभूतयावत्पदार्थांशे । प्रमात्वस्येति । लक्षणघटकीभूतस्येत्यादिः । दर्शितभ्रमाणाम् = पर्वतो निर्वह्निरित्यादिभ्रमाणाम् । किञ्चिदंशे = पर्वतत्वाद्यंशे । प्रमात्वेऽपि = पर्वतत्वादिमति पर्वतत्वादिप्रकारकत्वेऽपि । तानादाय = तादृशभ्रमानादाय । दोष इति । तथाच स्वनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्ना या स्वाश्रयनिष्ठाधिकरणतानिरूपिता वृत्तिता तदभाववन्निष्ठप्रकारतानिरूपितं यत् यत् स्वं विशेष्यत्वं तदनिरूपकज्ञानत्वमेव यथार्थज्ञानत्वमिति न आंशिकप्रमात्मकतादृशभ्रमानादाय पर्वतप्रमेयत्वादावतिव्याप्तिरित्याशयः ।

अथैवं स्वाधिकरणेत्यादिरीत्या याथार्थ्यनिर्वचने गुणो विशिष्टसत्तावानित्याकारकज्ञानस्य प्रमात्वापत्तिः, गुणनिष्ठाधिकरणतानिरूपितसमवायावच्छिन्नवृत्तितायाः विशिष्टसत्तायां सत्त्वात् विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमात् स्वपदेन तादृशज्ञानीयविशेष्यताया धर्त्तुमशक्यत्वात् । नच लक्षणघटकयथार्थज्ञानशब्दस्यैव निरुक्तार्थकतया गुणो विशिष्टसत्तावानित्याकारकज्ञानस्य यथोक्तरीत्या भ्रमत्वाभावेऽपि न क्षतिरिति वाच्यम्, तथा सत्यपि गुणो विशिष्टसत्ताभाववान् गुणत्वादिति सद्धेतौ गुणो विशिष्टसत्तावानित्याकारकज्ञानमादाय विशिष्टसत्तादेर्दोषत्वापत्तेर्दुर्वारत्वात् । नच स्वनिरूपितप्रकारतावच्छेदकसम्बन्धावच्छिन्ना या स्वाश्रयनिष्ठाधिकरणतानिरूपिता वृत्तिता तदनवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितं यत् यत् स्वं तत्तदनिरूपकत्वस्यैव सर्वांशे प्रमात्वस्य विवक्षणान्न गुणो विशिष्टसत्तावानित्याकारकज्ञानस्य प्रमात्वापत्तिः, गुणनिष्ठाधिकरणतानिरूपितसमवायावच्छिन्नवृत्तितानवच्छेदकत्वस्य विशिष्टसत्तात्वे सत्त्वात् स्वपदेन तादृशज्ञानीयगुणनिष्ठविशेष्यताया एवोपादानसम्भवादिति वाच्यम्, सामान्यपक्षकद्रव्यत्वाभावसाध्यकस्थले द्रव्यभेदसाध्यकस्थले वा सद्धेतौ द्रव्यत्ववत्सामान्यमित्याकारकज्ञानमादाय सामान्यादेर्दोषत्वापत्तेः, सामान्यादिनिष्ठाधिकरणतानिरूपितसमवायावच्छिन्नवृत्तित्वाप्रसिद्ध्या स्वपदेन निरुक्तज्ञानीयसामान्यनिष्ठविशेष्यताया धर्त्तुमशक्यत्वात्, निरुक्तज्ञानस्य यथोक्तप्रमात्वानपायात् । नच स्वनिरूपितप्रकारतावच्छे-

❀ गादाधरी ❀

अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिप्रसङ्गवारणेऽपि असद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यादेः प्रत्येकं दोषत्वापत्तिर्दुर्वारैव, तदर्थं प्रकारान्तरानुसरणे च तत एव पूर्व-

❀ चन्द्रकला ❀

दकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धेन स्वाश्रयनिष्ठाधिकरणतानिरूपितवृत्तितावच्छेदकत्वाभावस्य विवक्षणान्न कोऽपि दोषः, समवायावच्छिन्नवृत्तितावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धस्य सामान्यनिष्ठाधिकरणतानिरूपितवृत्तितावच्छेदकत्वस्य व्यधिकरणसम्बन्धतया तेन सम्बन्धेन तदभावस्य द्रव्यत्वत्वादौ सत्त्वेन सामान्यं द्रव्यत्ववदित्याकारकज्ञानस्य भ्रमत्वसम्भवादिति वाच्यम्, एवमपि स्वरूपतो द्रव्यत्वप्रकारकगुणविशेष्यकज्ञानस्य प्रमात्वापत्तेरवारणात् गुणनिष्ठाधिकरणतानिरूपितवृत्तितानवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितत्वस्य निरुक्तज्ञानीयगुणनिष्ठविशेष्यतायामसत्त्वेन गुणनिष्ठविशेष्यतायाः स्वपदानुपात्तत्वात् इति चेन्न, स्वनिरूपितप्रकारतावच्छेदकसम्बन्धसामान्ये यत्प्रतियोगिकत्वस्वाश्रयानुयोगिकत्वोभयाभावस्तन्निष्ठप्रकारतानिरूपितं यत् यत् स्वं तत्तद्निरूपकत्वस्यैव विवक्षितत्वाददोषात् । निरुक्तस्थले स्वरूपतो द्रव्यत्वप्रतियोगिकत्वगुणानुयोगिकत्वयोः समवाये विरहेण स्वपदेन गुणनिष्ठविशेष्यताया धर्तुंशक्यत्वादिति वदन्तीति दिक् ।

यथार्थपदाऽघटितद्वितीयलक्षणानुसरणस्य बीजं प्रदर्शयतां दीधितिकृतां नन्वित्यादिग्रन्थं व्याख्यातुं भूमिकामारचयति अत्रेति । निरुक्तप्रथमलक्षण इत्यर्थः । यथार्थपदपदार्थान्वयि घटकत्वं सहम्यर्थः, यथार्थपदेनेति । यथाविवक्षितार्थकेत्यादि । सद्धेतुस्थले = पर्वतो वह्निमान् धूमादित्यादौ । अनुमितीति । पर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकपर्वतो निर्वह्निरित्यादिभ्रमविषयवह्न्यभावादावित्यर्थः । असद्धेतुस्थले=धूमादिसाध्यकवह्न्यादिहेतुकस्थले । तादृशेति । प्रकृतानुमितिप्रतिबन्धकयथार्थज्ञानविषयदोषघटकसाध्यतदभावादेरित्यर्थः । तदर्थम् = प्रत्येकं दोषत्वापत्तिवारणार्थम् । प्रकारान्तरेति । यादृशविशि-

❀ कलाविलासः ❀

भ्रमभिन्नत्वम् , वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतानिरूपिताधेयतावदन्यत्वोभयसम्बन्धेन । आधेयतावत्त्वञ्च स्वानवच्छेदकानवच्छिन्नत्व-स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्व – स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेनेति तु तत्त्वम् ।

तदर्थं प्रकारान्तरानुसरणे चेति । ननु प्रकारान्तरानुसरणे इत्यस्य यद्रूपावच्छिन्नविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपत्वमित्यर्थकताया वक्तव्यतया तादृशयद्रूपावच्छिन्नविषयितायाः संशयादौ सत्त्वेन प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तितयाऽसम्भववारणायैव यथार्थपदसार्थक्यसम्भवे कथं तस्य

❀ दीधितिः ❀

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः ।

❀ गादाधरी ❀

दोषस्याऽपि वारणसम्भवे यथार्थपदं व्यर्थम् इति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाऽघटितलक्षणान्तरानुसरणे बीजत्वमाह नन्विति । एकदेशस्याऽपि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह प्रत्येकमिति । प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः । हेत्वाभासतापत्तिः= हेत्वाभासपदार्थत्वापत्तिः । यद्रूपावच्छिन्नज्ञानस्यानुमित्यविरोधित्वं

❀ चन्द्रकला ❀

घटेत्यादिनेत्यादिः । ततः एव = प्रकारान्तरानुसरणत एव । पूर्वदोषस्यापि = पर्वतो निर्वह्निरित्यादिभ्रममादाय वह्न्यभावादावतिप्रसंगस्यापि । तस्यैव = यथार्थपदस्य व्यर्थतारूपदोषस्यैव । एकदेशस्यापि = साध्याभाववद्वृत्तित्वरूपव्यभिचारघटक-साध्याभावादेरपि । विशिष्टघटकतया = निरुक्तव्यभिचारादिघटकतया ।

ननु प्रत्येकं हेत्वाभासत्वमिष्टमेवेत्यत आह यद्रूपेति । यद्रूपावच्छिन्नप्रकारक-निश्चयस्येत्यर्थः । अनुमित्यविरोधित्वम् = अनुमित्यप्रतिबन्धकत्वम् । व्यवहारं

❀ कलाविलासः ❀

व्यर्थत्वमभिहितमिति चेन्न, जलं वह्न्यभावविरोधीतिज्ञानकालीनस्य ह्रदो जलवान् वह्न्यभाववान् वेत्यादिज्ञानस्य संशयत्वात् तस्य च सर्वांशे यथार्थतया तदीयविषयिताया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनाऽसम्भववारणाय यद्रूपावच्छिन्न-विषयितायां निश्चयवृत्तित्वविशेषणस्यावश्यकतया संशयमादाय दोषाऽसम्भवेन यथार्थपदस्य सुतरां वैयर्थ्यात् । न चाहार्याप्रामाण्यज्ञानास्कन्दितज्ञानवारणाय तत्सार्थक्यमिति वाच्यम्, वह्निमान् ह्रद इतिज्ञानोत्तरं यत्रेच्छाप्रयोज्यं वह्न्यभाववान् ह्रद इतिज्ञानं जातं तादृशज्ञानस्यापि सर्वांशे यथार्थात्मकाहार्यतया तद्वारणाय अनाहार्यत्वस्य, यत्र भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानं ततो वह्न्यभाववान् ह्रद इतिनिश्चयस्ततोऽतीतज्ञानमप्रमेतिज्ञानं तत्राप्रामाण्यज्ञानद्वयपुटितबाधनिश्चयस्य यथार्थस्य वारणायाऽप्रामाण्यज्ञानानास्कन्दितत्वस्यापि निश्चयविशेषणताया आवश्यकत्वात् तद्वारणायापि तत्सार्थक्यासम्भवादिति ध्येयम् ।

हेत्वाभासपदार्थत्वापत्तिरिति । अत्र स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्वादिगतैकत्ववृत्तिर्या विशेष्यता तन्निरूपितदोषपदप्रयोज्यप्रकारतायां प्रमानिरूपितत्वापत्तिरिति पर्यवसितार्थः । आपत्त्याकारस्तु तादृशविशेष्यतानिरूपितदोषपदप्रयोज्यप्रकारत्वं यद्यनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वावच्छिन्नं स्यात् तदा प्रमानिरूपितं स्यादिति ।

❀ दीधितिः ❀

**अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम्, तद्घटकं च न विशिष्टमिति चेत्, तर्हि यथार्थेति व्यर्थम् भ्रमविषयविशिष्टस्या-**

❀ गादाधरी ❀

तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतौ दुष्टत्वव्यवहारस्य चाऽनुदयेन इष्टापत्तिर्न सम्भवतीति भावः।

यादृशविशिष्टविषयकत्वं तादृशाऽनुमितिविरोधिताऽनतिरिक्तवृत्ति तत्त्वमिति विवक्षया न साध्यादावतिव्याप्तिरित्याशयेनाऽऽशङ्कते अथेति। विशिष्टविषयकम्=साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव। तद्घटकं च=तादृशविशिष्टघटकप्रत्येकपदार्थविषयकत्वं च। न विशिष्टम्=न तादृशविशिष्टनिरूपितम्। तथाच प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकताया अतिरिक्तवृत्तित्वान्नातिव्याप्तिरिति भावः। व्यर्थमिति। यथार्थपदाऽदानेऽपि

❀ चन्द्रकला ❀

प्रति व्यवहर्त्तव्यज्ञानस्य जनकतया तद्रूपावच्छिन्ने हेत्वाभासत्वविरहेण हेत्वाभासत्वज्ञानाऽसम्भवात् हेत्वाभासत्वव्यवहारोऽपि न सम्भवतीत्याह हेत्वाभासत्वेति। दोषत्वस्येव दुष्टत्वस्यापि हेताविष्टापत्तिः कर्त्तुं न शक्यत इत्याह तद्रूपेति। तद्रूपावच्छिन्नहेतुमात्रविषयकज्ञानादित्यर्थः। धूमाभाववद्वृत्तिर्वह्निर्धूमो वह्निश्चेत्याकारकसमूहालम्बनज्ञानात् वह्नेर्दुष्टताया इष्टत्वात् मात्रपदमिति ध्येयम्।

न सम्भवतीति। तथा च प्रत्येकं साध्यतावच्छेदकधूमत्वाद्यवच्छिन्नमात्रविषयकज्ञानस्यानुमित्यप्रतिबन्धकतया तादृशधूमत्वाद्यवच्छिन्ने हेत्वाभासत्वस्याऽसत्त्वात् तादृशप्रत्येकधर्मावच्छिन्नो दोष इति व्यवहाराऽसम्भवेन तत्र दोषत्वादेरिष्टापत्तिः कथमपि न सम्भवतीत्यतः प्रत्येकधर्मावच्छिन्ने हेत्वाभासत्वापत्तिरभिहिता दीधितिकृतेति हृदयम्।

अथेत्यादिदीधितिमवतारयति यादृशेति। यादृशविशिष्टविषयकनिश्चयत्वमित्यर्थः। तादृशेति। पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तीत्यर्थः। तत्त्वमितीति। तादृशत्वमिति विवक्षयेत्यर्थः। साध्यादाविति। प्रत्येकमित्यादिः। अतिव्याप्तिरिति। साध्यादिप्रत्येकविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वान्न साध्यादावतिव्याप्तिरित्याशयः। साध्येति। धूमाद्यभाववद्वृत्तित्वविशिष्टवह्न्यादिविषयकमेवेत्यर्थः। तादृशविशिष्टेति। धूमाद्यभाववद्वृत्तित्वविशिष्टवह्न्याद्यर्थकम्। भावमाह तथाचेति। अतिरिक्तवृत्तित्वात् = प्रकृतानुमितिप्रतिबन्धकतायाः प्रत्येकपदार्थविषयकत्वाव्यापकत्वात्। यथार्थपदव्यर्थतायां हेतुमाह यथार्थेति। प्रकृतलक्षण इत्यादिः।

❀ कलाविलासः ❀

यथार्थेति व्यर्थमिति। नन्वखण्डाभावघटकतयैव सार्थक्यसम्भवे कथं तस्य

❀ दीधितिः ❀

प्रसिद्धत्वादित्यनुशयेनाऽऽह यदिति ।

❀ गादाधरी ❀

सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवात् । ननु तत्र भ्रमविषयप्रत्येकपदार्थ-विषयकत्वस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेऽतिव्याप्तिरत आह भ्रमविषयेति । अप्रसिद्धत्वादिति । तथाच कातिव्याप्तिरिति भावः ।

❀ चन्द्रकला ❀

अतिव्याप्तीति । पर्वतो निर्वह्निरित्याकारकभ्रमविषयवह्न्यभावादिविषयकत्व-स्यापि प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् न भ्रमविषये वह्न्यभावा-दावतिव्याप्तिरिति भावः । तत्रेति । पर्वतो वह्निमान् धूमादित्यादावित्यर्थः । भ्रमविषयेति । यथार्थपदादाने वह्न्यभाव-प्रमेयत्वपदार्थादेरित्यर्थः । उक्त-रीत्या = यादृशविशिष्टविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तीत्यादि-विवक्षया । तद्विषयेति । भ्रमविषयविशिष्टे वह्न्यभावविशिष्टपर्वतादावित्यर्थः । अतिव्याप्तिरिति । वह्न्यभाववत्पर्वतविषयकत्वस्य पर्वतादौ वह्न्याद्यनुमिति-प्रतिबन्धकतानतिरिक्तवृत्तित्वादिति हृदयम् । क्वातिव्याप्तिरिति । तथा च व्यभिचारादिघटकप्रत्येकं साध्यादावतिव्याप्तिवारणाय यादृशविशिष्टविषयक-निश्चयत्वव्यापकंप्रकृतानुमितिप्रतिबन्धकत्वं तादृशत्वमित्यस्यावश्यं विवक्षणीयतया यथार्थपदं व्यर्थम्, भ्रमविषयवह्न्यभावादिविषयकत्वस्य प्रकृतानुमितिप्रतिबन्ध-तकतातिरिक्तवृत्तित्वात् । वह्न्यभाववत्पर्वतादिविषयकत्वस्य प्रकृतानुमितिप्रति-बन्धकतानतिरिक्तवृत्तित्वेऽपि वह्न्यभाववत्पर्वतादेरप्रसिद्धतया क्व तत्राऽतिव्याप्ति-रित्याशय इति दिक् ।

❀ कलाविलासः ❀

वैयर्थ्याभिधानमिति चेन्न, प्रकृतानुमितिप्रतिबन्धकतावृत्तिर्योऽभावस्तदीया या अवच्छेदकत्वनिष्ठा प्रतियोगिता तन्निरूपितप्रतियोगितात्वावच्छिन्नावच्छेदकतानिरू-पितभेदत्वावच्छिन्नावच्छेदकतानिरूपिताधेयतात्वावच्छिन्नावच्छेदकतानिरूपिता या याथार्थ्यसमानाधिकरणा निश्चयत्वावच्छिन्नावच्छेदकता तन्निरूपितविषयि-तात्वावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं हेत्वाभासत्वमेतादृशलक्षणानुसारेण वैयर्थ्यमाशंकितं नत्वभावप्रतियोगितावच्छेदक-तया याथार्थ्यस्य निवेशानुसारेणेति ध्येयम् ।

❀ दीधितिः ❀

**केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि ।**

❀ गादाधरी ❀

केचित्त्विति । ननु आद्यस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, तेषामपि अनुमतिविरोधियथार्थज्ञानविषयत्वात् । न च ह्रदादिपक्षकवह्न्यादिसाध्यस्थले वह्न्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुतया दुष्टत्वमेवेति

❀ चन्द्रकला ❀

प्रकारान्तरेण यथार्थपदसार्थक्यमुपपादयतां मिश्रादीनां केचित्त्वित्यादिना प्रदर्शितं दुष्टानामेवेत्यादिग्रन्थं व्याकरोति नन्वस्येत्यादि । अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति लक्षणस्येत्यर्थः । दोषेष्वतिव्याप्तिः= ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिष्वतिव्याप्तिः । कथमित्याकांक्षायामाह तेषामपीति । दोषाणामपीत्यर्थः । अनुमितिविरोधीति । अनुमितिप्रतिबन्धकार्थकम् । तथा च यथाश्रुतप्रथमलक्षणस्य ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिरूपदोषादावतिव्याप्तिः, निरुक्तमते प्रथमलक्षणस्यैव दुष्टलक्षणत्वादिति भावः ।

शंकते नचेति । वाच्यमिति परेणान्वयः । दुष्टत्वमेवेति । ह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभावविशिष्टह्रदादेरपि हेतुत्वसम्भवात् तस्य लक्ष्यतया तत्र

❀ कलाविलासः ❀

केचित्तु संशयान्यत्वस्य अनाहार्यत्वस्य अप्रामाण्यज्ञानानास्कन्दितत्वस्यच तत्तद्व्यक्तित्वेनाभावप्रवेशे गौरवमतोऽभावविशिष्टान्यत्वमेव यद्रूपावच्छिन्नविषयकनिश्चयविशेषणम्, वैशिष्ट्यञ्च स्वाभाववत्त्व-स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयितावत्त्वोभयसम्बन्धेन, एवञ्चाप्रामाण्यज्ञानद्वयघटितबाधनिश्चयवारणायाभावविशिष्टान्यत्वस्य लाघवान्निवेशनीयतया तत एव यथार्थपदवैयर्थ्यमिति प्राहुः । वस्तुतोऽभावविशिष्टान्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमित्येवं यथार्थपदाघटितं लक्षणं वक्तव्यम् । तादृशविषयतायामभाववैशिष्ट्यञ्च स्वप्रतियोगिमन्निष्ठत्व-स्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन, प्रतियोगिमत्ता च विशेष्यत्व-सामानाधिकरण्योभयस्वरूपान्यतरसम्बन्धेनेत्यपि वदन्ति ।

दीधितौ केचित्त्विति । ननु ज्ञायमानदोषाणां प्रतिबन्धकत्वे कस्यचित्पुरुषस्य

❀ दीधितिः ❀

**तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य। तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वम्।**

❀ गादाधरी ❀

वाच्यम् , तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिविरोधियथार्थज्ञानविषयत्वमात्रं तदा ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयवह्न्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशङ्कां परिजिहीर्षुः तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थं व्याख्यास्यति, तच्च ज्ञायमानदोषस्य प्रतिबन्धकतामते एव सङ्गच्छते, अतस्तन्मतमवलम्ब्यैवाह तत्रेति। तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयलक्षणस्य सर्वमते एव ज्ञायमानदोषप्रतिबन्धकताम-

❀ चन्द्रकला ❀

लक्षणगमनं न कामपि क्षतिमावहतीत्याशयः। उत्तरयति तद्रूपावच्छिन्नेति। ह्रदत्वाद्यवच्छिन्नार्थकम्। द्वितीयं तद्रूपं वह्नित्वादिसाध्यतावच्छेदकार्थकम्। तृतीयञ्च धूमत्वादिहेतुतावच्छेदकार्थकम्। तेन रूपेण = तादृशपक्षतावच्छेदकह्रदत्वादिरूपेण। तद्रूपेति। पक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमात्रं यदि स्यादित्यर्थः। मात्रपदेन तादृशानुमितिप्रतिबन्धकप्रकारकयथार्थज्ञानविषयत्वस्य लक्षणत्वव्यवच्छेदः। तदा = निरुक्तानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे। धूमत्वादिनेति। वह्न्यभाववद्ध्रदत्वादिना दुष्टत्वसम्भवेऽपीत्यादिः। अतिव्याप्तिरिति। वह्न्यभाववद्ध्रदादावित्यादिः। इत्याशंकाम् = निरुक्तातिव्याप्त्याशंकाम्। तादृशेति। अनुमितिकारणीभूताभावप्रतियोगिनामित्यर्थः। निरूपकत्वसम्बन्धेन यथार्थज्ञानपदार्थान्वयि प्रकारत्वं षष्ठ्यर्थः। तादृशाभावेति। अनुमितिकारणीभूताभावप्रतियोगिनिष्ठा या स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्ना प्रकारता तन्निरूपितविशेष्यत्वरूपं लक्षणार्थमित्यर्थः। व्याख्यास्यतीति। दीधितिकार इतिशेषः। तच्चेति। निरुक्तव्याख्यानञ्चेत्यर्थः। ज्ञायमानदोषस्य = निश्चयविषयीभूतव्यभिचारबाधादेर्दोषस्य। प्रतिबन्धकतेति। प्रकृतानुमितीत्यादिः। मत एवेति एवकारेण

❀ गादाधरी ❀

ताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः। तदर्थश्चेति। प्रतियोग्यन्तेन व्यभिचारादिदोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितुं व्यभिचारादय इति, नतु तेन रूपेण लक्षणघटकत्वमित्यवधेयम्। एवं च यथार्थपदानुपादाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसङ्ग इति यथार्थपदसार्थक्यम्।

❀ चन्द्रकला ❀

तादृशप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वरूपस्य लक्षणार्थत्वं दोषज्ञानस्य प्रतिबन्धकतामते न सम्भवतीति सूचितम्। तन्मतम् = ज्ञायमानदोषस्य प्रतिबन्धकतावादिनां मतम्। यद्यपि दीधितिस्थतत्रेत्यत्र तत्पदोत्तरसप्तम्या घटकत्वार्थकरणेऽपि न क्षतिस्तथापि घटकत्वस्य दुर्निर्वचत्वमाशंक्य तादृशसप्तम्या निर्द्धारणार्थकत्वं वक्ति तेष्वित्यादि। तृतीयलक्षणे ज्ञायमानदोषस्य प्रतिबन्धकताया उभयवादिसिद्धत्वं स्फुटीकर्त्तुमाह सर्वमत एवेति। दृष्टान्तत्वेनेति। तथाच-तृतीयलक्षणभिन्नत्वे सति तृतीयलक्षणनिष्ठज्ञायमानदोषप्रतिबन्धकताभिप्रायकत्वं प्रथमलक्षणस्येति तृतीयलक्षणस्य दृष्टान्तत्वसम्भव इति भावः। तादृशाभावप्रतियोगिनो ये व्यभिचारादय इत्यत्र व्यभिचारादेर्व्यभिचारत्वादिना न लक्षणघटकता, तथा सति एकव्यभिचारप्रकारकयथार्थज्ञानविषयत्वस्य लक्षणार्थत्वे तादृशबाधादिप्रकारकयथार्थज्ञानविषयत्वादेर्लक्षणार्थत्वं न स्यादेवमन्यस्यापि, अतो व्यभिचारादेस्तादृशाभावप्रतियोगित्वेनैव लक्षणघटकतेत्याह प्रतियोग्यन्तेनेति। दोषानादाय = तादृशव्यभिचारादीनादाय। तेन रूपेण = व्यभिचारत्वादिरूपेण। घटकत्वमिति। लक्षणेत्यादिः। यद्यपि प्रतियोगित्वमपि प्रतियोगिभेदेन भिन्नमेवेति एकोपादानेऽपरस्यासंग्रहो दुष्परिहरस्तथापि प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वमभिप्रेत्यैवेत्यमभिहितमिति ध्येयम्। यथार्थपदानुपादाने पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारस्तु न सम्भवति, व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य जनकतया व्यवहर्त्तव्यस्य पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविशेष्यत्वस्य तादृशानुमितिप्रतिबन्धकव्यभिचारबाधाद्यप्रसिद्ध्याऽप्रसिद्धत्वेन तादृशव्यवहर्त्तव्य-

❀ कलाविलासः ❀

ज्ञानविषयदोषदशायां पुरुषान्तरस्य यथोक्तानुमितिप्रतिबन्धवारणाय तत्पुरुषीयत्वस्यापि निवेशनीयतया गौरवमिति चेन्न, वह्न्यभाववान् ह्रदो ह्रदधर्मिकवह्निप्रकारकबुद्धिप्रतिबन्धक इत्याकारकसर्वजनानुभवानुरोधेन तादृशगौरवस्य

❀ गादाधरी ❀

यद्यपि पर्वतत्वाद्यवच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इत्यादेः सद्धेतौ दुष्टत्वव्यवहारस्य नापत्तिः, तत्र तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारकज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात्, तादृशानुमितिप्रतिबन्धकबाधव्यभिचारादेश्चाऽप्रसिद्धत्वात्, ह्रदादौ वह्न्यादिसाधनमादाय च सर्वत्र दुष्टत्वव्यवहार इष्टः, तथापि धूमसाधने वह्नित्वेनाऽयं दुष्ट इत्यादौ वह्नित्वावच्छिन्नहेतुकधूमाद्यनुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्य प्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्नतादृशानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणाऽपि तथा व्यवहारः स्यात्।

❀ चन्द्रकला ❀

ज्ञानासम्भवादितियथार्थपदसार्थक्यमुपपादयितुं शंकते यद्यपीति। तत्र=व्यवहारे। अग्रिमषष्ठ्यन्तार्थान्वयि विषयत्वं सप्तम्यर्थः।

ननु ह्रदादिपक्षकवह्न्यादिसाध्यकस्थले बाधादेर्दोषस्यावश्यकतया तत्प्रकारकज्ञानविषयत्वमादाय घटादेर्दुष्टत्वव्यवहारवारणायैव यथार्थपदं सार्थकं सम्भवतीत्यत आह ह्रदादाविति। सर्वत्रैव=धूमादौ घटपटादौ च। इष्ट इति। तथाचैतन्मतेऽपि यथार्थपदं व्यर्थमिति भावः। यथार्थपदपरित्यागे धूमसाधने वह्नित्वेन अयं दुष्ट इत्याकारकेदन्त्वावच्छिन्नरासभतात्पर्यकव्यवहारापत्तिः स्यात् तादृशव्यवहारप्रयोजकस्य व्यवहर्त्तव्यस्य धूमत्वावच्छिन्नसाध्यकवह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारानिष्ठा या स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धावच्छिन्ना प्रकारता तन्निरूपितभ्रमीयविशेष्यत्वरूपस्य प्रसिद्धतया व्यवहारकारणीभूतनिरुक्तव्यवहर्त्तव्यज्ञानसत्वे बाधकाभावादतो यथार्थपदमवश्यं देयमिति समाधत्ते तथापीति। इत्यादौ=इत्यादिव्यवहारे। प्रत्येतव्यत्वात्=तादृशविषयत्वविषयकप्रत्ययस्योत्पादात्। वक्ष्यमाणसम्बन्धेति। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धार्थकम्। तथा व्यवहार इति। धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपव्यभिचारस्य

❀ कलाविलासः ❀

प्रामाणिकत्वादिति तु विभावनीयम्। यद्यपि पर्वतत्वावच्छिन्न इत्यादि। ननु नञसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यत्प्रकारको बोधोऽनुभवसिद्धः नञ्समभिव्याहारस्थले तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद-

❁ गादाधरी ❁

नच तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यभानाद्रासभे तद्बाधेन नायमतिप्रसङ्ग इति वाच्यम्, तथासति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वाऽलाभात् तल्लाभानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य,

❁ चन्द्रकला ❁

स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्न्यादावेव वर्त्तमानतया तेन सम्बन्धेन तादृशव्यभिचाराभाववति रासभे तत्सम्बन्धावच्छिन्नव्यभिचारप्रकारताकभ्रमीयविशेष्यत्वरूपदुष्टत्वस्य रासभे सत्त्वात् रासमतात्पर्येण धूमसाधने अयं दुष्ट इति व्यवहारः स्यात्, यदि यथार्थपदोपादानं न स्यादित्याशयः।

ननु धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वपदोत्तरं तृतीयार्थो वैशिष्ट्यं तच्च समवायरूपं तस्य च अनुयोगितासम्बन्धेन इदन्त्वावच्छिन्ने विशेष्ये रासभ एवान्वयस्यावश्यकतया रासभे च तादृशवह्नित्वसमवायानुयोगित्वस्यासत्त्वात् व्यवहर्त्तव्यस्याप्रसिद्ध्या कथं तादृशव्यवहार इत्याशंकते नचेति। वाच्यमिति परेणान्वयः। तत्र = धूमसाधने वह्नित्वेनायं दुष्ट इत्यत्र। विशेष्ये = इदम्पदार्थे। तद्बाधेन = तृतीयान्तार्थवैशिष्ट्यात्मकसमवायानुयोगित्वविरहेण। नातिप्रसंग इति। न वह्नित्वेनायं दुष्ट इतिव्यवहारापत्तिरूपातिप्रसंगः। व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य हेतुत्वेन व्यवहर्त्तव्यस्याप्रसिद्धत्वात् तज्ज्ञानस्यैवाऽसम्भवात् असतः ज्ञानविषयत्वानभ्युपगमादिति हृदयम्। समाधत्ते तथा सतीति। विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यस्यान्वयाभ्युपगमे सतीत्यर्थः। दोषेति। प्रकृतानुमितिप्रतिबन्धकत्वरूपदोषपदार्थघटकानुमितावित्यर्थः। तल्लाभेति। वह्नित्वादिरूपप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वलाभानुरोधेनेत्यर्थः। अनुमितौ तस्यालाभे प्रकृतहेतुप्रकारकज्ञानविरोधिस्वरूपासिद्ध्यादिकमादाय स्वरूपासिद्धहेतौ दुष्टत्वव्यवहारः स्वरूपासिद्धत्वव्यवहारो वा न स्यादितिभावः। वह्नित्वेति। वह्नित्वसमवायानुयोगित्वरूपस्य वैशिष्ट्यस्य वह्नित्वसमवायरूपस्य वा वैशिष्ट्यरूपस्य तृतीयान्तार्थस्येत्यर्थः। यदि वह्नित्वेनायं दुष्ट इत्यादौ तृतीयान्तार्थो वह्नित्ववैशिष्ट्यरूपः समवायस्तस्य च दोषपदार्थघटकहेतावेवानुयोगितयान्वय-

❁ कलाविलासः ❁

भावप्रकारकान्वयबोध इति व्युत्पत्तेः कथं धूमेन पर्वते वह्निसाधने धूमो न दुष्ट इति व्यवहारः तत्र समभिव्याहृतपदार्थान्वितदूषधात्वर्थस्याप्रसिद्ध्या तदभावप्रकारकान्वयबोधाऽसम्भवादिति चेन्न, अत्रानन्यगतिकतया तादृशव्युत्पत्त्यस्वीकारेण तत्पक्षकतत्साध्यकतद्धेतुकानुमितिप्रतिबन्धकतावच्छेदकतायां स्ववृत्तितावच्छेदकत्वो-

❀ गादाधरी ❀

तत्प्रकारतायां वा वच्छिन्नत्वार्थकतृतीयान्तलभ्यवह्नित्वावच्छिन्नत्वस्यान्वय इत्यस्यैवोपगन्तव्यत्वात् । नच विशेष्ये वह्नित्वादिधर्मवैशिष्ट्यबोधकपद-समभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रति-बन्धकोर्थः, अथवा अनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वाद्यवच्छिन्नहेतुका-नुमितिरूपविशेषलाक्षणिकत्वम्, दुष्धात्वर्थेऽनुमित्यन्तर्भावे साधनपदार्था-नन्वयप्रसङ्गात्, तथाच विशेष्य एव तृतीयार्थवैशिष्ट्यान्वयोपगमा-

❀ चन्द्रकला ❀

स्तदा यादृशस्थले वह्नित्वेन घटावगाहिभ्रमात्मकपरामर्शादेव धूमानुमितिः तादृशस्थले हेतौ वह्नित्ववैशिष्ट्यरूपसमवायानुयोगित्वस्याभानात् तदानीं धूमसाधने वह्नित्वेनायमितिवह्नितात्पर्यकोऽपि व्यवहारो न स्यादित्यत आह तत्प्रकारताया-मिति । हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतुप्रकारताया-मित्यर्थः । इत्यस्यैवोपगन्तव्यत्वादिति । तथा च धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वपदोत्तरं तृतीयार्थोऽवच्छिन्नत्वं निरूपितत्वसम्बन्धेन वह्नित्वान्व-यिनस्तस्य तादृशप्रकारतायामन्वयः, एवञ्च भ्रमात्मकतादृशपरामर्शीयप्रकारताया हेतुतावच्छेदकावच्छिन्नतया अनुपपत्त्यभावात् विशेष्ये तृतीयान्तार्थानन्वयेन रासभतात्पर्येण धूमसाधने वह्नित्वेनायं दुष्ट इति व्यवहारवारणं दुःशक्यं स्यात् यदि यथार्थपदोपादानं न स्यादित्याशयः ।

पुनः शंकते नचेति । विशेष्ये = रासभादौ । वह्नित्वादीति । हेतुतावच्छे-दकाद्यर्थकम् । तथा च विशेष्यवाचकपदसमभिव्याहृततृतीयान्तपदजन्यशाब्द-बोधे तृतीयार्थस्य वैशिष्ट्यस्यैव विशेष्ये प्रकारतया भानं भवति, अत एव जटाभिस्तापसो दृश्यते इत्यत्र शाब्दबोधे जटासम्बन्धस्य तापस एव भानं सर्ववादिसिद्धमिति भावः ।

नन्वेवं धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ विशेष्ये तृतीयार्थवैशिष्ट्यान्वया-भ्युपगमे साधनपदार्थानुमितौ वह्नित्वावच्छिन्नहेतुकत्वलाभो न स्यादित्यत आह दोषार्थकेति । निष्ठाप्रत्ययान्तदोषार्थकदूषधातोरेवेत्यर्थः । वह्नित्वेति । लक्षणयेत्यादिः

ननु लक्षणया दूषधातोर्वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकपर्यन्तार्थ-कत्वे साधनपदार्थानुमितेरनन्वयप्रसंग इत्यत आह अथवेति । साधनशब्दस्यै-वानुमितिविशेषे लाक्षणिकत्वं ननु दूषधातोरेव तादृशानुमितिविशेषलाक्षणिकत्व-मित्याह दुषधात्वर्थ इति । उपसंहरति तथाचेति । विशेष्ये एव = इदम्पदा-

❀ गादाधरी ❀

न्नोक्तातिप्रसङ्ग इति वाच्यम्, एवमपि वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारस्य भ्रममादायातिप्रसङ्गादिति यथार्थपदसार्थक्यम्।

अथवा इतरभेदानुमापकमेवेदं लक्षणम्। तथाच पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्य तथाविधानुमिति-विरोधि-व्यभिचारादि-

❀ चन्द्रकला ❀

र्थीभूतविशेष्य एव। नोक्तातिप्रसंग इति। तथाच तृतीयान्तार्थवह्नित्ववैशिष्ट्यरूपसमवायानुयोगिताया रासभे विरहात् रासभतात्पर्येण धूमसाधने वह्नित्वेनायं दुष्ट इतिव्यवहारापत्तिरूपातिप्रसंगो न सम्भवतीति तात्पर्यम्। उत्तरयति एवमपीति। निरुक्तस्थले तृतीयान्तार्थस्य विशेष्ये बाधेनातिप्रसंगविरहेपीत्यर्थः। भ्रममादायातिप्रसंगादिति। तथाच वह्निना धूमसाधने रासभो दुष्ट इत्यत्र दूषधात्वर्थः प्रतिबन्धकतावान् साधनपदार्थस्त्वनुमितिमात्रम्। साधनपदोत्तरसप्तम्यर्थनिरूपितत्वस्य दूषधात्वर्थैकदेशे प्रतिबन्धकतायामन्वयः, वह्निपदार्थान्वितवृतीयार्थवह्निप्रकारताकज्ञानजन्यत्वस्यापि साधनपदार्थानुमितावन्वयः।

अथवा तृतीयान्तार्थवह्निवैशिष्ट्यरूपसंयोगस्य अनुयोगितया विशेष्ये रासभेऽबाधितत्वादन्वयः। साधनपदन्तु लक्षणया वह्नित्वावच्छिन्नप्रकारताकज्ञानजन्यानुमितिपरम्। एवञ्च वह्नित्वावच्छिन्नप्रकारताकज्ञानजन्यधूमसाध्यकानुमितिनिरूपितप्रतिबन्धकतावान् यो धूमाभाववद्वृत्तित्वविशिष्टो वह्निस्तन्निष्ठस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकारतानिरूपितधर्मीय-विशेष्यतावदभिन्नो वह्निवैशिष्ट्यानुयोगिरासभ इत्यन्वयबोधस्योक्तवाक्यादुत्पद्यमानतया यथार्थपदानुपादाने वह्निना धूमसाधने रासभो दुष्ट इति व्यवहारापत्तेर्वारयितुमशक्यत्वादिति भावः।

यद्यपि वह्निना धूमसाधने रासभो दुष्ट इत्यादौ वह्निपदोत्तरतृतीयार्थोऽभेदस्तस्य च विशेष्ये रासभे बाधात् न तादृशव्यवहारापत्तिरिति यथार्थपदं व्यर्थमित्युच्यते तदाप्याह अथवेति। इतरेति। दुष्टेतरभेदानुमापकमेवेदं प्रथमलक्षणमित्यर्थः। एवकारात् निरुक्तलक्षणस्य दुष्टत्वव्यवहारौपयिकत्वव्यवच्छेदः। लक्ष्यभेदेनेतरभेदानुमापकलक्षणस्यापि भिन्नत्वादाह तथाचेति।

❀ कलाविलासः ❀

पलक्षितधर्मावच्छिन्नविषयतात्वव्यापकत्वाभावः प्रतीयते, वृत्तित्वञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नं ग्राह्यमित्यभ्युपगमेऽपि क्षत्यभावात्। अथवेतरभेदानुमापकमिति। यथार्थपददानेऽपि पर्वतो वह्निमान् द्रव्यादित्यादौ वह्न्यभाववद्वृत्तिद्रव्यरूपव्यभिचारस्य तादृशद्रव्यत्वादिमत्त्वसम्बन्धेन धूमादिहेतावपि

❀ गादाधरी ❀

भ्रममादाय सद्धेतावितरभेदव्यभिचारित्वात् यथार्थपदसार्थक्यम्। ज्ञानञ्चात्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावगाहि ग्राह्यम्।

❀ चन्द्रकला ❀

लक्षणस्येतरभेदानुमापकत्वे चेत्यर्थः। यथार्थपदसार्थक्यमिति। यदि यथार्थपदं न स्यात्तदा पर्वतपक्षकधूमसाध्यकवह्निहेतुको दुष्टः—स्वेतरभिन्नः तादृशपक्षसाध्यहेतुकानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्निनिष्ठस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकारताकज्ञानविशेष्यतावत्त्वादित्याकारकलक्षणात्मकेतरभेदानुमापकहेतोर्व्यभिचारित्वं स्यात्, धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्नावेव सत्त्वेन तेन सम्बन्धेन तस्य भ्रमविशेष्यतायाःसद्धेतौ तद्रासभेऽपि वर्त्तमानतया तत्र तादृशदुष्टेतरत्वस्यैव सत्त्वेन तादृशदुष्टेतरभेदरूपसाध्यस्याऽसत्त्वादतो यथार्थपदम्, तदुपादाने तु नोक्तहेतोर्व्यभिचारित्वं पूर्वोक्तव्यभिचारस्ययथार्थज्ञानविशेष्यताया वह्निमात्रनिष्ठतया तादृशवह्नौ च तादृशदुष्टेतरभेदसत्त्वे बाधकाभावादिति तु परमार्थः।

ननु प्रकृतानुमितिप्रतिबन्धकरूपदोषनिष्ठा प्रकारता यदि सम्बन्धसामान्यावच्छिन्ना तदा यथार्थपदोपादानेऽपि धूमवान् वह्नेरित्यादौ रासभादेर्दुष्टत्वापत्तिः कालिकसम्बन्धावच्छिन्नधूमाभाववद्वृत्तिवह्निनिष्ठप्रकारताकयथार्थज्ञानविशेष्यताया रासभेऽप्यनपायादित्यत आह ज्ञानं चात्रेति। निरुक्तप्रथमलक्षणघटकीभूतं यथार्थज्ञानञ्चेत्यर्थः। स्वज्ञानेति। स्वम् प्रकृतानुमितिप्रतिबन्धकतावान् दोषस्त-

❀ कलाविलासः ❀

सत्त्वेन धूमो दुष्ट इतिव्यवहारापत्तिवारणाय तद्रूपावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रकारकज्ञानविषयत्वं तद्रूपावच्छिन्नस्य दुष्टत्वव्यवहारनियामकं वाच्यमतो न वह्निना धूमसाधने रासभो दुष्ट इति व्यवहारापत्तिरित्यत आह अथवेति। न च वह्निना धूमसाधने आर्द्रेन्धनप्रभववह्निर्दुष्ट इति व्यवहारापत्तिरिति वाच्यम्, तद्रूपमात्रावच्छिन्ने दुष्टत्वव्यवहारनियामकत्वस्य विवक्षितत्वात्। नचैवं वह्निना धूमसाधने अयोगोलकीयवह्निर्दुष्ट इतिव्यवहारानुपपत्तिरिति वाच्यम्, इष्टापत्तेः। नचोक्तलक्षणस्येतरभेदानुमापकत्वे प्रमेयरूपदुष्टहेतोरितराप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्, दुष्टव्यवहारविषयतावच्छेदकानवच्छिन्नप्रकारताश्रयस्यैव तादृशेतरत्वेन विक्षितत्वात्। दोषविशिष्टस्य प्रमेयस्याऽदुष्टप्रमेयान्तरभेदाभ्युपगमेऽपि तादृशेतरत्वप्रसिद्धिसम्भवाच्च। यत्रेतरत्वस्य प्रसिद्धिस्तत्रैव लक्षणस्येतरभेदानुमापकत्वमित्यस्य स्वीकारेऽपि क्षत्यभावाच्च। स्वज्ञानविषयेति। ननु ह्रदो वह्निमान् प्रमेयधूमादित्यादौ वह्न्य-

❀ गादाधरी ❀

तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषप्रमाविषयत्वेऽपि नातिप्रसङ्गः। अग्रेऽपीदृशसम्बन्धेनैव तद्वत्त्वं बोध्यम्।

अथ ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति, साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र

❀ चन्द्रकला ❀

स्वज्ञानविषयीभूतप्रकृतहेतुताच्छेदकवत्त्वसम्बन्धावच्छिन्नतादृशदोषनिष्ठप्रकारताकमित्यर्थः। तेन = निरुक्तदोषनिष्ठप्रकारताया यथोक्तसम्बन्धावच्छिन्नत्वविवक्षणेन। प्रकृतेति। धूमादिसाध्यकवह्न्यादिहेतुभिन्नस्य रासभादेः। सम्बन्धान्तरेण = कालिकादिसम्बधेन। दोषेति। दोषनिष्ठप्रकारताकयथार्थज्ञानविषयत्वेऽपीत्यर्थः। नातिप्रसंग इति। दुष्टत्वापत्तिरूपातिप्रसंगो नेत्यर्थः।

इदमुपलक्षणम्, तादृशसम्बन्धाविवक्षणे प्रकृतहेतुभिन्ने सद्धेतावितरभेदव्यभिचारित्वापत्तिरपि द्रष्टव्या। अग्रेऽपि = द्वितोयादिलक्षणेऽपि। तादृशेति। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेत्यर्थः। तद्वत्त्वम् = दोषवत्त्वमित्यास्तां विस्तरः।

ननु ह्रदो वह्निमानित्यनुमितिं प्रति यदि ज्ञानविषयह्रदवृत्तित्वविशिष्टवह्न्यभावत्वादिना दोषाणां प्रतिबन्धकता तदा वह्न्यभावत्वेन घटावगाहि-ह्रदो वह्न्यभाववानित्याकारक ज्ञानविषयस्य तादृशानुमित्यप्रतिबन्धकतया तादृशज्ञानविषयसत्त्वदशायां ह्रदो वह्निमानित्यनुमित्यापत्तिस्स्यात्, भ्रमविषयस्य दोषत्वाऽसम्भवादिति येन रूपेण तादृशानुमितिप्रतिबन्धकत्वं विचारसहं तद्रूपस्य पर्वतो वह्निमान् धूमादित्यादौ पर्वतादिधर्मिकवह्न्यभावभ्रमविषयवह्न्यभावादिसाधारणतया केवलवह्न्यभावादिकमादाय तादृशस्थले धूमादिसद्धेतावतिव्याप्त्यापत्तिरित्याशंकते अथेति। बाधादीत्यत्रादिपदात् व्यभिचारादिदोषान्तरपरिग्रहः। पक्षनिष्ठसाध्याभावत्वादिना पक्षधर्मिकसाध्यप्रकारकबुद्धिप्रतिबन्धकत्वाभ्युपगमे दोषमाह साध्येति। पदार्थान्तरस्य = घटादेः, यत्र = यादृशस्थले। ज्ञानम् = निश्चयः।

❀ कलाविलासः ❀

भाववद्ह्रदादिरूपदोषविषयकप्रकृतहेतुविषयकज्ञानविषयतावच्छेदकप्रमेयत्ववत्त्वस्य घटादावपि सत्त्वेन तस्य दुष्टत्वापत्तिभिया स्वज्ञानविषयप्रकृतहेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वसम्बन्धावच्छिन्नदोषप्रकारताया अवश्यं वक्तव्यतया काञ्चनमयधूमहेतोर्दुष्टत्वानुपपत्तिः, प्रकृतहेतुतावच्छेदकतापर्याप्त्यधिकरणकाञ्चनमयधूमत्वस्याप्रसिद्धत्वादिति चेन्न, प्रकृतहेतुनिरूपितवृत्तिताविशिष्टावच्छेदकताया एव विवक्षितत्वात्। वैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन, तथाच प्रमेयधूमहेतुकस्थले

❀ गादाधरी ❀

दोषाणामज्ञायमानतयाऽविरोधित्वेनानुमित्यापत्तेः, किन्तु ज्ञानीयपक्षताव-च्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेन, तादृशविषयतया ज्ञानविशिष्टत्वेन वा। तच्च रूपं तादृशभ्रमविषयपदार्था-न्तरसाधारणमेवेति तेषामपि तादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः। एवञ्च सद्धेतूनामनुमितिप्रतिबन्धकतावच्छेदकनिरुक्तविषयताश्रयवह्न्य-भावादिप्रमाविशेष्यत्वादतिव्याप्तिरिति चेन्न,

❀ चन्द्रकला ❀

तत्र = तादृशस्थले। दोषाणाम् = ह्रदादिपक्षवृत्तित्वविशिष्टवह्न्यभावत्वविशिष्टव-ह्न्यभावादीनाम्। अज्ञायमानतयेति। घटादिपदार्थान्तरस्यैव ज्ञायमानत्वादिति तात्पर्यम्। अविरोधित्वेन = अप्रतिबन्धकत्वेन। अनुमित्यापत्तेरिति। पक्ष-धर्मिकसाध्यादिप्रकारकानुमित्यापत्तेरित्यर्थः। ननु तर्हि केन रूपेण बाधादिदोषाणां प्रतिबन्धकतेत्यत आह किन्त्वित्यादि। तथाच ह्रदादिधर्मिकवह्न्याद्यनुमितिं प्रति निश्चयनिरूपिता या ह्रदादिपक्षतावच्छेदकावच्छिन्नविषयतानिरूपिता वह्नित्वाद्य-वच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयता तद्वत्त्वेनैव प्रतिबन्धकत्वं वक्त-व्यमित्याशयः।

ननूक्तविषयतायाः प्रतिबन्धकतावच्छेदकत्वाभ्युपगमे तस्याः सम्बन्धावच्छि-न्नत्वस्यावश्यकतया गौरवमतो लाघवात् तादृशविषयतायाः संसर्गमर्यादया भान-माह तादृशेति। पक्षादिविषयतानिरूपितसाध्याभावत्वावच्छिन्नविषयतासम्ब-न्धेनेत्यर्थः। ज्ञानेति। निश्चयवत्त्वेनेत्यर्थः। तथाच तादृशविषयतासम्बन्धेन निश्चयस्यैव तादृशप्रतिबन्कतावच्छेदकत्वमिति भावः।

तच्चेति तादृशविषयतावत्त्वादिरूपञ्चेत्यर्थः। तादृशेति साध्याभावत्वादिना घटादिपदार्थान्तरावगाहिभ्रमविषयघटादिसाधारणमित्यर्थः। तेषामपि = तादृश-घटादीनामपि। विरोधित्वात् = प्रतिबन्धकत्वात्। नोक्तापत्तिः = न पक्षधर्मिक-साध्यानुमित्यापत्तिः। एवञ्चेति। तादृशविषयतावत्त्वादिना प्रतिबन्धकताया आवश्यकत्वे चेत्यर्थः। सद्धेतूनामपि = पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिसद्धे-तूनामपि। प्रमाविशेष्यत्वादित्यग्रेतनेनान्वयः। अतिव्याप्तिरिति। तथाच पर्व-

❀ कलाविलासः ❀

प्रमेत्वधूमत्वयोरवच्छेदकत्वं तादृशवृत्तिताविशिष्टमिति नातिव्याप्तिः, साधनाप्रसिद्धौ च धूमत्वस्यैव तादृशावच्छेदकत्वं नतु काञ्चनमयत्वस्येति नाव्याप्तिः। न च प्रमेयहेतौ घटो दुष्ट इति व्यवहारापत्तिरिति वाच्यम्, तादृशव्यवहारस्येष्टत्वादिति विभावनीयम्।

❀ गादाधरी ❀

यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम्। ह्रदो वह्निमान् धूमादित्यादौ च तादृशं रूपं ह्रदविशिष्टवह्न्यभावत्वादिकं, ह्रदे वह्निर्नास्तीत्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिबन्धकतायामवच्छे-

❀ चन्द्रकला ❀

तत्वावच्छिन्नविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयतावत्त्वेन पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्न्यभाववानित्याकारकभ्रमीयवह्न्यभावादेरप्युपादातुं शक्यतया तादृशवह्न्यभावरूपानुमितिप्रतिबन्धकनिष्ठस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकारताकयथार्थज्ञानविशेष्यत्वस्य निरुक्तधूमादिसद्धेतौ सत्त्वात् तत्रातिव्याप्तिरितिभावः।

समाधत्ते यद्रूपेत्यादि। तथाच यद्रूपावच्छिन्नविषयतात्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं तद्रूपावच्छिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकारताकयथार्थज्ञानविशेष्यत्वं दुष्टत्वमिति प्रथमलक्षणार्थः पर्यवसितः। ह्रदो वह्निमान् धूमादित्यादौ ह्रदवृत्तित्वविशिष्टवह्न्यभावत्वं आधेयतासम्बन्धेन ह्रदविशिष्टवह्न्यभावत्वं वा यद्रूपपदेनोपादाय तादृशवह्न्यभावत्वावच्छिन्नविषयतात्वं यत्र यत्र तत्रैव ह्रदधर्मिकवह्न्यनुमितिप्रतिबन्धकतावच्छेदकताया आवश्यकतया ह्रदविशिष्टवह्न्यभावत्वावच्छिन्नविषयतात्वव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायामक्षतत्वात् तादृशवह्न्यभावत्वावच्छिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नप्रकारताकह्रदवृत्तिवह्न्यभाववान् धूम इत्याकारकयथार्थज्ञानविशेष्यताया धूमेऽनपायात् तत्र लक्षणसमन्वय इत्याह ह्रदो वह्निमानिति। यथा ह्रदत्वावच्छिन्नविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयतात्वेन बाधात्मकह्रदविशिष्टवह्न्यभावनिष्ठप्रकृतानुमितिप्रतिबन्ध-

❀ कलाविलासः ❀

यद्रूपावच्छिन्नविषयतासामान्यमिति। नन्वत्र कल्पे पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयतासामान्यस्यैव प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतया तत्प्रकारकप्रमाविशेष्यत्वस्य हेतौ सत्त्वादतिव्याप्तिः, पाषाणमयो न वह्निमान् पर्वतश्च पाषाणमय इति ज्ञानविशिष्टज्ञानस्य प्रकृतानुमितिप्रतिबन्धकत्वात् समानाकारकज्ञानविषयताया ऐक्यात्, अन्यथाऽग्रेऽपि

❀ गादाधरी ❀

दकत्वात्। सद्धेतुस्थले च न केवलवह्न्यभावत्वादिकं तथा, तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्यविषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात्।

❀ चन्द्रकला ❀

कतायां तादृशवह्न्यभावत्वावच्छिन्नविषयताया अवच्छेदकत्वं तथा धूमवान् वह्नेरित्यादावपि वह्निनिष्ठधूमाभाववद्वृत्तित्वरूपव्यभिचारविषयताया अपि तथात्वमित्यनयैव रीत्या व्यभिचारिणि वह्न्यादावपि लक्षणसमन्वयः स्वयमूहनीयः। पर्वतो वह्निमान् धूमादित्यादिसद्धेतावतिव्याप्तिं वारयति सद्धेतुस्थल इति। पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकस्थले इत्यर्थः। तथा = यद्रूपान्तर्गतम्। कुत इत्याकांक्षायामाह तदवच्छिन्नेति। केवलवह्न्यभावत्वावच्छिन्नविषयतासामान्यान्तर्गतायाः पर्वतादिरूपधर्म्यविषयकज्ञाननिरूपितवह्न्यभावत्वावच्छिन्नविषयतायाः प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकत्वादित्यर्थः।

ननु केवलवह्न्यभावत्वादेः यद्रूपपदेनोपादानाऽसम्भवेऽपि आधेयतासम्बन्धेन पर्वतविशिष्टवह्न्यभावत्वादिकमेव यद्रूपपदेनोपादाय सद्धेतावतिव्याप्तिः सम्भवतीत्यतः

❀ कलाविलासः ❀

तादृशज्ञानमादायातिव्याप्तिदानाऽसंगतिः स्यादिति चेन्न, ज्ञानभेदेन विषयताभेदमङ्गीकृत्यैवैतल्लक्षणकरणात्, अग्रे च समानाकारकज्ञानीयविषयताया ऐक्यं स्वीकृत्य दोषस्य वक्ष्यमाणत्वात्। एवञ्चानाहार्याप्रामाण्यज्ञानानास्कन्दिताव्याप्यवृत्तित्वभ्रमानास्कन्दितनिश्चयवृत्तित्वं यद्रूपावच्छिन्नविषयतायां निवेश्यम्, अन्यथा असम्भवापत्तेः। अव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशे वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाभाववद्वृक्षमादायातिव्याप्तिरतोऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वनिवेशस्तथासति वृक्षे कपिसंयोगाभावोऽव्याप्यवृत्तिरित्याकारकाव्याप्यवृत्तित्वज्ञानास्कन्दितनिश्चयस्यापि अव्याप्यवृत्तित्वभ्रमानास्कन्दिततया धर्त्तुं शक्यत्वान्नातिव्याप्तिः। नचैवमसाधारण्येऽव्याप्तिः, पक्षधर्मताज्ञानासमानकालीनतादृशासाधारण्यविषयताया अपि तादृशविषयतासामान्यान्तर्गततया तस्याःप्रतिबन्धकतानवच्छेदकत्वादिति वाच्यम्, अस्य दुष्टलक्षणत्वेन दोषलक्षणत्वाभावात्, असाधारण्यनियतबाधस्वरूपासिद्ध्याद्यन्यतमदोषमादायैव हेतौ दुष्टत्वसम्भवात्। नच

❀ गादाधरी ❀

**पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टञ्च न किञ्चिद्वस्तु प्रसिद्धमिति नातिप्रसङ्गः। तृतीयमपि लक्षणमनयैव रीत्या परिष्कार्य्यमिति।**

❀ चन्द्रकला ❀

आह पर्वतेति। आधेयतासम्बन्धेनेत्यादिः। न किञ्चिदिति। तथाच पर्वतविशिष्टवह्न्यभावत्वादेरप्रसिद्धतया न तस्य यद्रूपपदेनोपादानं कथमपि सम्भवतीति हृदयम्। नातिप्रसंग इति। केवलपर्वतत्वावच्छिन्नविषयतात्वस्य केवलवह्न्यभावत्वावच्छिन्नविषयतात्वस्य च पर्वतः वह्न्यभावः इत्याद्याकारकज्ञाननिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतायामपि सत्त्वात् तत्र च प्रकृतपर्वतादिधर्मिकताद्दशानुमितिप्रतिबन्धकतावच्छेदकत्त्वविरहेण वह्न्यभावत्वाद्यवच्छिन्नविषयतात्वव्यापकत्वस्य अनुमितिप्रतिबन्धकतावच्छेदकत्वेऽसत्त्वात् यद्रूपपदेन पर्वतत्ववह्न्यभावत्वादेर्धर्तुमशक्यत्वात्। आधेयतया पर्वतविशिष्टवह्न्यभावत्वावच्छिन्नविषयतात्वव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायां वर्त्तमानत्वेऽपि ताद्दशस्य वस्तुत्वाभावेनालीकतया तस्यापि यद्रूपपदेनोपादानाऽसम्भवान्न सद्धेतावुक्तलक्षणस्यातिव्याप्तिः सम्भवतीति तु परमार्थः।

तृतीयलक्षणस्यापि ज्ञायमानदोषस्य प्रतिबन्धकत्वमभ्युपेत्यैव वक्तव्यतया तस्य व्याख्यान्तराऽसम्भवादाह तृतीयमपीति। तथाच तृतीयलक्षणस्य दोषलक्षणत्वे यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वमर्थः, दुष्टलक्षणत्वे तु प्रथमलक्षणार्थ एव पर्यवसित इति भावः।

ननु सर्वत्रैव दोषविषयकप्रकृतहेतुविषयकसमूहालम्बनज्ञानस्यापि प्रकृतानुमितिप्रतिबन्धकतया प्रकृतानुमितिप्रतिबन्धकयथार्थज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वमेव दुष्टत्वं वाच्यमिति दोषज्ञानस्य प्रतिबन्धकत्वसम्भवे दोषाणां प्रतिबन्धकत्वाभिधानम-

❀ कलाविलासः ❀

**तथाप्यसाधारण्येन दुष्ट इतिव्यवहारानुपपत्तिः यद्यपीत्याद्युत्तरग्रन्थाऽसंगतिश्च, तत्र दोषघटितलक्षणस्याभिधानादिति वाच्यम्, ताद्दशज्ञानीययद्धर्मावच्छिन्नविषयतात्वव्यापकः प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकत्वाऽसाधारण्यविषयिताभिन्नत्वोभयाभाव इतिविवक्षणेनादोषात्।**

❀ गादाधरी ❀

यद्यपि अस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामतानाश्रयणेऽपि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यहेतुकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते । तथापि दुष्टस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आदृत इति ।

ननु द्वितीयतृतीयलक्षणयोर्दोषेऽतिव्याप्तिरव्याप्तिश्च

❀ चन्द्रकला ❀

संगतमित्याशंकते यद्यपीति । प्रथमलक्षणस्येत्यर्थः । तद्रूपेति साध्यहेतावप्यन्वितम् प्रकृतपक्षाद्यर्थकम् । यद्रूपावच्छिन्नहेतुकानुमितिस्तद्रूपावच्छिन्नस्यैव दुष्टत्वमित्याह तेनैवेति । हेतुतावच्छेदकादिरूपेणेत्यर्थः । तेन ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदत्वादिना न धूमस्य दुष्टत्वापत्तिरिति ध्येयम् ।

शक्यत इति । तथाच यथार्थपदानुपादाने पर्वतो वह्निमान् धूमादित्यादौ धूमादिसद्धेतावव्याप्तिः, पर्वतो वह्न्यभाववान् धूमश्चेत्याकारकसमूहालम्बनज्ञानस्यापि पर्वतादिधर्मिकताहशानुमितिप्रतिबन्धकतया ताहशसमूहालम्बनभ्रमविषयहेतुतावच्छेदकवत्त्वस्य धूमादौ सत्त्वात्, अतो यथार्थपदोपादानमिति भावः ।

समानाकारकज्ञानविषयताया ऐक्यमभ्युपेत्येदम् । तेन ह्रदो वह्निमान् वह्निमद्ध्रदादित्यादौ प्रकृतहेतुविषयकदोषज्ञानस्याहार्यतया भ्रमत्वेऽपि न क्षतिरिति मन्तव्यम् ।

उत्तरयति तथापीति । निरुक्तरीत्या प्रथमलक्षणस्य दुष्टलक्षणत्वसम्भवेपीत्यर्थः । दोषेति । दोषवत्त्वं दुष्टत्वमित्यनुरोधेनेत्यर्थः । तन्मतमवलम्ब्य = दोषाणाम् प्रतिबन्धकतामतमवलम्ब्य । निरुक्तदुष्टलक्षणस्य दोषाऽघटितत्वादिति हृदयम् ।

इदमुपलक्षणम्, लक्षणान्तरत्वमप्यस्येति द्रष्टव्यमिति ध्येयम् । अग्रे चेत्यादिदीधितिमवतारयति नन्विति । तथाच द्वितीयतृतीयलक्षणघटकतत्त्वस्य यथाश्रुतार्थपरत्वे

❀ कलाविलासः ❀

ज्ञानभेदेन विषयताभेदानभ्युपगमे तु अनाहार्यत्वादिविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वाऽसाधारण्यविषयिताशून्यत्वोभयाभावस्तद्रूपवत्त्वमिति विवक्षणीयम् । एवञ्च पाषाणमयत्ववान् वह्न्यभाववानितिज्ञानाऽकालीनपाषाणमयत्ववत्पर्वतनिश्चये निरुक्तोभयाभावाऽसत्त्वान्न कोऽपि दोष इति ध्येयम् ।

यथार्थपदसार्थक्यमुपपादयितुमिति । अथ यादृशस्थले ह्रदादौ वह्न्याद्यनुमितौ वह्निमद्ह्रदकालीनधूमादेहेतुता तत्र वह्न्यभाववद्ह्रदरूपदोषविषयकहेतुतावच्छेदकविषयकसमूहालम्बनज्ञानस्याहार्यतया तत्र प्रकृतानुमितिप्रतिबन्धकत्व-

❀ गादाधरी ❀

क्वचिद्धेतौ, यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्यस्येति। प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनैवोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितम्, तत्त्वमित्यस्य यथाश्रुतार्थकत्वानुरोधादतस्तथैवाह आद्यस्यैवेति। ईदृशव्याख्याया निर्दोषत्वात् प्राहुरित्युक्तम्।

❀ चन्द्रकला ❀

तस्य यत्पदोपस्थाप्यमात्रवृत्तितया ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदरूपदोषेऽतिव्याप्तिः, तस्य वह्न्यभावविशिष्टह्रदमात्रनिष्ठत्वात् ह्रदो वह्निमान् वह्न्यभाववद्ध्रदादित्यादौ दोषस्येव दुष्टहेतुतया तत्त्वस्य वह्न्यभावविशिष्टह्रदनिष्ठत्वेन दुष्टहेतौ लक्षणसमन्वयसम्भवेऽपि ह्रदादिपक्षकवह्न्यादिसाध्यकधूमादिहेतावव्याप्तिश्चेति समुदितार्थः पर्यवसितः। क्वचिद्धेतौ = दोषातिरिक्तदुष्टहेतौ। तन्मात्रेति। दोषमात्रवृत्तित्वादित्यर्थः। आहेतिदीधितिकार इति शेषः। तत्त्वस्य तद्वत्त्वार्थकरणे तु न दोषेऽतिव्याप्तिः, नवा दुष्टहेतावव्याप्तिः, तद्वत्त्वरूपदोषवत्त्वस्य दुष्टहेतुमात्रनिष्ठत्वादित्याशयः, तत्त्वमित्यस्य यथाश्रुतार्थपरित्यागात्। द्वितीयतृतीयलक्षणे तु दोषस्यैव, प्रथमलक्षणन्तु दुष्टस्यैवेत्यभ्युपगमेऽपि क्षत्यभावात् तत्त्वशब्दस्य लाक्षणिकत्वमयुक्तमित्याशयवतां दीधितिकृतामाद्यस्यैव वेति ग्रन्थावतरणिकामाह प्रथमेति। प्राहुरित्युक्तिं समर्थयति ईदृशेति। प्रथमलक्षणस्येत्यादिः।

इति भारतवर्षप्रसिद्ध-साधुवेलाश्रमाधीश-श्रीस्वामिप्रवरोदासीनहरिनामदासविरचिता
सामान्यनिरुक्तिप्रथमलक्षणस्य चन्द्रकला टीका समाप्ता।

❀ कलाविलासः ❀

विरहेण लक्षणगमनाऽसम्भव इति चेन्न, तादृशानुमितिप्रतिबन्धकतावच्छेदकीभूतविषयताशालिप्रमाविषयहेतुतावच्छेदकवत्त्वस्य विवक्षणीयत्वात्। समानाकारकज्ञानीयविषयताभेदविरहेण हेतुतावच्छेदकाविषयकनिरुक्तज्ञानीयविषयतामादाय न काप्यनुपपत्तिः। अत एव यत्र हेतुतावच्छेदकविषयकं ज्ञानं नियतं भ्रमात्मकमेव तत्रत्यदोषेऽव्याप्तिरित्यपि पूर्वपक्षो निरस्त इति कृतं पल्लवितेन।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यस्वामिश्रीहरिनामदासविरचिता
सामान्यनिरुक्तिप्रथमलक्षणस्य कलाविलासनामिका टीका समाप्ता।

---

❀ श्रीः ❀

# अथ द्वितीयलक्षणम् ।

❀ चिन्तामणिः ❀

**यद्विषयकत्वेन लिङ्गज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तत्त्वम् ।**

❀ दीधितिः ❀

**लिङ्गमविवक्षितम् ।**

❀ गादाधरी ❀

लिङ्गज्ञानस्येति । लिङ्गांशनिवेशस्य निष्प्रयोजनकतया तस्याऽविवक्षितत्वमाह लिङ्गमिति ।

यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं, तच्च यदि अनतिरिक्तवृत्तित्वरूपमिदानीं निवेश्यते तदाऽसंभवः, विशिष्टस्याऽनतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वावच्छिन्नविषयकज्ञा-

❀ चन्द्रकला ❀

यद्विषयकत्वेन लिंगज्ञानस्यानुमितिप्रतिबन्धकत्वमितिलक्षणे लिंगपदस्याविवक्षितत्वाभिधानं हेतुपूरणेन समर्थयति लिंगांशनिवेशस्येत्यादि । निष्प्रयोजनकत्वञ्चाविवक्षितत्वे हेतुरित्यवगन्तव्यम् । तथाच यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वमित्येवं द्वितीयलक्षणमिति भावः । तच्च = तृतीयार्थावच्छेदकत्वञ्च । अनतिरिक्तेति । यद्विषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकताकत्वरूपमित्यर्थः । इदानीम् = यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेत्यर्थाऽकरणदशायाम् । असम्भवे हेतुमाह विशिष्टस्येति । वह्न्यभावविशिष्टह्रदादेरित्यर्थः । अनतिरिक्ततया = केवलह्रदादिस्वरूपतया । शुद्धेति । वह्न्यभावाद्यविषयककेवल "ह्रद" इत्याकारकज्ञानेऽपीत्यर्थः । तथाचेदानीं यद्विषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकताविवक्षणे सर्वत्रासम्भवःस्यात्, वह्न्यभावविशिष्टह्रदादेः केवलह्रदाद्यात्मकतया ह्रद इत्याकारकज्ञानेऽपि वह्न्यभावविशिष्टह्रदविषयकत्वस्य वर्त्तमानतया तत्र ह्रदादिधर्मिकप्रकृतानुमितिप्रतिबन्ध-

❀ कलाविलासः ❀

**लिङ्गमविवक्षितमिति । तथाच निरुक्तलक्षणघटकीभूतं लिंगपदं अविवक्षितं निष्प्रयोजनकत्वात् इत्यनुमाने तात्पर्यम् । अत्राऽविवक्षितत्वं अर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितग्रन्थकारीयेच्छाविशेष्यतावद् यद् यत् तदन्यत्वरूपम् ।**

❀ गादाधरी ❀

**नेऽपि सत्त्वेनाऽनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात्, अतः स्वरूपसंबन्धरूपमेव तद्वाच्यम्, तथा च पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमविषय-**

❀ चन्द्रकला ❀

कताविरहेण लक्ष्यीभूतवह्न्याद्यभावविशिष्टह्रदादिविषयकत्वव्यापकत्वस्य तादृशानुमितिप्रतिबन्धकतायामसत्त्वात् वह्न्यभावविशिष्टह्रदादेर्यत्पदेनोपादानाऽसम्भवादितिभावः। अत इति। निरुक्तासम्भवभयतः। तद्वाच्यमिति। तादृशतृतीयार्थावच्छेदकत्वं वाच्यमित्यर्थः। तथाच यद्विषयता प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावती तत्त्वमितिलक्षणार्थः पर्यवसितः।

तथाचेति। स्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षणे चेत्यर्थः। पर्वतो वह्निमानित्याद्यनुमितीत्यत्रादिपदात् ह्रदो वह्निमानित्याद्यनुमितिपरिग्रहः। भ्रमपदञ्च निश्चयपरम्, तथाच तादृशतादृशानुमितिप्रतिबन्धकनिश्चयविषयवह्न्यभावे पर्वतादौ वातिव्याप्तिरिति समुदितार्थः।

❀ कलाविलासः ❀

निष्प्रयोजनकत्वञ्च फलाभावप्रयोज्येच्छाविषयत्वाभाववत्त्वस्वरूपमिति बोध्यम्। अथ लिंगात् ज्ञानं लिंगज्ञानमित्युपपत्त्या लिंगजन्यज्ञानपदेनानुमितेर्लाभात् यद्रूपावच्छिन्नविषयकानुमितित्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमेव लक्षणं अनाहार्यत्वाद्यप्रवेशेन लघुभूतं लभ्यते इति कथं लिंगांशस्यानतिप्रयोजनकत्वमुक्तमिति चेन्न? घटोऽवृत्तिरित्यादौ घटवद्रूपबाधेऽव्याप्त्यापत्तेः, निर्द्धर्मितावच्छेदककघटवदित्याकारकानुमितेरप्रसिद्धेरिति ध्येयम्।

वस्तुतो यादृशस्थले यद्दोषविषयिणी अनुमितिः कस्यापि न जाता तत्रत्यदोषे अव्याप्त्यापत्तिरित्यस्मद्गुरुचरणाः।

नच लिंगविषयकयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयाऽप्रसिद्ध्या असम्भवसम्भवे तथाऽपि लिंगांशस्य निष्प्रयोजनकत्वाभिधानमनुचितमिति वाच्यम्, लिंगविषयिताभिन्ना या यद्रूपावच्छिन्नविषयित्वाव्यापकीभूता विषयिता तच्छून्यत्वनिवेशेऽसम्भवानवकाशादिति वदन्ति। वस्तुतस्तु अव्यापकीभूतविषयिताशून्यत्वं यद्रूपावच्छिन्नविषयकनिश्चये न निवेश्यमपितु यद्रूपावच्छिन्नविषयितायामेव अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वं निवेश्यते, एवञ्च लिंगविषयकदोषविषयकसमूहालम्बनज्ञानमादायैव सर्वत्र लक्षणसमन्वयसम्भवादसम्भवं विहाय लिंगपदस्यानतिप्रयोजनकत्वमभिहितमिति ध्येयम्।

❀ गादाधरी ❀

वह्न्यभावादावतिप्रसङ्गः तद्विषयकत्वस्याऽपि प्रतिबन्धकतावच्छेदकघटकत्वात्, असंभवभयेन चाऽवच्छेदकतापर्याप्तिनिवेशाऽसम्भवात्, अतः

❀ चन्द्रकला ❀

अतिव्याप्तौ हेतुमाह तद्विषयेति। वह्न्यभावत्वाद्यवच्छिन्नविषयत्वस्यापीत्यर्थः। प्रतिबन्धकतेति। पर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतावच्छेदकधर्मघटकत्वादित्यर्थः। पर्वतत्वाद्यवच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयताशालिनिश्चयत्वेनैव पर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकताया वक्तव्यतया वह्न्यभावत्वाद्यवच्छिन्नविषयताया अपि प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वेन यद्विषयतापदेन वह्न्यभावादिविषयताया अपि धर्तुं शक्यत्वात् स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणे भवति वह्न्यभावादावतिव्याप्तिरिति तु परमार्थः।

ननु यद्विषयता प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायाः पर्याप्त्यधिकरणीभूता भवति तत्त्वं हेत्वाभासत्वमित्युक्तौ न वह्न्यभावादावतिव्याप्तिः, पर्वतत्वावच्छिन्नविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयताया एव तादृशानुमितिप्रतिबन्धकतावच्छेदकतया तादृशविषयतासमुदायस्यैव प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वेन केवलवह्न्यभावविषयतायास्तथात्वासम्भवादित्यत आह **असम्भवभयेनेत्यादि**। तथाचोक्तरीत्या यद्विषयतायां प्रतिबन्धकतावच्छेदकत्वपर्याप्त्यधिकरणत्वविवक्षणे ह्रदो वह्निमान् धूमादित्यादिस्थले वाधादौ सर्वत्राऽसम्भवःस्यात्, ह्रदत्वेन नद्यवगाहि-वह्नित्वेन गुञ्जावगाहि-अभावत्वेन घटावगाहि-ह्रदो वह्न्यभाववानित्याकारकज्ञानस्यापि ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतया तादृशानुमितिं प्रति भ्रमप्रमा-

❀ कलाविलासः ❀

नच तथापि लिंगपदोपादाने ह्रदो वह्निमान् वह्निमद्ध्रदादित्यादौ लिंगविषयकवह्न्यभाववद्ध्रदविषयकानाहार्यनिश्चयाऽप्रसिद्ध्याऽव्याप्तिसम्भवे लिंगांशस्य निष्प्रयोजनकत्वाभिधानमसंगतमितिवाच्यम्, लिंगतावच्छेदकतायाः पर्याप्तेरनिवेशात् शुद्धह्रदत्वस्यापि लिंगतावच्छेदकघटकतया तद्विशिष्टविषयकत्वस्य वह्न्यभाववद्ध्रदनिश्चयेपि सत्त्वात्। नच तथापि लिंगपदस्य वैयर्थ्यसम्भवे तस्यानतिप्रयोजनकत्वाभिधानमसंगतमिति वाच्यम्, लिंगविषयकयद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिव्यापकतारूपाभावस्य यद्विषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीतिप्रतीतिसिद्धाभावाऽघटितत्वेन वैयर्थ्याऽसम्भवात् तादृशव्यापकतारूपाभावतो निरुक्ताभावस्य भिन्नत्वात्।

❀ दीधितिः ❀

यद्विषयकत्वेन = यादृशविशिष्टविषयकत्वेन । तेनाऽनुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः ।

❀ गादाधरी ❀

यद्विषयकत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषयकत्वेनेति । यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थः । एवं च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः ।

व्याख्यायाः प्रयोजनं स्फुटयति तेनेति । यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गसंभवः,

❀ चन्द्रकला ❀

साधारणह्रदत्वावच्छिन्नविषयतानिरूपिता या वह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयता तच्छालिनिश्चयत्वेनैव प्रतिबन्धकताया वक्तव्यतया निरुक्तनिरूप्यनिरूपकभावापन्नविषयताया एव तादृशानुमितिप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणतया लक्ष्यीभूतवह्न्यभावविशिष्टह्रदादिविषयतायाः तादृशप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वेन वह्न्यभावादिविशिष्टह्रदादेर्विषयताया यद्विषयतापदेनोपादानासम्भवात् भवत्यसम्भव इति भावः ।

यद्विषयकत्वेनेति पदं तृतीयान्तं यद्विषयकत्ववाक्यार्थम् । व्याचष्टे = व्याकरोति, दीधितिकार इति शेषः ।

ननु यादृशविशिष्टविषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविशिष्टविषयकत्वेनेत्यर्थकरणे अग्रिमतत्त्वमित्यस्यानन्वयप्रसंगः, तत्त्वस्य यत्पदोपस्थाप्यमात्रनिष्ठत्वादित्यत आह एवञ्चेति । यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थकरणे चेत्यर्थः । तद्रूपावच्छिन्नत्वमर्थ इति । तथाच यद्रूपावच्छिन्नविषयकत्वेन प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमित्येतावत्पर्यन्तं लक्षणार्थः पर्यवसितः । पक्षविषयकभ्रमविषये इत्यनुक्त्वा पक्षविशेष्यकभ्रमविषय इत्यभिधानस्य प्रयोजनमाह यत्प्रकारकत्वेनेति । यन्निष्ठप्रकारताकत्वेनेत्यर्थकम् । पक्षेति । पक्षनिष्ठप्रकारताकम् पर्वते वह्न्यभाव इत्याकारकभ्रममादायेत्यर्थः । नातिप्रसंगेति । पर्वतादिधर्मिकवह्न्याद्यनुमितिं प्रति पर्वते वह्न्यभाव इत्याकारकभ्रमात्मकनिश्चयस्य पर्वतनिष्ठप्रकारतानिरूपितवह्न्यभावनिष्ठविशेष्यताकत्वेनैव प्रतिबन्धकतया यत्पदेन पर्वतादेर्धर्तुं शक्यत्वात् तत्त्वस्य तन्मात्रनिष्ठत्वेन दीधितिकारोक्तसाध्याभावात्मकवह्न्यभावादावतिव्याप्तिर्न सम्भवतीति हृदयम् ।

❀ गादाधरी ❀

पर्वतादावतिप्रसङ्गसंभवेऽपि            यत्संबन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेन

❀ चन्द्रकला ❀

ननु यन्निष्ठप्रकारताकत्वेनानुमितिप्रतिबन्धकत्वं . तत्त्वमित्युक्तावपि पक्षविषयकं पर्वते वह्न्यभाव इत्याकारकभ्रममादाय पर्वतेऽतिव्याप्तिरस्त्येवेति पक्षविशेष्यकभ्रमपर्यन्तानुसरणं व्यर्थम् । नच साध्याभावेऽतिव्याप्त्यसम्भवात् साध्याभावादावित्यभिधानमसंगतं स्यादिति वाच्यम् , अतिव्याप्तिमात्रस्यैवोक्तग्रन्थतात्पर्यात् , आधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकपर्वताभावस्य वह्न्यभावादौ साध्यतास्थले पर्वतादेरपि साध्यात्वसम्भवाच्चेत्यत आह पर्वतादावतीति । यत्सम्बन्धेति । यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकज्ञानत्वेनेत्यर्थः ।

❀ कलाविलासः ❀

यत्सम्बन्धावच्छिन्नयन्निष्ठेति । ननु पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यतायां धूमहेतोः सद्धेतुतया तदनुमितिं प्रति पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावप्रकारकपर्वतविशेष्यकज्ञानस्यैव प्रतिबन्धकतया तादृशसम्बन्धाऽप्रसिद्ध्यैव पक्षविशेष्यकभ्रममादाय सद्धेतावतिव्याप्तिवारणसम्भवात् कथं तादृशभ्रममादायातिव्याप्तिर्दत्ता इति चेन्न, पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति यथा पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकत्वं तथा वह्न्यभावव्याप्यपर्वतत्वप्रतियोगकसमवायसम्बन्धावच्छिन्नपर्वतत्वनिष्ठावच्छेदकताकविशेष्यताकशुद्धस्वरूपेण वह्न्यभावप्रकारकज्ञानस्यापीति तत्सम्बन्धेन तद्वत्त्वस्य धूमहेतौ सत्त्वेन तादृशभ्रममादायैवातिव्याप्तेस्संगमनोयत्वात् ।

नचैवं सति तादृशसम्बन्धावच्छिन्नपर्वततत्वनिष्ठावच्छेदकताकशुद्धसंयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारताकवह्न्यभावव्याप्यविशेष्यकज्ञानस्यापि तादृशानुमितिप्रतिबन्धकतया शुद्धसंयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतवत्तायाःधूमे सत्त्वेन पक्षविशेषणकभ्रममादायाऽपि धूमहेतावतिव्याप्तिः सम्भवतीति वाच्यम् यादृशसम्बन्धावच्छिन्नयादृशरूपनिष्ठावच्छेदकताकयादृशसम्बन्धावच्छिन्नप्रकारताकत्वेन प्रकृतानुमितिप्रतिबन्धकत्वं तादृशसम्बन्धावच्छिन्नतादृशरूपनिष्ठावच्छेदकताकतादृशसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्त्वस्यैव दुष्टत्वव्यवहारनियामकत्वोपगमेन पक्षविशेषणकभ्रममादाय प्रसिद्धधूमहेता-

❀ गादाधरी ❀

अनुमितिविरोधित्वम् तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वो-

❀ चन्द्रकला ❀

अनुमितीति । प्रकृतेत्यादिः । तेनेत्यादि । तत्सम्बन्धा-वच्छिन्नतन्निष्ठाधेयतानिरूपिताधिकरणतावत्त्वस्येत्यर्थः । दुष्टेति । अयं हेतुर्दुष्ट इत्याकारकव्यवहारनियामकत्वस्वीकारे इत्यर्थः । स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्व-सम्बन्धेन दोषसम्बन्धित्वस्यैव स्वमते दुष्टताव्यवहारनियामकत्वादुपगमे इत्युक्तमिति ।

❀ कलाविलासः ❀

वतिव्याप्तेरयोगात् तादृशसम्बन्धाप्रसिद्धेः । नचैवं विवक्षणे कथं तादृशान्यतरत्व-हेतावतिव्याप्तिरिति वाच्यम् , व्याप्तिज्ञानं प्रति साध्याभावधर्मिकस्वरूपसम्बन्धाव-च्छिन्नाऽधेयतासम्बधेन हेतुमत्प्रकारकज्ञानस्य प्रतिबन्धकतया तादृशभ्रममादायैव तादृशान्यतरत्वहेतावतिव्याप्तिसम्भवादिति भावः ।

अथात्र कल्पे धूमत्ववान् पर्वतो वह्निमान् धूमादित्यादौ धूमस्य दुष्टत्वानुपपत्तिः स्वरूपसम्बन्धेन धूमत्वाभावप्रकारकज्ञानस्य प्रतिबन्धकतया तेन सम्बन्धेन धूमत्वा-भावस्य धूमे विरहात् । एवं रूपत्ववत्पर्वतो वह्निमान् तद्रूपात् इत्यादावपि हेतौ दुष्टत्वव्यवहारो न स्यात् रूपत्वाभावादेस्तद्रूपेऽसत्त्वात् इति चेन्न, सर्वत्रैव तदभा-वव्याप्यःपर्वते इतिज्ञानमादाय हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छि-न्नपर्वतप्रकारकव्याप्यविशेष्यकज्ञानस्यापि प्रकृतानुमितिप्रतिबन्धकतया तेन सम्ब-न्धेन तद्वत्त्वस्य हेतौ सत्त्वादिति ध्येयम् ।

वस्तुतस्तु धूमत्वाभावत्वादिना घटाभावभ्रमस्यापि स्वरूपसम्बन्धावच्छिन्नघटा-भावनिष्ठाकारताकत्वेन अनुमितिप्रतिबन्धकतया स्वरूपसम्बन्धेन घटाभाववत्त्वस्य धूमादिहेतौ सत्त्वात् धूमत्ववत्पर्वतो वह्निमान् धूमादित्यादौ धूमादिहेतावव्याप्तिर्न सम्भवति, एवमन्यत्रापि दुष्टत्वमनयैव रीत्योपपादनीयमिति तु युक्तमुत्पश्यामः ।

नन्वत्र दोषलक्षणं कीदृशं यदि यत्प्रकारकत्वेनानुमितिप्रतिबन्धकत्वं तत्त्वं तदा वह्न्यभाववद्ध्रदस्य दोषत्वं न स्यात् तादृशह्रदप्रकारकत्वेनानुमिति-प्रतिबन्धकत्वविरहात् । यदिच दोषाऽघटितमेव यत्सम्बन्धावच्छिन्नयत्प्रकारता-कत्वेनानुमितिप्रतिबन्धकत्वमित्यादि दुष्टलक्षण मुच्यते तदादोषवत्त्वं दुष्टत्वमिति नियमानुपपत्तिरिति चेन्न अन्तराभाससमानविषयतयोर्भेदानभ्युपगमे वह्न्यभाववद्-ध्रदवान्धूम इत्याकारकज्ञानीयस्वज्ञान विषयप्र कृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छि-न्नप्रकारतया अपि विशेष्यत्वाऽभिन्नतया अनुमितिप्रतिबन्धकतावच्छेदकत्वात् यत्प्र-कारताकत्वेन प्रतिबन्धकत्वं तत्त्वं दोषत्वमित्यस्यैव वक्तव्यत्वादितिध्येयम् ।

॥ गादाधरी ॥

पगमे पर्वतादिविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात्तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्धधूमादिहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तम्। भ्रमपदं निश्चयसामान्यपरम्, तेन

॥ चन्द्रकला ॥

ध्येयम्। पर्वतेति। पर्वते वह्न्यभाव इत्याकारकभ्रमात्मकनिश्चयस्येत्यर्थः। विशेषणतेति स्वरूपार्थकम्। प्रतिबन्धकत्वादिति। पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितीत्यादिः। तेनेत्यादि। स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेनेत्यर्थः। पर्वतादिमत्तायाः = पर्वतादिनिष्ठाधेयतानिरूपिताधिकरणतायाः। तत्र = प्रसिद्धधूमादिहेतौ। तदनुरोधेन = प्रसिद्धधूमहेतौ दुष्टताव्यवहारापत्त्यनुरोधेन। पक्षविशेष्यकेत्युक्तमिति। तथाच पक्षविशेष्यकभ्रममादाय इत्यनभिधाय पक्षविषयकभ्रममादायेत्यभिधाने पर्वतो वह्निमान् धूमादित्यादौ प्रसिद्धधूमादिसद्धेतौ दुष्टत्वव्यवहारापत्तिर्न स्यात् पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमितिं प्रति पर्वते वह्न्यभाव इत्याकारकपक्षविषयकभ्रमात्मकनिश्चयस्य पर्वतत्वावच्छिन्नपर्वतनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारताकत्वेनैव प्रतिबन्धकतया स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतवत्त्वस्य पर्वतपक्षकवह्निसाध्यकपर्वतमहानसान्यतरत्वरूपसद्धेतौ वर्त्तमानत्वेऽपि तस्य प्रसिद्धधूमरूपसद्धेतावसत्त्वात्। पक्षविशेष्यकेत्युक्तौ तु पर्वतविशेष्यकम् पर्वतो वह्न्यभाववानित्याकारकभ्रममादाय प्रसिद्धधूमरूपसद्धेतावेव दुष्टत्वव्यवहारापत्तिः सम्भवति, तादृशभ्रमात्मकज्ञानस्य पर्वतधर्मिकवह्न्याद्यनुमितौ स्वरूपसम्बन्धावच्छिन्नवह्न्यभावनिष्ठप्रकारताकत्वेनैव प्रतिबन्धकतया स्वरूपसम्बन्धेन वह्न्यभाववत्त्वस्य प्रसिद्धधूमरूपसद्धेतावनपायादिति भावः। निश्चयसामान्यपरमिति। लक्षणयेत्यादिः। तेन = भ्रमपदस्य निश्चयसामान्यपरत्वाभिधानेन।

॥ कलाविलासः ॥

भ्रमपदं निश्चयसामान्यपरमिति। अथ भ्रमविषयसाध्याभावादाविति शिरोमण्युक्तादिपदात् बाधितदुष्टहेतुपरामर्शेऽपि तत्रापि भ्रमाविषयसाध्याभावादिकमादाय दुष्टत्वापत्तिसम्भवे भ्रमपदस्य निश्चयसामान्ये लक्षणाकरणमनर्थकमिति

❀ गादाधरी ❀

सद्धेत्वादीत्यादिपदग्राह्यसाध्यशून्यपक्षकदुष्टहेतौ प्रतिबन्धकप्रमाविषयसाध्याभावादेरेव सत्त्वेऽपि नासङ्गतिः। उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वमेवाऽवच्छेदकत्वं विवक्षणीयम्।

❀ चन्द्रकला ❀

सद्धेत्वादीति। सद्धेत्वादिनिष्ठे इत्यत्रादिपदग्राह्ये ह्रदादिपक्षकवह्न्यादिसाध्यकदुष्टहेतावित्यर्थः। नासंगतिरिति। भ्रमपदस्य यथाश्रुतभ्रममात्रपरत्वे यादृशविशिष्टविषयकत्वेनेत्यनुक्तौ ह्रदो वह्निमान् धूमादित्यादौ धूमरूपदुष्टहेतावपि ह्रदो वह्न्यभाववानित्याकारकयथार्थज्ञानविषयकेवलवह्न्यभावादिमत्त्वस्य वर्त्तमानतया केवलसाध्याभावादिमत्त्वमादायासद्धेतावपि दुष्टताव्यवहारापत्तिवारणाय यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेत्यर्थकतायाः सद्धेत्वादिनिष्ठेनेत्यादिग्रन्थेन दीधितिकृतामभिप्रेततया ह्रदो वह्निमान् धूमादित्यादौ साध्याभावस्य ह्रदादौ भ्रमाऽप्रसिद्ध्या भ्रमविषयसाध्याभावादावित्यादिग्रन्थाऽसंगतिः स्यात् यदि भ्रमपदं निश्चयसामान्यपरं न स्यादित्याशयः।

ननु यादृशविशिष्टविषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थकरणेऽपि पर्वतो वह्निमान् धूमादित्यादौ केवलसाध्याभावरूपवह्न्यभावादावतिव्याप्तिः, यद्रूपपदेन वह्निविशिष्टाभावत्वस्य सर्वथा प्रसिद्धस्यैव धर्त्तुं शक्यत्वात् तदवच्छिन्नविषयतायाः अपि प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वादित्यत आह उक्तव्याख्यान इति। यद्विषयकत्वेनेत्यस्य यथोक्तार्थकयादृशविशिष्टविशिष्टविषयकत्वेनेत्यादिव्याख्याने इत्यर्थः। अनतिरिक्तवृत्तित्वमेवेत्येवकारेण यद्रूपावच्छिन्नविषयतायां स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वव्यवच्छेदः। विवक्षणीयमिति। तथाच यद्रूपावच्छिन्नविषयताकत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमित्युक्तौ न पर्वतो वह्निमान् धूमादित्यादौ केवलवह्न्यभावादावतिव्याप्तिः, वह्न्यभाव इत्याकारकज्ञानेऽपि वह्न्यभावत्वावच्छिन्नविषयताकत्वस्य सत्त्वेन तत्र प्रकृतानुमितिप्रतिबन्धकताविरहात् यद्रूपपदेन वह्न्यभावत्वस्योपादानाऽसम्भवादिति भावः।

ननु एवमपि पूर्वोक्तरीत्याऽसम्भवः? वह्न्यभावविशिष्टह्रदादेः शुद्धह्रदस्वरूपतया ह्रद इत्याकारकज्ञानेऽपि वह्न्यभावादिविशिष्टह्रदादिविषयकत्वस्य सत्त्वेन तत्रानुमितिप्रतिबन्धकताविरहात् वह्न्यभावादिविशिष्टह्रदादिरूपविशिष्टविषयकत्वमात्रस्यानुमिति-

❀ कलाविलासः ❀

चेन्न, तादृशार्थे लक्षणाकरणं प्रमाविषयसाध्याभावमादाय सम्भवदतिप्रसंगाकथनप्रयुक्तन्यूनतापरिहारार्थमित्यवधेयम्।

* गादाधरी *

विशेषणीभूतवह्न्यभावाद्यविषयके शुद्धह्रदत्वादिना ह्रदादिविषयकज्ञाने वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविलक्षणविषयतानिरूपकत्वस्याऽसत्त्वेनोक्तासम्भवाऽनवकाशात् । तथाच केवलवह्न्यभावत्वावच्छिन्नविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वान्नातिप्रसङ्ग इत्यर्थः ।

ननु स्वरूपसम्बन्धरूपाऽवच्छेदकत्वनिवेशेऽयमेवाऽतिप्रसङ्गो दुर्वारः, अप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसङ्गवारणे पुनर-

* चन्द्रकला *

प्रतिबन्धकतातिरिक्तवृत्तित्वादित्यत आह विशेषणीभूतेति । शुद्धेति ह्रदत्वमात्रादिनेत्यर्थः । वह्न्यभावेति ह्रद इत्याकारकज्ञाने इत्यर्थः । विलक्षणेति । वह्न्यभाव-ह्रदत्वधर्मद्वयावच्छिन्ना या शुद्धह्रदत्वावच्छिन्नविषयतातो विलक्षणविषयता तन्निरूपकत्वस्येत्यर्थः । उक्तासम्भवानवकाशादिति । ह्रद इत्याकारकज्ञाने केवलह्रदत्वादिना वह्न्यभावविशिष्टह्रदविषयकज्ञाने वा वह्न्यभावह्रदत्वरूपधर्मद्वयावच्छिन्नविलक्षणविषयताकत्वविरहात् यद्रूपावच्छिन्नविषयताकत्वस्य सर्वस्यैव प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वादेवासम्भवानवकाशादित्यर्थः । उपसंहरति तथाचेति । अनतिरिक्तवृत्तित्वरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणे चेत्यर्थः । अतिरिक्तवृत्तित्वात् = स्वव्यापकप्रकृतानुमितिप्रतिबन्धकताकत्वविरहादितिदिक् ।

यथाव्याख्यातयद्विषयकत्वेनेत्यत्र तृतीयार्थावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपस्य दीधितिकृदुक्तस्य प्रयोजनप्रदर्शनपूर्वकं अवच्छेदकत्वञ्चेहेत्यादिग्रन्थं व्याख्यातुं शंकते नन्विति । अयमेवातिप्रसंगः = पर्वतो वह्निमान् ह्रदो वह्निमान्वेत्यादौ केवलसाध्याभावादावतिप्रसंगः । दुर्वार इति । केवलवह्न्यभावत्वावच्छिन्नविषयताया अपि पर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वादिति हृदयम् ।

ननु अप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयताकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायाः पर्याप्त्यधिकरणं तद्रूपवत्त्वमित्युक्ते नैकदेशे वह्न्यभावादावतिव्याप्तिः, भ्रमप्रमासाधारण्यानुरोधेन वह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताकत्वेनैव ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकताया वक्तव्यतया तादृशविषयतासमुदायस्यैव निरुक्तप्रतिबन्धकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणत्वेन केवलवह्न्यभावादिविषयतायाः तादृशप्रतिबन्धकतावच्छेदकतायाः पर्याप्त्यनधिकरणत्वादित्याशंक्य समाधत्ते पुनर-

❀ दीधितिः ❀

अवच्छेदकत्वं चेहाऽनतिरिक्तवृत्तित्वम् ।

❀ गादाधरी ❀

सम्भवः, वह्न्यभाववत्त्वादिना घटाद्यवगाहिनो वह्न्यभाववान् ह्रद इतिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वाच्यतया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतायास्तादृशप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयतात्वेनाऽवच्छेदकत्वेऽपि अप्रामाण्यज्ञानाभावादिविशिष्टह्रदत्वावच्छिन्नविषयताकनिश्चयत्वस्याऽवच्छेदकतापर्याप्त्यनधिकरणत्वादतस्तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं स्फुटयति अवच्छेदकत्वं चेति । इह = लक्षणे । घटकत्वं सप्तम्यर्थः ।

❀ चन्द्रकला ❀

**सम्भव इति** । निरुक्तरीत्या पर्याप्त्यधिकरणत्वविवक्षणे पुनरसम्भवः स्यादित्यर्थः । असम्भवे हेतुमाह वह्न्यभावत्वादिनेत्यादि । तत्साधारण्यानुरोधेन = भ्रमसाधारण्यानुरोधेन । वह्नित्वेति । प्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनेत्यर्थः । तादृशेति तादृशवह्निप्रकारतानिरूपिताभावत्वावच्छिन्नार्थकम् । विषयतात्वेनैवेत्यत्रैवकारेण वह्न्यभावविशिष्टह्रदविषयतात्वेन प्रतिबन्धकतावच्छेदकत्वव्यवच्छेदः । अवच्छेदकतापर्याप्त्यनधिकरणत्वादिति । तादृशविशिष्टविषयतात्वेन प्रतिबन्धकतावच्छेदकताया वक्तुमशक्यत्वात् यद्रूपपदेन लक्ष्यतावच्छेदकीभूतवह्न्यभावविशिष्टह्रदत्वस्योपादानाऽसम्भवादुक्तरीत्या पर्याप्त्यधिकरणत्वविवक्षया भवत्यसम्भव इति भावः । स्फुटयतीति । तथाच यद्रूपावच्छिन्नविषयकत्वम् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वमिति फलितम् ।

ननु तथापि ह्रदो वह्निमान् धूमादित्यादौ बाधादावसम्भववारणं दुःशक्यम् वह्न्यभावादिविशिष्टह्रदादिविषयकत्वस्य ह्रदो वह्निमान्नवेत्याकारकसंशये ह्रदो वह्न्यभाववानित्याकारकज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दितज्ञाने वह्निमान् ह्रदो वह्न्यभाव-

❀ कलाविलासः ❀

**अप्रामाण्यज्ञानाभावादीति** । ननु प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वविवक्षणे कथमसम्भवः ? द्रव्यान्यः पर्वतो वह्निमान् धूमादित्यादौ द्रव्यत्ववत्पर्वत-

❀ गादाधरी ❀

नच विशिष्टविषयकत्वस्याप्रतिबन्धकसंशयादौ सत्त्वात् पुनरसम्भव इति वाच्यम् , ज्ञानस्येत्यत्र ज्ञानपदमनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं, षष्ठ्यर्थ आधेयत्वं तस्य यद्विषयकत्वेऽन्वयः। एवञ्च तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य विवक्षणीयतया असम्भवाभावात् ।

❀ चन्द्रकला ❀

वानित्याकारकाहार्यज्ञाने च सत्त्वात् तत्र च प्रकृतानुमितिप्रतिबन्धकताविरहेण तादृशबाधादिविषयकत्वस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादित्येवं नचेत्यादिना आशंक्य समाधत्ते ज्ञानस्येत्यादि । मूलोक्तलक्षणघटकीभूतस्येत्यादिः ।

अनाहार्येति । आहार्यज्ञानभिन्नत्वे सति अप्रामाण्यज्ञानानास्कन्दितत्वे च सति संशयान्यज्ञानपरमित्यर्थः । तस्य = आधेयत्वस्य । आधेयत्वे च षष्ठ्यर्थे प्रकृत्यर्थस्य तादृशनिश्चयात्मकज्ञानस्य निरूपितत्वसम्बन्धेनान्वयो बोध्यः । यद्विषयेति । यथाव्याख्यातयद्रूपावच्छिन्नविषयकत्वेन सहान्वय इत्यर्थः । तथाच नासम्भव इत्याह एवञ्चेति । तादृशेति । अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयभिन्नज्ञानात्मकनिश्चयवृत्तित्वविशिष्टमित्यर्थः । यादृशविशिष्टेति यद्रूपावच्छिन्नार्थकम् । तादृशत्वस्य = तद्रूपावच्छिन्नत्वस्य । असम्भवाभावादिति अनाहार्यत्वादिविशिष्टस्य

❀ कलाविलासः ❀

रूपाश्रयासिद्धौ लक्षणसमन्वयात् द्रव्यत्वनिष्ठनिरवच्छिन्नप्रकारताकद्रव्यत्वविशिष्टविषयताशालिनिश्चयत्वस्यैव प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वादिति तु विभावनीयम् ।

पर्याप्तिश्च यद्रूपावच्छिन्नविषयकनिश्चयत्वावच्छिन्नभेदप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतिबन्धकतेत्यादिरीत्या विवक्षणीया । लक्षणन्तु तादृशतद्रूपवत्त्वस्वरूपमत्राभिप्रेतम् । रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । स्वम् प्रतिबन्धकत्वमिति ध्येयम् ।

संशयादौ सत्त्वात् पुनरसम्भव इति । नच जातिमान् वह्न्यभाववानितिज्ञानवारणायाव्यापकीभूतविषयिताशून्यत्वस्य ज्ञानविशेषणतया आवश्यकतया तत एव संशयमादायाऽसम्भववारणसम्भवे निश्चयत्वाऽप्रवेशे कथमसम्भवाभिधानं संगच्छते

* गादाधरी *

अनतिरिक्तवृत्तित्वं स्वव्यापकतत्कत्वम्

* चन्द्रकला *

वह्न्यभाववद्ह्रदादिनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वादित्याशयः।

ननु प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वं यदि प्रतिबन्धकतावत्तादृशनिश्चयवृत्तित्वं तदा वह्न्यभावाद्येकदेशेऽतिव्याप्तिर्दुर्वारा स्यात्, केवलवह्न्यभावत्वाद्यवच्छिन्नविषयकत्वस्यापि प्रकृतानुमितिप्रतिबन्धकतावद्वृत्तित्वादत आहानतिरिक्तेति। निरुक्तलक्षणे इत्यादिः। स्वव्यापकेति। स्वं यद्रूपावच्छिन्नविषयकत्वं तद्व्यापकं यत् प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तत्कत्वं स्वस्मिन् अनतिरिक्तवृत्तित्वमित्यर्थः। तथाच अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयकत्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमिति फलितम्। भवति हि ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वं अयं धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वादिकञ्च यद्रूपपदेनादाय वह्न्यभाववद्ह्रदरूपबाधादौ धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपव्यभिचारादौ च लक्षणसमन्वयः, तादृशबाधत्वव्यभिचारत्वाद्यवच्छिन्नविषयकत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वादिति भावः।

* कलाविलासः *

इति वाच्यम्, अप्रामाण्यज्ञानाभावानुपादान एवासम्भवस्याभिधानात् एकोक्तिसम्पादनार्थमेव संशयमादायाप्यसम्भवस्याभिहितत्वादिति वदन्ति।

अथाऽप्रामाण्यज्ञानादेर्नानात्वेन अनन्ततद्ग्रहाभावस्य विवक्षणीयतया गौरवमिति चेन्न, अभावविशिष्टान्यत्वस्य ज्ञानविशेषणत्वोपगमात्, वैशिष्ट्यं स्वप्रतियोगिमत्त्व-स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयितावत्त्वोभयसम्बन्धेन। स्वप्रतियोगिमत्त्वञ्चैकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन। तथाच संशयान्यत्वाहार्यान्यत्वादेरप्युक्तरीत्यैव प्रवेशाल्लाघवमिति भावः।

स्वव्यापकतत्कत्वमिति। ननु तादृशनिश्चयत्वव्यापकत्वनिवेशे गौरवात् लाघवात् यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमित्यवृत्ति तद्रूपवत्त्वमित्येवं कुतो न विवक्षितमिति चेन्न, पर्वतो वह्न्यभावव्याप्यवानित्यादौ वह्निमत्पर्वतेऽतिव्याप्त्यापत्तेः, वह्न्यभाववत्पर्वतविषयकवह्निमत्पर्वतविषयकसमूहालम्बनानुमितेरप्रसिद्धतया वह्निमत्पर्वतनिश्चयत्वस्य प्रकृतानुमित्यवृत्तित्वात्। नच तथापि यद्रूपावच्छि-

* गादाधरी *

नतु तच्छून्यावृत्तित्वम् , तादृशनिश्चयवृत्तित्वविशिष्टस्य विशिष्टविषयकत्वस्य विशेष्यीभूतविशिष्टविषयकत्वानतिरिक्ततया तस्यातिप्रसक्तत्वेन विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात् ।

* चन्द्रकला *

ननु प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य यथाश्रुतप्रतिबन्धकत्वाभाववदवृत्तित्वरूपार्थकतायाःप्रसिद्धतया तस्य तादृशार्थकत्वानभिधानमनुचितमित्यत आह नत्वित्यादि । प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्वावच्छिन्नाभाववदवृत्तित्वं यद्रूपावच्छिन्नविषयकत्वनिष्ठं तादृशानतिरिक्तवृत्तित्वं इति तु नेत्यर्थः। कुत इत्याकांक्षायामाह विशिष्टेति । वह्न्यभावादिविशिष्टह्रदादिविषयकत्वस्येत्यर्थः। विशेष्यीभूतेति । केवलह्रदादिविषयकत्वाऽभिन्नतयेत्यर्थः। तस्य = केवलह्रदादिविषयकत्वस्य । अतिप्रसक्तत्वेन = ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकत्वाभाववति ह्रद इत्याकारकज्ञाने वर्त्तमानत्वेन । विशिष्टे = वह्न्यभावादिविशिष्टह्रदादिविषयकत्वे । अनतिप्रसक्तत्वस्य = तादृशानुमितिप्रतिबन्धकत्वाभाववदवृत्तित्वस्य । दुर्घटत्वादिति । तथाच तादृशप्रतिबन्धकत्वाभाववदवृत्तित्वरूपानतिरिक्तवृत्तित्वविवक्षणे ह्रदो वह्निमानित्यादिस्थलीयबाधादौ सर्वत्राऽसम्भवः, वह्न्यभावविशिष्टह्रदविषयकत्वस्य ह्रदविषयकत्वाभिन्नतया अनुमितिप्रतिबन्धकताशून्ये ह्रद इत्याकारकज्ञाने वर्त्तमानस्य ह्रदमात्रविषयकत्वस्य अनुमितिप्रतिबन्धकत्वाभाववदवृत्तितया वह्न्यभावविशिष्टह्रदादिविषयकत्वे तादृशप्रतिबन्धकत्वाभाववदवृत्तित्वोपपादनस्याशक्यत्वात् विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमादित्याशयः ।

* कलाविलासः *

न्नविषयकनिश्चयत्वं प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्तिज्ञानावृत्ति तद्रूपवत्त्वमित्युक्तौ नेयमतिव्याप्तिः, वह्न्यभावव्याप्यप्रकारकबुद्धौ वह्निमत्पर्वतनिश्चयस्याप्रतिबन्धकतया निरुक्तनिश्चयत्वस्य तादृशानुमितिप्राक्क्षणवृत्तिज्ञानवृत्तित्वादिति वाच्यम्, तथा सति ह्रदो वह्निमान् जलवद्ध्रदकालीनद्रव्यत्वादित्यादौ वह्न्यभाववज्जलवत्यतिव्याप्त्यापत्तेः, जलवान् वह्न्यभाववानित्याकारकनिश्चयोत्तरं जलवद्ध्रदविषयकानाहार्यह्रदधर्मिकवह्न्यनुमितेरप्रसिद्धतया वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयितायाः प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्तिघटादिज्ञानाऽवृत्तित्वात् ।

ननु तथापि स्वव्यापकतत्कत्वनिवेशनमनर्थकम्, प्रकृतानुमितिप्रतिबन्धकत्वाभावो यद्रूपावच्छिन्नविषयकनिश्चयावृत्तिस्तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वादितिचेन्न,

❀ गादाधरी ❀

यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वम्, अतो नोक्तरीत्या असम्भव इति, तदसत्,

❀ चन्द्रकला ❀

निरुक्तरीत्या सम्भवतोऽसम्भवस्य वारणाय अन्यप्रकारेणानतिरिक्तवृत्तित्वमभिदधतां मतं दूषयितुमुपन्यस्यति यत्त्विति। एवञ्च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्वावच्छिन्नाभाववति अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयेऽवर्त्तमानं यद्रूपावच्छिन्नविषयकत्वं तद्रूपवत्वं हेत्वाभासत्वमिति निरुक्तमतसिद्धानतिरिक्तवृत्तित्वघटितं लक्षणं पर्यवसितम्। ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकत्वस्य ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकताशून्ये तादृशे घटादिनिश्चयेऽवर्त्तमानत्वाद् बाधादौ लक्षणसमन्वयः। ह्रदो वह्निमान्नवेत्याकारकसंशये ह्रदो वह्न्यभाववानिदं ज्ञानमप्रमेत्याकारकाप्रामाण्यज्ञानास्कन्दिते ह्रदो वह्न्यभाववानित्याकारकज्ञाने वह्निमान् ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञाने च प्रकृतानुमितिप्रतिबन्धकताशून्ये वह्न्यभावविशिष्टह्रदादिविषयकत्वस्य वृत्तित्वादसम्भवः स्यादतः प्रकृतानुमितिप्रतिबन्धकताशून्यत्वं अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानरूपतादृशनिश्चयविशेषणमुक्तम्। तथाच तादृशोदासीनघटादिनिश्चयमादायैव सर्वत्र लक्षणसमन्वयः स्वयमूहनीयः। नोक्तरीत्येत्यादि। विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमरीत्या नासम्भव इत्यर्थः।

❀ कलाविलासः ❀

अभावस्याधिकरणभेदेन भिन्नत्वमते पटनिष्ठप्रतिबन्धकत्वाभावस्य घटविषयकनिश्चयाऽवृत्तितया घटेऽतिव्याप्त्यापत्तेः। प्रकृतानुमितिप्रतिबन्धकत्वाभावत्वं यद्रूपावच्छिन्नविषयकनिश्चयवृत्तितानवच्छेदकं तद्रूपवत्त्वमित्युक्तौ घटादावतिव्याप्तिवारणेऽपि विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमेऽसम्भवापत्तेः। केवलाभावत्वे वह्न्यभावादिमद्ध्रदादिनिश्चयवृत्तितावच्छेदकत्वसत्त्वेन प्रतिबन्धकताविशिष्टाभावत्वे तादृशनिश्चयवृत्तितानवच्छेदकत्वस्य दुर्घटत्वात्, पर्याप्त्यादिनिवेशे च लाघवानवकाशात्।

यद्विषयकत्वेनेत्यत्र तृतीयायाः शून्यत्वमवृत्तित्वञ्चार्थः। शून्यत्वे प्रतिबन्धकत्वस्य, शून्यत्वस्य मूलोक्तज्ञानपदार्थे निश्चये, निश्चयस्याऽवृत्तित्वेऽन्वयात्,

❀ गादाधरी ❀

**तथासति मूलोक्तस्य ज्ञानस्येत्यस्य वैयर्थ्यप्रसंगाद्, ह्रदत्वाद्यवच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकयत्किञ्चिज्ज्ञानीयविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन**

❀ चन्द्रकला ❀

निरुक्तं मतं दूषयति तथासतीति । प्रतिबन्धकताशून्यतादृशनिश्चयाऽवृत्तित्वस्यानतिरिक्तवृत्तित्वस्वरूपत्वे सतीत्यर्थः । मूलोक्तेति । लिंगपदस्याविवक्षिततया यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वमितिमूलोक्तलक्षणघटकज्ञानस्येत्यर्थः । वैयर्थ्यप्रसंगादिति । ज्ञानस्येत्यनुक्तौ लक्ष्यतावच्छेदकीभूतयद्रूपावच्छिन्नविषयकत्वस्य संस्कारादिनिष्ठत्वेऽपि तस्यानुमितिप्रतिबन्धकताशून्यतादृशोदासीनघटादिनिश्चयाऽवृत्तितयैव सर्वत्र लक्षणसमन्वयसम्भवे यद्रूपावच्छिन्नविषयकत्वे ज्ञाननिष्ठत्वाभिधानं निरर्थकमितिज्ञानस्येत्यस्य व्यर्थताया ध्रौव्यादित्यर्थः ।

ननु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वरूपतृतीयार्थान्वयबोधे षष्ठ्यन्तज्ञानपदसमभिव्याहृततृतीयान्तयद्विषयकत्वज्ञानं हेतुरित्युक्तौ न ज्ञानस्येत्यस्य वैयर्थ्यम्, अन्यथा यद्विषयकत्वेनानुमितिप्रतिबन्धकत्वमित्यादितोऽपि तादृशनिश्चयावृत्तित्वरूपानतिरिक्तवृत्तित्वप्रत्ययः स्यादिति यदि ब्रूयात्तदाप्याह ह्रदत्वेति । ह्रदत्वावच्छिन्ना या वह्न्यभाववान् ह्रद इत्याकारकयत्किञ्चिज्ज्ञानीयविषयता सेत्यर्थः । तन्निरूपकत्वस्य = तादृशशुद्धह्रदत्वावच्छिन्नविषयतानिरूपकत्वस्य, ह्रदत्वावच्छिन्नविषयकत्वस्येति यावत् । प्रतिबन्धकतेति । ह्रदादिधर्मिकवह्न्याद्यनुमितीत्यादिः । ह्रद इत्याकारकनिश्चयेऽपि तादृशविलक्षणह्रदत्वावच्छिन्नविषयताकत्वस्यावर्त्तमानत्वात् । अत एव तादृशयत्किञ्चित्त्वं ज्ञानविशेषणमन्यथा ज्ञानसामान्यान्तर्गतह्रद इत्याकारकज्ञाननिरूपितह्रदत्वावच्छिन्नविषयतानिरूपकत्वस्य अनुमितिप्रतिबन्धकताशून्यह्रदमात्र-

❀ कलाविलासः ❀

**विशिष्टलाभान्न ज्ञानपदवैयर्थ्यमतो दूषणान्तरमाह ह्रदत्वाद्यवच्छिन्न इति ।**

**ननु तथापि अनुमितिप्रतिबन्धकताशून्यानाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपवत्त्वं दोषत्वमितिविवक्षया शुद्धह्रदत्वावच्छिन्नेऽतिव्याप्तिवारणसम्भवे स्वव्यापकतत्कत्वविवक्षणं व्यर्थमिति चेन्न, संयोगाभाववान् संयोगवानितिज्ञानस्य नियताहार्यतया अनाहार्यज्ञानवृत्तिविषयतानिरूपकतानवच्छेदकत्वस्य संयोगवत्संयोगाभाववत्त्वे सत्त्वेन तत्रातिव्याप्त्यापत्तेरिति ध्येयम् ।**

❀ गादाधरी ❀

शुद्धह्रदत्वाद्यवच्छिन्नेऽतिप्रसङ्गाच्च।

मन्मते चानुमितिप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयितात्वावच्छिन्नव्यापकताविरहेणातिप्रसङ्गानवकाशात्।

❀ चन्द्रकला ❀

विषयकज्ञानवृत्तित्वेन तत्र तादृशनिश्चयावृत्तित्वसम्पादनमसंगतं स्यादित्याशयेनाह शुद्धेति। केवले ह्रदत्वविशिष्टे ह्रदे इत्यर्थः। अतिप्रसंगाच्चेति। निरुक्तानतिरिक्तवृत्तित्वघटितस्य लक्षणार्थत्वे ह्रदो वह्निमान् धूमादित्यादौ केवलह्रदत्वावच्छिन्ने ह्रदेऽतिव्याप्तिः, वह्न्यभाववान्ह्रद इत्याकारकयत्किञ्चिज्ज्ञानीयह्रदत्वावच्छिन्नविषयताकत्वस्य प्रकृतानुमितिप्रतिबन्धकत्वाभाववति ह्रद इत्याकारकतादृशनिश्चयेऽप्यवृत्तित्वादतो नोक्तरूपेणानतिरिक्तवृत्तित्वं वक्तव्यमिति भावः।

नन्वेवमपि स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वघटितलक्षणेऽपि शुद्धह्रदत्वावच्छिन्नेऽतिव्याप्तिर्दुर्वारा स्यात्, वह्न्यभाववविशिष्टह्रदत्वावच्छिन्नविषयकयत्किञ्चिज्ज्ञानीयह्रदत्वावच्छिन्नविषयताकत्वस्य वन्ह्न्यभावविशिष्टह्रदनिश्चय एव वर्त्तमानतया तत्र ह्रदधर्मिकप्रकृतानुमितिप्रतिबन्धकत्वस्य सत्त्वात् यद्रूपपदेन शुद्धह्रदत्वस्य धर्त्तुं शक्यत्वादित्यत आह मन्मत इति। स्वव्यापकतत्कत्वरूपप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्ववादिनां मते इत्यर्थः। अनुमितीति। ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकेत्यादिः। तादृशेति अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्चयार्थकम्। अतिप्रसंगानवकाशादिति। तथाचास्मन्मतेऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दितनिश्च-

❀ कलाविलासः ❀

शुद्धह्रदत्वावच्छिन्नेऽतिप्रसंगाच्चेति। नन्वत्र कल्पे पक्षाऽघटितसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरूपाऽसाधारण्येऽव्याप्तिः, निरुक्ताऽसाधारण्यविषयिताया अनुमितिप्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वादिति चेन्न, पक्षधर्मिकहेतुमत्ताज्ञानकालीनानुमितिप्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वस्य विवक्षितत्वात्। तादृशासाधारण्यज्ञानं यदि पक्षधर्मिकहेतुमत्ताज्ञानकालीनं तदाऽनुमितिप्रतिबन्धकमेव भवतीत्यदोषः।

ननु जातित्वेन ह्रदत्वावगाहिजातिमान् वह्न्यभाववानितिज्ञानवारणाय जगदीशेनाव्यापकीभूतविषयिताशून्यत्वं न निवेशितम्, भट्टाचार्येण तु निवेशितमनयोः कोऽभिप्राय इति चेन्न? जगदीशमते यादृशसमुदायत्ववृत्तिनिरूपकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्टवत्त्वं लक्षणार्थः।

❀ गादाधरी ❀

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ह्रदत्वाद्यवच्छिन्नविषयकतया तस्य च ह्र-

❀ चन्द्रकला ❀

यद्वृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयकत्वत्वावच्छिन्नव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्यस्यैव लक्षणार्थतया न शुद्धह्रदेऽतिव्याप्तिः, ह्रदत्वावच्छिन्नविषयकत्वत्वावच्छिन्नस्य ह्रदमात्रविषयकेऽपि ज्ञाने सत्त्वेन तत्राऽनुमितिप्रतिबन्धकताया विरहात्, केवलह्रदत्वस्य यद्रूपानात्मकत्वादित्याशयः।

शंकते अथैवमपीति। निरुक्तानतिरिक्तवृत्तित्वविवक्षया शुद्धह्रदेऽतिव्याप्तिवारणेऽपीत्यर्थः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणेऽपीति वार्थः। जातित्वादिनेति। आदिना प्रमेयत्वादिपरिग्रहः। तेन यत्राकाशत्वादौ जातित्वाऽप्रसिद्धिस्तत्र तादृशधर्मावच्छिन्नपक्षकरूपादिसाध्यकस्थले लक्षणसमन्वयसम्भवात् कथमसम्भव इति पूर्वपक्षोऽपि निरस्तः।

❀ कलाविलासः ❀

एवञ्च वह्न्यभावविशिष्टह्रदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयिताया जातिमान् वह्न्यभाववानितिज्ञाने विरहान्न तन्मतेऽसम्भवः। भट्टाचार्यमते च यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तीत्यादिरीत्या लक्षणार्थस्य निर्वाच्यतया जातिमान् वह्न्यभाववानितिज्ञाने जातित्वस्याधिकस्य भानेऽपि वह्न्यभाववद्ध्रदत्वस्य निरूपकतावच्छेदकघटकतया वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकताकविषयितायाः तत्र सत्त्वादसम्भवसंगतिः। नच भट्टाचार्येणापि यादृशसमुदायत्ववृत्तिनिरूपकताकविषयित्वं इत्येवं कथं न निवेशितमिति वाच्यम्? यादृशस्थले घटवद् भूतलमितिज्ञानं वह्न्यभाववद्ध्रद इतिज्ञानात्मकमेव जायते यदा च वह्न्यभाववान् ह्रद इतिज्ञानानात्मकं तदा घटत्वांशे नियमतः जातित्वावगाह्येव भवति, तत्र घटवद्भूतलेऽतिव्याप्तिः, जगदीशमते तु एतादृशाङ्कुरे प्रमाणाभावात् न कोऽपि दोषः।

जातित्वादिना ह्रदत्वादीति। ननु ह्रदत्वसामानाधिकरण्येन वह्निसाध्यकस्थले ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदरूपबाधे लक्षणसमन्वयात् कथमसम्भवः? भट्टाचार्यमते एकदेशव्यापकताया अनभ्युपगमेन जातिमान् वह्न्यभाववानितिज्ञाने ह्रदत्वव्यापकताया अभानात्। नच अभावत्वांशे प्रमेयत्वावगाहिह्रदो वह्नीयप्रमेयवत्त्वानितिज्ञानमादायाऽसम्भवसंगतिरिति वाच्यम्,

॥ गादाधरी ॥

दो वह्निमानित्याद्यनुमित्यविरोधित्वादसम्भवः। जलवान् वह्निमानित्यादिस्थलीयदोषासंग्रहेण

॥ चन्द्रकला ॥

असम्भव इति। तथाच जातित्वादिना ह्रदत्वावगाहिनि जातिमान् वह्न्यभाववानित्याकारकज्ञानेऽपि अधिकन्त्वित्यादिन्यायेन लक्ष्यतावच्छेदकवह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्वस्यावश्यकतया तादृशज्ञाने च ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकत्वविरहे प्रकृतानुमितिप्रतिबन्धकताया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्वाऽव्यापकत्वात् तादृशह्रदत्वस्य यद्रूपपदेनोपादानाऽसम्भवात्।

एवं धूमवान् वह्नेरित्यादावपि जातित्वादिना वह्नित्वावगाहिजातिमान् धूमाभाववद्वृत्तिरित्याकारकज्ञानेऽपि धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नविषयकत्वस्याक्षततया तादृशज्ञानमादायैव व्यभिचारादौ लक्षणसमन्वयाऽसम्भवात् भवत्यसम्भवः इति भावः। स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणे ह्रदत्वनिष्ठजातित्वावच्छिन्नविषयतायास्तथात्वाभावेनाऽसम्भववारणसम्भवेऽपि पूर्वोक्तरीत्या पुनर्बाधाद्येकदेशेऽतिव्याप्तिवारणमशक्यं स्यादित्यवधेयम्।

ननु लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपावच्छिन्नविषयकनिश्चये पक्षतावच्छेदकांशेऽन्याप्रकारकत्वं विवक्षणीयं तच्चेदानीं पक्षतावच्छेदकनिष्ठविषयतानिरूपितकिञ्चिन्निष्ठप्रकारत्वाऽनिरूपकत्वम्, तथाच नाऽसम्भवः, वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्ववत्यपि जातित्वादिना ह्रदत्वावगाहिनि जातिमान् वह्न्यभाववानित्याकारकज्ञाने ह्रदत्वरूपपक्षतावच्छेदकनिष्ठविषयतानिरूपिततादृशजातित्वनिष्ठप्रकारतानिरूपकत्वस्यैव सत्त्वेन तादृशप्रकारत्वाऽनिरूपकत्वस्य तत्र विरहात् तादृशयद्रूपावच्छिन्नविषयकनिश्चयपदेन तादृशाधिकावगाहिज्ञानस्य धर्त्तुमशक्यत्वादित्याह जलवानिति। जलवान्

॥ कलाविलासः ॥

व्यापकतावच्छेदकरूपभेदेन व्यापकताया भिन्नत्वात् वह्न्यभावत्वावच्छिन्नह्रदत्वव्यापकताघटितनिरुक्तबाधविषयितायास्तादृशज्ञानेऽसत्त्वादिति चेन्न, स्वरूपत्वांशे प्रमेयत्वावगाहिह्रदः ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकप्रमेयवता वह्न्यभाववानितिज्ञानमादायासम्भवसम्भवात्।

केचित्तु अवच्छेदावच्छेदेन विशिष्टबुद्धौ उद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मनिरूपितव्यापकत्वमेव संसर्गांशे भासते नतु उद्देश्यतावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वमिति जातित्वेन ह्रदत्वस्यैवोद्देश्यतावच्छेदकतया ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपेण वह्न्यभाववान् जातिमान् इतिज्ञानमादायैवाऽसम्भवसम्भव इत्यप्याहुः।

❀ गादाधरी ❀

अविशेषितधर्मावच्छिन्नपक्षकादिस्थलीयस्य किञ्चिद्विशिष्टतद्घटित-स्यातरयासंग्रहेण च

❀ चन्द्रकला ❀

वह्निमानित्यादिस्थलीयो यो वह्न्यभावविशिष्टजलवद्रूपो बाधात्मको दोषस्तस्याऽसंग्रहे-णेत्यर्थः। पक्षतावच्छेदकनिष्ठविषयतानिरूपितकिञ्चिन्निष्ठप्रकारत्वाऽनिरूपकत्वरूपपक्ष-तावच्छेदकांशेऽन्याऽप्रकारकत्वस्य यद्रूपावच्छिन्नविषयकनिश्चये विवक्षणे निरुक्तरी-त्याऽसम्भववारणसम्भवेऽपि जलवान् वह्निमानित्यादौ वह्न्यभावविशिष्टजलवद्रूपबाधे-ऽव्याप्तिः, जलवान् वह्न्यभाववानित्याकारके वह्न्यभाववज्जलवत्त्वरूपयद्रूपावच्छिन्न-विषयकनिश्चये पक्षतावच्छेदकजलनिष्ठविषयतानिरूपिततादृशजलत्वनिष्ठप्रकारतानिरू-पकत्वस्यैव सत्त्वेन तादृशप्रकारत्वाऽनिरूपकत्वविरहात् तादृशबाधत्वस्य यद्रूपाना-त्मकत्वादिति तु समुदितग्रन्थतात्पर्यम्।

ननु पक्षतावच्छेदकांशेऽन्याऽप्रकारकत्वं न पक्षतावच्छेदकनिष्ठविषयतानिरूपित-किञ्चिन्निष्ठप्रकारत्वाऽनिरूपकत्वम् अपितु पक्षतावच्छेदकनिष्ठविषयतानिरूपिता या अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववन्निष्ठसामानाधिक-रण्यसम्बन्धानवच्छिन्ना प्रकारता तदनिरूपकत्वम्, तस्यैव यद्रूपावच्छिन्नविषयक-निश्चयविशेषणत्वोपगमान्न निरुक्ताव्याप्तिः, जलनिष्ठपक्षतावच्छेदकताया अवच्छेद-कत्वसम्बन्धेन जलत्व एव वर्त्तमानतया तेन सम्बन्धेन तदभावस्य द्रव्यत्वप्रमेयत्वादौ सत्त्वेन तन्निष्ठप्रकारत्वाऽनिरूपकत्वस्य जलवान् वह्न्यभाववानित्याकारकनिश्चयेऽक्षत-त्वात्। नवा जातित्वादिना ह्रदत्वावगाहिज्ञानमादायाऽसम्भवः ? ह्रदो वह्निमानि-त्यादौ ह्रदत्वादेः स्वरूपत एव पक्षतावच्छेदकतया अवच्छेदकत्वसम्बन्धस्य तन्निष्ठ-पक्षतावच्छेदकताया व्यधिकरणसंसर्गत्वेन तेन सम्बन्धेन ह्रदत्वनिष्ठपक्षतावच्छेदक-त्वाभावस्य सर्वत्र वर्त्तमानस्य जातित्वादावपि वर्त्तमानताया आवश्यकत्वात् तादृश-जातित्वादिनिष्ठप्रकारत्वानिरूपकत्वस्य जातिमान् वह्न्यभाववानित्याकारकज्ञाने विर-हात् लक्ष्यीभूतविशिष्टनिश्चयमादायैव सर्वत्र लक्षणसमन्वयसम्भवात्। ह्रदो वह्न्य-भाववानित्याकारकज्ञाने पारतन्त्र्येण वह्न्यभावस्यापि सामानाधिकरण्यसम्बन्धेन ह्रद-त्वादौ प्रकारत्वाभ्युपगमे पुनरसम्भवतादवस्थ्यं स्यादतस्तादृशाभाववन्निष्ठप्रकारतायां सामानाधिकरण्यसम्बन्धानवच्छिन्नत्वनिवेश इति ध्येयम्।

शेषमशेषमन्यत्र वक्ष्याम इत्युक्तावपि न निस्तार इत्याह अविशेषितेति। निरवच्छिन्नपक्षतावच्छेदकताश्रयधर्मावच्छिन्नपक्षकस्थलीयस्यापीत्यर्थः। किञ्चिद्-विशिष्टेति। किञ्चिद्धर्मविशिष्टपक्षतावच्छेदकघटितदोषस्यासंग्रहेण चेत्यर्थः। तथा-

* गादाधरी *

पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वादिनिवेशस्याशक्यत्वात्,

* चन्द्रकला *

चोक्तरीत्याऽपि पक्षतावच्छेदकांशेऽन्याऽप्रकारकत्वविवक्षणे असम्भवादिवारणेऽपि ह्रदो वह्निमान् ह्रदत्वादित्यादौ वह्न्यभाववद्वृत्तित्वविशिष्टह्रदत्वरूपव्यभिचारेऽव्याप्तिः, अवच्छेदकत्वरूपव्यधिकरणसम्बन्धेन ह्रदत्वनिष्ठपक्षतावच्छेदकत्वाऽभावस्य ह्रदत्वत्वादौ सत्त्वेन तादृशह्रदत्वत्वादिनिष्ठप्रकारत्वाऽनिरूपकत्वस्य तादृशव्यभिचारनिश्चये विरहात्। व्याप्तिग्रहप्रतिबन्धकत्वानुरोधेन निरुक्तव्यभिचारनिश्चये ह्रदत्वत्वादेः प्रकारतया भानस्यावश्यकत्वादिति पक्षतावच्छेदकांशे ऽन्याऽप्रकारकत्वनिवेशनं कथमपि न सम्भवतीति तात्पर्यम्।

केचित्तु निरुक्तरीत्या पक्षतावच्छेदकांशेऽन्याऽप्रकारकत्वविवक्षणे ह्रदो जात्यभाववानित्यादौ जातिमद्ध्रदरूपबाध एवाव्याप्तिः, निरुक्तबाधनिश्चये जातित्वस्यापि ह्रदत्वांशे प्रकारत्वाभ्युपगमात् तादृशप्रकारत्वानिरूपकत्वस्य यथोक्तबाधनिश्चये विरहादित्येवमविशेषितेत्यादेस्तात्पर्यमित्याहुः, तच्चिन्त्यम्, निरुक्तबाधनिश्चये ह्रदत्वांशे जातित्वादेः प्रकारताया अप्रामाणिकत्वादिति ध्येयम्।

नन्वेवमपि नाऽसम्भवः, यादृशविशिष्टे लक्षणं संगमनीयं तादृशविशिष्टघटकीभूता यावन्तः पदार्थाः तत्तत्प्रत्येकभेदकूटवन्तो ये ये पदार्थाः तत्तत्पदार्थविषयकत्वाभावकूटवत्त्वस्य यद्रूपावच्छिन्नविषयकनिश्चये विशेषणत्वोपगमात् वह्न्यभाव-

* कलाविलासः *

पक्षतावच्छेदकाद्यंश इति। अत्र यदि पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपिता अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववन्निष्ठा या प्रकारता तदनिरूपकत्वमेव पक्षतावच्छेदकांशेऽन्याप्रकारकत्वं तदा ह्रदो वह्न्यभाववानितिज्ञानेऽपि सामानाधिकरण्यसम्बन्धेन धर्मिपारतन्त्र्येण वह्न्यभावस्य ह्रदत्वे प्रकारतया असम्भवापत्तेरिति न शंक्यम्। विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वमेव पक्षतावच्छेदकांशेऽन्याप्रकारकत्वम्, वैशिष्ट्यं स्वनिरूपितत्व—स्वावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वोभयसम्बन्धेन, जातिमान् वह्न्यभाववानितिज्ञानीयजातित्वनिष्ठप्रकारतैव तादृशविशेष्यताविशिष्टा, ह्रदत्वनिष्ठविशेष्यताया एव स्वपदेनोपादातुं शक्यत्वात्। विशेष्यताविशिष्टप्रकारतायाञ्च अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववन्निष्ठत्वमपि विशेषणं देयमित्यग्रे व्यक्तीभविष्यति।

❋ गादाधरी ❋

तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञानविशेषणत्वोपगमे सर्वमाकाशवदित्यादिस्थलीयबाधादौ तद्घटकाप्रसिद्ध्या अव्याप्तिः।

❋ चन्द्रकला ❋

विशिष्टह्रदरूपविशिष्टघटका ये ह्रद-ह्रदत्व-वह्नि-वह्नित्व-भावाभावत्वादयः तेषां प्रत्येकपदार्थभेदकूटवत्त्वस्य जातित्वे सत्त्वेन तादृशजातित्वपदार्थाऽविषयकत्वस्य जातिमान् वह्न्यभाववानित्याकारकज्ञाने विरहात्, वह्न्यभावविशिष्टह्रदनिश्चयस्यैव तादृशजातित्वादिपदार्थाऽविषयकतया तत्रानुमितिप्रतिबन्धकत्वानपायात्। विशिष्टघटकयत्किञ्चित्पदार्थभेदस्य तद्घटकपदार्थान्तरे सत्त्वात् तादृशपदार्थान्तराविषयकत्वस्य लक्ष्यीभूतविशिष्टविषयकनिश्चयेऽपि दुर्घटतयाऽसम्भवतादवस्थ्यमतो भेदकूटनिवेशः। तथाच विशिष्टघटकतत्तत्पदार्थभेदकूटवत्त्वस्य विशिष्टघटकपदार्थेऽसम्भवान्नाऽसम्भवः। वह्न्यभावविशिष्टह्रदरूपविशिष्टाऽघटकयत्किञ्चिज्जातित्वाऽविषयकत्वस्य प्रमेयत्वेन ह्रदत्वावगाहिनि प्रमेयवान्वह्न्यभाववान् इत्याकारकज्ञाने वर्त्तमानतया तत्राऽनुमितिप्रतिबन्धकताविरहेणाऽसम्भवतादवस्थ्यं स्यादतस्तादृशाघटकयावत्पदार्थविषयकत्वाभावकूटनिवेशः। तथाच तादृशयावदन्तर्गतप्रमेयत्वाविषयकत्वस्य प्रमेयवान् वह्न्यभाववानित्याकारकज्ञाने विरहान्नाऽसम्भव इत्याह तादृशेति। यादृशविशिष्टे लक्षणं संगमनीयं तादृशेत्यर्थकम्। ज्ञानविशेषणत्वोपगमे = यद्रूपावच्छिन्नविषयकनिश्चयविशेषणत्वे। सर्वमिति। सर्वमाकाशवदित्यादिस्थलीयाऽकाशाभाववत्सर्वरूपबाधादावित्यर्थः। आदिना आकाशाभावव्याप्यवत्सर्वरूपसत्प्रतिपक्षपरिग्रहः। तद्घटकेति। तादृशबाधघटकभिन्नत्वस्याऽप्रसिद्ध्येत्यर्थः। सर्वस्यैव वस्तुनो बाधघटकत्वादित्याशयः। अव्याप्तिरिति। पूर्वोक्तरूपेण विशिष्टाघटकत्वविवक्षणे

❋ कलाविलासः ❋

तादृशविशिष्टाघटकेति। तथाचानुगमः—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्त्वं हेत्वाभासत्वम्, वृत्तित्वञ्च स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन। स्ववैशिष्ट्यञ्च निश्चये स्वावच्छिन्नविषयितावत्त्व-स्वावच्छिन्नविषयिताव्यापकविषयिताकान्यनिरूपितविषयिताशून्यत्वोभयसम्बन्धेनेति ध्येयम्।

प्रकारविधयाऽनुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिव्यापकतारूपाभावीयावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपिता या स्वव्यापकविषयिताकान्यनिरूपितविषयित्वाभाववत्त्व-स्वरूपोभयसम्बन्धावच्छिन्नविषयितानिष्ठावच्छेदकता तन्निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मवत्त्वं हेत्वाभासत्वमिति।

* गादाधरी *

यद्यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तत्तद्रूपावच्छिन्न-तत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम् ।

* चन्द्रकला *

जातित्वादिना ह्रदत्वावगाहिज्ञानवारणेऽपि सर्वमाकाशवदित्यादौ आकाशाभाववत्स-र्वरूपबाधादावव्याप्तिः, तादृशबाधघटकसर्वपदार्थभिन्नत्वस्याऽप्रसिद्ध्या विशिष्टा-घटकस्याऽप्रसिद्धेरितिभावः । निरुक्ताऽव्याप्तेः पूर्वोक्ताऽसम्भवस्य च वारणाय पुनः शंकते यद्‌यद्रूपेति । यस्य यस्य = पदार्थस्य । यादृशेति । लक्ष्यत्वेनाभिमतेत्यादिः ।

तत्तद्रूपेति । निरवच्छिन्नह्रदत्वादिनिष्ठविषयतायाः तत्तद्रूपावच्छिन्नविषयता-भिन्नतया तच्छून्यत्वस्य वह्न्यभावविशिष्टह्रदनिश्चये विरहात् बाधादौ लक्षणसमन्वया-सम्भवात् तत्तद्रूपावच्छिन्नविषयताभिन्नविषयतायां किञ्चिदवच्छिन्नत्वनिवेश इत्यव-धेयम् । ज्ञाने = यद्रूपावच्छिन्नविषयकनिश्चये । निवेश्यमिति । तथाच न सर्वमाका-शवदित्यादौ आकाशाभावविशिष्टसर्वरूपबाधादावव्याप्तिः, निरुक्तबाधादिघटकतावच्छे-दकसर्वत्वाद्यवच्छिन्नविषयताभिन्ना या घटत्वादिरूपकिञ्चिद्धर्मावच्छिन्ना विषयता तच्छू-न्यत्वस्य तादृशबाधादिनिश्चये सत्त्वादिति हृदयम् ।

* कलाविलासः *

यद्‌यद्रूपावच्छिन्नस्येति । ननु यद्‌यद्रूपावच्छिन्नस्य यस्य यस्य यादृश-विशिष्टाघटकत्वं तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताशून्यत्वमेव लाघवाद् ज्ञाने निवेश्यं किं तद्विषयिताव्यापकविषयिताकत्वरूपघटकत्वनिवेशेनेति चेन्न ? घटक-संख्यापेक्षया अघटकसंख्याया आधिक्येन भेदकूटगौरवादिति ध्येयम् ।

निरुक्तकल्पस्यानुगमस्तु प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकतावृत्तिरूपवत्त्वं हेत्वाभासत्वम् । प्रतिबन्धकतावृत्तित्वञ्च रूपे स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, स्ववैशिष्ट्यं निश्चये स्वावच्छि-न्नविषयितावत्त्व-स्वावच्छिन्नविषयिताव्यापकविषयितानिरूपकतावच्छेदकरूपविशिष्टा-न्यकिञ्चिदवच्छिन्नविषयिताशून्यत्वोभयसम्बन्धेन, तादृशरूपवैशिष्ट्यञ्च स्वावच्छि-न्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन । यद्‌यद्रूपावच्छिन्नस्येत्यनुक्तौ सर्वमाकाशव-दित्यादिस्थलीयबाधादावव्याप्तिः, सर्वस्यापि विशिष्टघटकत्वात् । यस्य यस्येत्यनुक्तौ ह्रदः प्रमेयवह्निमानित्यादौ गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वे प्रमेयवह्न्यभाव-विशिष्टह्रदरूपबाधेऽव्याप्तिः, प्रमेयत्वेन ह्रदत्वावगाहिज्ञानेऽपि निरुक्तविषयिताशून्य-त्वस्यानपायादतो यस्य यस्येत्युक्तम् ।

### * गादाधरी *

जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्न वह्न्यभाववद्ह्रदत्वावच्छिन्नात्मक-दोषघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादिविषयता तादृशविषयताभिन्नैव, तच्छून्यत्वञ्च नोक्तज्ञानस्येति न दोषः, इत्यपि न सत्? तथासति ह्रदो जात्यभाववानित्यादिस्थलीयबाधादेरेव दुःसंग्रहत्वात्। जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो जातिमान् जातिमानित्यादिज्ञानस्य जातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयताया निरुक्त-विषयताभिन्नत्वविरहेण तादृशज्ञानस्यानुमित्यप्रतिबन्धकस्य शून्यत्वान्ते-नावारणात्। मैवम्,

### * चन्द्रकला *

जातित्वादिना ह्रदत्वावगाहि ज्ञानमादाय पूर्वोक्ताऽसम्भवं वारयति जातित्वेति। जातित्वविशिष्टस्य चेत्यर्थः। तादृशेति। वह्न्यभावविशिष्टह्रदरूपविशिष्टघटकता-वच्छेदकधर्मावच्छिन्नविषयताभिन्नैवेत्यर्थः। तच्छून्यत्वम् = जातित्वावच्छिन्नविषयता-शून्यत्वम्। नोक्तज्ञानस्य=जातिमान् वह्न्यभाववानित्याकारकज्ञानस्य। तथाच वह्न्य-भावविशिष्टह्रदरूपविशिष्टदोषघटकतावच्छेदकह्रदत्वाद्यवच्छिन्नविषयताभिन्ना या जा-तित्वावच्छिन्ना विषयता तच्छून्यताया जातिमान् वह्न्यभाववानितिज्ञानेऽसत्त्वात् अनु-मितिप्रतिबन्धकतावति वह्न्यभावविशिष्टह्रदरूपबाधनिश्चय एव तच्छून्यताया वर्त्तमान-तया सर्वत्र लक्षणसमन्वयसम्भवान्नाऽसम्भव इति समुदितग्रन्थतात्पर्यमधिकमन्यत्रानु-सन्धेयम्।

समाधानमाह तथा सतीति। निरुक्तरीत्या तादृशकिञ्चिदवच्छिन्नविषयताशून्य-त्वस्य तादृशनिश्चयविशेषणत्वोपगमे सतीत्यर्थः। निरुक्तविवक्षयापि ह्रदो जात्यभाववा-नित्यादौ जातिमद्ह्रदरूपबाधादावव्याप्तिः,जातित्वादिना ह्रदत्वावगहिजातिमान्जाति-मानित्याकारकज्ञानीयजातित्वावच्छिन्नह्रदत्वविषयतायां तादृशजातिविशिष्टह्रदात्मकबा-धघटकतावच्छेदकजातित्वावच्छिन्नविषयताभिन्नत्वविरहेण तादृशविषयताभिन्नघटत्वा-द्यवच्छिन्नविषयताशून्यत्वस्य जातिमान् ह्रद इत्याकारकनिश्चये इव जातिमान्जातिमा-नित्याकारकनिश्चयेऽपि वर्त्तमानतया तत्रच ह्रदधर्मिकजात्यभावानुमितिप्रतिबन्धकताया असत्त्वादित्याह शून्यत्वान्तेनावारणादित्यन्तेन। निरुक्तेति जातिमद्ह्रदरूपबाधघटक-तावच्छेदकधर्मावच्छिन्नार्थकम्। तादृशज्ञानस्य=जातित्वादिना ह्रदत्वावगाहिजाति-मान्जातिमानितिज्ञानस्य।

अथैवमपीत्यादेरुत्तरं मैवमिति। तथाच यद्रूपावच्छिन्नविषयितात्वं यादृशविशिष्टे

* गादाधरी *

यद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञानविशेषणतया सामञ्जस्यात् ।

* चन्द्रकला *

लक्षणं संगमनीयम् तादृशविशिष्टविषयकनिश्चयत्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमिति लक्षणार्थः पर्यवसितः ।

एवञ्च न ह्रदो वह्निमानित्यादिस्थलीयबाधादौ जातित्वादिना ह्रदत्वावगाहि जातिमान् वह्न्यभाववानित्याकारकज्ञानमादायाऽसम्भवः, तादृशबाधादिविषयकनिश्चये जातित्वावच्छिन्नह्रदत्वनिरूपितविषयितासामान्याभावस्य वर्त्तमानतया तत्प्रतियोगितावच्छेदकजातित्वावच्छिन्नविषयितात्वावच्छिन्नशून्यत्वस्य जातिमान् वह्न्यभाववानितिज्ञाने विरहात् तस्य च ह्रदो वह्न्यभाववानितिज्ञान एव सत्त्वात् । नवा ह्रदो जात्यभाववानित्यादिस्थलीयबाधादावव्याप्तिः, तादृशजातिमद्ध्रदरूपबाधनिश्चये जातित्वावच्छिन्नह्रदत्वविषयित्वाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकजातित्वावच्छिन्नह्रदत्वविषयितात्वावच्छिन्नशून्यताया जातिमान् जातिमानित्याकारकजातित्वादिना ह्रदत्वावगाहिज्ञाने विरहादिति तात्पर्यम् । ज्ञानविशेषणतया = यद्रूपावच्छिन्नविष-

* कलाविलासः *

यद्रूपावच्छिन्नविषयितात्वमिति । ननूक्तरीत्याऽव्यापकीभूतविषयिताशून्यत्वविवक्षणेऽपि अभावत्वेन ह्रदत्वावगाहि-अभाववान् वह्न्यभाववानितिज्ञानमादाय पुनरसम्भवः, निरुक्तज्ञानेऽपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः सत्त्वात्, इतिचेदत्र नव्याः, यादृशविशिष्टविषयकनिश्चये अव्यापकीभूतविषयिताशून्यत्वमिव यद्यद्रूपावच्छिन्नस्य यस्य यस्य विशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयिताभिन्नकिञ्चिदवच्छिन्नविषयिताशून्यत्वमपि तादृशनिश्चये विशेषणं देयम्, एवञ्चाभावत्वावच्छिन्नह्रदत्वविषयितायास्तादृशविषयिताभिन्नतया तच्छून्यत्वस्याभाववान् वह्न्यभाववानितिज्ञाने विरहान्नाऽसम्भवः ।

नचैवं जातिमान् वह्निमानित्यत्र वह्न्यभाववज्जातिमद्रूपबाधेऽव्याप्तिः प्रत्येकं जातिविषयितायाश्चालनीन्यायेन तादृशविशिष्टविषयित्वाऽव्यापकत्वादितिवाच्यम्, यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्त्यवच्छेदकतानिरूपकताकविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्त्यवच्छेदकताकनिरूपकताकविषयिताशून्यत्वस्य तादृश-

* दीधितिः *

## तेन विशिष्टस्याऽसत्त्वेऽपि

* गादाधरी *

अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटित-तत्तद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयिता-समानाधिकरणत्वात् तज्ज्ञानस्याव्यावृत्तिरिति ।

विशिष्टस्य = विशिष्टविषयकत्वस्य, असत्त्वेऽपि = वह्न्यभाववत्त्वादिना घटाद्यवगाहिभ्रमेऽसत्त्वेपि । तथाच विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः ।

* चन्द्रकला *

यकनिश्चयविशेषणतया । सामञ्जस्यमेव निर्वक्ति अप्रतिबन्धकेति । प्रकृतानुमित्य-प्रतिबन्धकं यत् जातिमान्वह्न्यभाववानित्यादिज्ञानं तद्विषयतावच्छेदकीभूतञ्च यत् जातित्वविशिष्टह्रदत्वादिनिरूपितजातित्वावच्छिन्नह्रदत्वविषयितात्वं तदवच्छिन्नाभाव-स्येत्यर्थः । दोषात्मकेति । वह्न्यभावविशिष्टह्रदरूपबाधविषयकत्वसमानाधिकरणत्वा-दित्यर्थः । तथा च क्वाऽसम्भव इति भावः ।

तज्ज्ञानेति । अप्रतिबन्धकीभूतजातित्वादिना ह्रदत्वाद्यवगाहिज्ञानवारण-मित्यर्थः । अत्र च यद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभावो यादृशविशिष्टविषयक-त्वसमानाधिकरणस्तद्रूपावच्छिन्नविषयिताशून्यत्वस्य ज्ञानविशेषणत्वं लाघवात् कथं नोक्तमिति तु सुधीभिर्विभावनीयमित्यास्तां विस्तरः ।

विशिष्टविषयकत्वेन प्रतिबन्धकत्वं न सम्भवतीति सूचयितुं भावमाह तथाचेति ।

* कलाविलासः *

निश्चयविशेषणत्वोपगमात्, तादृशविषयिताशून्यत्वस्य निरुक्तबाधे सत्त्वादित्याहुः ।

अथ यद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता-वच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयि-ताशून्यत्वमेव तादृशनिश्चये निवेश्यतां किं विशिष्टद्वयाऽघटितत्व-विशिष्टान्तराऽघटित-त्वनिवेशेन ? वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नज्ञान-वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकवह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वाव-च्छिन्नविषयित्वाऽव्यापकत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविष-यितायां सत्त्वात् ।

एवं मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदक-शुद्धव्यभिचारत्वावच्छिन्नविषयित्वाऽव्यापकत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्न-विषयितायां सत्त्वात् ।

❀ दीधितिः ❀

भ्रमात्प्रतिबन्धेऽपि न क्षतिः ।

❀ गादाधरी ❀

भ्रमात्प्रतिबन्धेऽपि = तादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि, न क्षतिः=नोक्तयुक्त्या पर्य्याप्तिनिवेशेऽसम्भवस्तदनिवेशे पूर्वोक्तातिप्रसङ्गो वा ।

❀ चन्द्रकला ❀

तादृशभ्रमस्य=पर्वतादौ वह्न्याद्यभावप्रकारकभ्रमस्य । नोक्तयुक्त्येत्यादि । निरूप्यनिरूपकभावापन्नविषयताया एव स्वरूपसम्बन्धरूपावच्छेदकत्वव्यवस्थापनरूपयुक्त्या नाऽसम्भवः, पर्याप्त्यनिवेशे च बाधाद्येकदेशादौ नाऽतिप्रसंगो वेतिसमुदितग्रन्थार्थःपर्यवसितः । स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वघटितलक्षणस्य वक्ष्यमाणाऽतिव्याप्त्या दूषणीयत्वेऽप्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितलक्षणेऽपि वक्ष्यमाणविशिष्टविशेषेऽतिव्याप्तिवारणं दुःशक्यं स्यात् यदि विशिष्टद्वयाऽघटितत्वनिवेशो न स्यादितिविशिष्टद्वयाऽघटितत्वनिवेशसूचनाय प्रथमतः स्वरूपसम्बन्धरूपा-

❀ कलाविलासः ❀

एवमनयैव रीत्याऽनुगतरूपेण प्रतिबन्धकतायां यत्किञ्चित्त्वादिकं निवेश्य अन्यान्यदोषा अपि वारणीयाः । मैवम् , सर्वमाकाशवदित्यादौ आकाशाभाववत्सर्वरूपबाधेऽव्याप्त्यापत्तेः, सर्वत्वावच्छेदेन आकाशानुमितिं प्रति आकाशाभाववद्घटादिनिश्चयस्यापि प्रतिबन्धकतया आकाशाभाववत्सर्वत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकाकाशाभाववद्घटत्वावच्छिन्नविषयित्वाऽव्यापकत्वस्य तादृशसर्वत्वावच्छिन्नविषयितायामक्षतत्वादिति तु विभावनीयम् ।

यद्रूपावच्छिन्नविषयितात्वमित्यनभिधाय यन्निरूपितविषयितात्वमित्युक्तौ सर्वमाकाशवदित्यादौ आकाशाभाववत्सर्वरूपबाधेऽव्याप्तिः, घटादिनिरूपितविषयिताया अपि आकाशाभाववत्सर्वविषयकत्वसमानाधिकरणतया तदभावस्य तादृशबाधज्ञाने विरहेण यन्निरूपितविषयितात्वस्य तादृशबाधविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाप्रसिद्धेरतो यद्रूपावच्छिन्नविषयितात्वमित्युक्तम् । तथाच घटत्वावच्छिन्नविषयितासामान्याभावस्य तादृशबाधज्ञाने सत्वान्नाव्याप्तिरिति भावः ।

यद्रूपावच्छिन्नविषयिता यादृशविशिष्टविषयकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिकेत्युक्तौ प्रतियोगित्वेन धर्मिणः प्रवेशनीयतया गौरवं स्यादतस्तादृशाभावप्रतियोगितावच्छेदकत्वं यद्रूपावच्छिन्नविषयितात्वेऽभिहितमिति ध्येयम् ।

अव्यापकीभूतविषयिताशून्यत्वसहितलक्षणानुगमस्तु प्रकृतानुमितित्वव्यापक-

❀ गादाधरी ❀

ननु विशिष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि यादृशविशिष्टविषयतासामान्यस्य तादृशावच्छेदकत्वविवक्षया अतिप्रसङ्गवारणसम्भवात् तदेव कथं न विवक्षितमिति ।

❀ चन्द्रकला ❀

वच्छेदकत्वनिवेशसमर्थनाय शंकते नन्विति ।

विशिष्टेति । वह्न्यभावविशिष्टह्रदरूपबाधात्मकदोषघटकीभूतो यो वह्न्यभावाद्येकदेशस्तन्निष्ठविषयतायामित्यर्थः । स्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षणे पूर्वोक्तयुक्त्या ह्रदो वह्निमानित्यादौ बाधाद्येकदेशे वह्न्यभावादावतिव्याप्तिं पूर्वोक्तां वारयति विशिष्टेति । तथाच यद्रूपावच्छिन्नविषयतात्वव्यापकं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमित्युक्तौ न बाधाद्येकदेशादावतिव्याप्तिः, तादृशैकदेशाद्यात्मकवह्न्यभावत्वावच्छिन्नविषयतात्वस्य वह्न्यभाव इत्याकारकज्ञानीयवह्न्यभावविषयतायामपि सत्त्वेन तत्र ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतावच्छेदकत्वविरहात् वह्न्य भावत्वावच्छिन्नविषयतात्वव्यापकत्वस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायामसत्त्वात् यद्रूपपदेनतादृशैकदेशवृत्तिवह्न्यभावत्वादेरुपादातुमशक्यत्वादित्याशयः । तदेव = निरुक्तरीत्या स्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणमेव । न विवक्षितम् दीधितिकृतेतिशेषः ।

❀ कलाविलासः ❀

प्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिधर्मवत्त्वं हेत्वाभासत्वमिति, वृत्तित्वञ्च स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्वस्वावच्छिन्नविषयकत्वसमानाधिकरणभावप्रतियोगितावच्छेदकधर्मावच्छिन्नविषयिताशून्यत्वोभयसम्बन्धेन, अतिविस्तृतिभयात् प्रकारविधयाऽनुगमोऽत्र न प्रदर्शितः । ननु यद्रूपपदेन यदि सामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वं धर्त्तव्यं तदा वह्न्यभावविशिष्टह्रदत्ववानयमितिज्ञानीयप्रकारत्वावच्छिन्नविशेष्यतया अपि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नतया तत्रानुमितिप्रतिबन्धकताविरहेणाऽसम्भवः स्यात् ।

यदि च वह्न्यभाव-ह्रदत्वोभयमेव तथा, तदापि वह्न्यभाववद्ध्रदत्ववान् घट इत्याकारकज्ञानीयप्रकारत्वावच्छिन्नविशेष्यतायाः तादृशोभयधर्मावच्छिन्नतया तत्राप्यनुमितिप्रतिबन्धकतायाः अभावसत्त्वादसम्भवो दुर्वार इति चेन्न, ह्रदत्वावच्छिन्नानुयोगिताकस्वरूपसम्बन्धेन वह्न्यभावाधिकरणनिरूपितवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वस्यैव यद्रूपपदेन धर्त्तव्यत्वात् । वह्न्यभावविशिष्ट-

*-गादाधरी *

नच सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वं प्रवेश्यं, तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम् ? यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयताया अनुमित्यप्रतिबन्धकसंशयाहार्य्याप्रामाण्यज्ञाना-

* चन्द्रकला *

ननु सामान्यपदस्य व्यापकत्वार्थकतया यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकमित्यस्य यद्रूपावच्छिन्नविषयतात्वव्यापकं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वमित्यर्थकताया आवश्यकत्वात् प्रतिबन्धकतानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितलक्षणमेव लघुभूतम्, तस्य तद्रूपावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकत्वघटितत्वात्, भवन्मते यद्रूपावच्छिन्नविषयकत्वत्वव्यापकत्वस्य तादृशप्रतिबन्धकतावच्छेदकतायामेव विवक्षितत्वादित्येव नचेत्यादिनाऽशंक्य समाधत्ते यत इत्यादि ।

* कलाविलासः *

ह्रदत्ववान् घट इत्यादिज्ञाने सामानाधिकरण्यस्य तादृशविशेषरूपेण स्वरूपघटितसंसर्गत्वानभ्युपगमेन असम्भवविरहादिति ध्येयम् ।

अथ स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वघटितकल्पे बाधाद्येकदेशेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितासामान्यमित्यत्र सामान्यपदं व्यर्थम्, जातित्वेन ह्रदत्वावगाहिजातिमान् वह्न्यभाववानितिज्ञानमादायाऽसम्भववारणाय अव्यापकीभूतविषयिताशून्यत्वस्यावश्यं निवेशनीयतया बाधैकदेशवह्न्यभावत्वाद्यवच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यत्वस्य वह्न्यभाव इत्याकारकज्ञान एव सत्त्वेन तदीयवह्न्यभावविषयितायाः प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहात् ।

नच गोत्वाभावो गोत्वाभाववानित्यत्र बाधभ्रमविषये गोत्वाभावेऽतिव्याप्तिः स्यात् यदि सामान्यपदं न स्यादिति वाच्यम्, यद्रूपावच्छिन्नसंसर्गतानिरूपितयद्रूपावच्छिन्नविषयितात्वं यद्रूपावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नसंसर्गतानिरूपिततद्रूपावच्छिन्नविषयिताशून्यत्वस्यैवाव्यापकीभूतविषयिताशून्यत्वपदेन विवक्षणीयत्वात् समवायत्वावच्छिन्नविषयितानिरूपितगोत्वत्वावच्छिन्नविषयिताशून्यगोत्वाभाव इत्याकारकज्ञानीयविषयितायाः तादृशप्रतिबन्धकतानवच्छेदकत्वादिति चेन्न, गुणो न द्रव्यमित्यादौ गुणो द्रव्यमित्याकारकनिरवच्छिन्नद्रव्यत्वनिष्ठप्रकारताकबाधभ्रमीयविषयताश्रये गुणेऽतिव्याप्तिवारणाय सामान्यपदस्यावश्यकत्वात् यथाविवक्षितनिखिलाव्यापकीभूतविषयिता-

❀ गादाधरी ❀

स्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धकतायां तद्व्यापकत्वमित्यना-हार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टाया विशिष्टविषयताया एव व्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयं, तदपेक्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदकतायां बाधादिरूपदोषविषयतात्वव्यापकत्वं वक्तुमुचितम् ।

तथासति निश्चयत्वाद्यनिवेशात् समानाकारकज्ञानस्य विषयताया भे-दस्याप्रामाणिकतया संशयादिज्ञानीयविषयताया अपि निश्चयत्वादिविशि-ष्टीयतयैव प्रतिबन्धकतावच्छेदकतया बाधादिरूपदोषनिरूपितविषयतात्व-व्यापकताया अक्षतत्वात् ।

❀ चन्द्रकला ❀

तद्व्यापकत्वम्=वह्नयाद्यभावविशिष्टह्रदादिनिरूपितविषयितात्व्यापकत्वम्, भवता=अ-नतिरिक्तवृत्तित्वरूपावच्छेदकत्ववादिना । तदपेक्षया = तादृशविशिष्टनिरूपितनिरुक्तनि-श्चयवृत्तित्वविशिष्टविषयित्वव्यापकत्वनिवेशापेक्षया । उचितमिति । अस्मन्मते लक्षण-स्याधिकपदार्थाऽघटितत्वादिति हृदयम् ।

स्वरूपसम्बन्धरूपावच्छेदकत्ववादिनां मते लक्षणस्याऽधिकपदार्थाऽघटितत्वे युक्ति-माह तथा सतीति । प्रतिबन्धकतावच्छेदकतायां तादृशविषयतात्वव्यापकत्वनिवेशे कृते सतीत्यर्थः । समानेति । स्वीयमुख्यविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताक-ज्ञानेष्वित्यर्थः । अप्रामाणिकतयेति । समानाकारकज्ञानविषयताया भेदाभ्युपगमे संशयनिश्चयसाधारणसमानविशेष्यताकज्ञानानुव्यवसायो न स्यादिति ध्येयम् ।

निश्चयत्वादीति । निश्चयत्वादिविशिष्टनिश्चयनिरूपिततयेत्यर्थः । बाधा-दीति । ह्रदो वह्निमानित्यादिस्थलीयवह्न्यभावविशिष्टह्रदात्मकबाधादिदोषनिरूपितवि-षयितात्वव्यापकताया इत्यर्थः ।

अयंभावः, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे वह्न्यभावादिविशिष्टह्रद-त्वाद्यात्मकयद्रूपावच्छिन्नविषयकत्वव्यापकत्वमात्रस्य निवेशो न सम्भवति तादृशयद्रूपा-वच्छिन्नविषयकत्वस्य संशये आहार्यज्ञानेऽप्रामाण्यज्ञानास्कन्दितेऽपि ज्ञाने वर्त्तमानतया तत्र प्रकृतानुमितिप्रतिबन्धकताया विरहादतस्तन्मतेऽनाहार्याप्रामाण्यज्ञानानास्क-न्दितसंशयान्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयकत्वव्यापकत्वं प्रकृतानुमितिप्र-तिबन्धकतायां यथोक्तरीत्याऽसम्भववारणायावश्यं निवेश्यम् ।

❀ कलाविलासः ❀

शून्यज्ञानीयत्वस्य निरुक्तभ्रमीयगुणत्वावच्छिन्नविषयितायां सत्त्वादिति ध्येयम् ।

* गादाधरी *

न च वह्न्यभाववान् ह्रदो वह्निमानित्याहार्य्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयता नाऽनाहार्य्यज्ञानसाधारणी तादृशाहार्य्यज्ञानसमानाकारकानाहार्य्यज्ञानाप्रसिद्धेः, ह्रदो वह्न्यभाववानित्यनाहार्य्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयतातश्च वह्न्यादिप्रकारतानिरूपिततादृशाहार्य्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयताया भिन्नत्वात्, तथाचानाहार्य्यज्ञानवृत्तित्वविशिष्टविषयताया एव प्रतिबन्धकतावच्छेदकतया न प्रतिबन्धकतावच्छेदकतायां दर्शिताऽऽहार्य्यज्ञानीयविषयितासाधारणविशिष्टविषयतात्वव्यापकत्वमिति वाच्यम्,

* चन्द्रकला *

स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षे तु अनाहार्यत्वादिकमनिवेश्य केवलं यद्रूपावच्छिन्नविषयितात्वव्यापकत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतायां निवेशनीयम्, संशयादिनिरूपितविषयताया निश्चयत्वावच्छिन्ननिरूपितत्वेन समानाकारकज्ञानीयतयानुमितिप्रतिबन्धकतावच्छेदकत्वेन वह्न्यभावादिविशिष्टह्रदत्वाद्यवच्छिन्ननिरूपितविषयितात्वमात्रव्यापकतायाः प्रतिबन्धकतावच्छेदकतायामक्षतत्वादतो निरुक्तरीत्या स्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणमेव निश्चयत्वाद्यप्रवेशेन लाघवात् युक्तमिति।

नन्वाहार्यवह्न्यभाववान् ह्रदो वह्निमानित्याकारकज्ञानं न वह्न्यभाववद्ह्रदनिश्चयसमानाकारकं निश्चयीयविशेष्यतायाःशुद्धह्रदत्वावच्छिन्नतया तादृशविशेष्यताया आहार्यज्ञाने विरहात् वह्न्यभाववान् ह्रदो वह्निमानित्याकारकाहार्यज्ञानीयविशेष्यताया वह्न्यभावह्रदत्वरूपधर्मद्वयावच्छिन्नत्वादिति वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयतात्वस्याहार्यज्ञानीयतादृशविषयतायामपि सत्त्वेन तत्रानुमितिप्रतिबन्धकतावच्छेदकत्वस्याभावादसम्भववारणाय यद्रूपावच्छिन्नविषयतायामनाहार्यज्ञानीयत्वनिवेशस्यावश्यकतया स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपक्षेऽपि गौरवस्य वारयितुमशक्यत्वादिति तटस्थः शंकते नचेति। वाच्यमिति परेणान्वयः। नानाहार्येति। न निश्चयादौ वर्त्तमाना भवितुमर्हति। भिन्नत्वादिति। आहार्यज्ञानीयवह्निप्रकारतानिरूपितविशेष्यताया वह्न्यभावाद्यवच्छिन्नत्वादिति भावः। दर्शितेति। वह्न्यभाववान् ह्रदो वह्निमानित्याकारकाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदविषयितासाधारणविशिष्टविषयितात्वव्यापकत्वं स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वस्य नेत्यर्थः। तथाचानाहार्यीयत्वस्य यद्रूपावच्छिन्नविषयितायामनिवेशेऽसम्भव इत्याशयः।

* गादाधरी *

तथासति अनाहार्य्यज्ञानीयविशिष्टविषयितात्वव्यापकताया एव विवक्षणीयत्वात्, तावतापि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाप्रवेशेन लाघवानपायात् ।

* चन्द्रकला *

समाधत्ते तथा सतीति । असम्भववारणायानाहार्यीयत्वस्य यद्रूपावच्छिन्नविषयतायां निवेशे कृते सत्यपीत्यर्थः । लाघवानपायादिति । तथाच स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वपक्षे आहार्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्यापकत्वस्य तादृशावच्छेदकतायामसत्त्वादसम्भववारणाय यद्रूपावच्छिन्नविषयितायामनाहार्यीयत्वविवक्षणेऽपि संशयान्याप्रामाण्यज्ञानानास्कन्दितज्ञानीयत्वस्य तादृशविषयितायामनिवेशेन स्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणस्यैव लघुत्वात्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितलक्षणेऽसम्भववारणाय यद्रूपावच्छिन्नविषयकज्ञाने संशयान्यत्वादिनिवेशस्यावश्यकत्वादिति तु परमार्थः ।

यद्रूपावच्छिन्नविषयतात्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतायाःस्वरूपसम्बन्धरूपावच्छेदकत्वं तद्रूपवत्त्वमित्यादिरीत्या लक्षणार्थनिर्वचने पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्वावच्छेदेन पाषाणमयो वह्न्यभाववानित्याकारकनिश्चयविशिष्टपाषाणमयत्वऽवांश्च

* कलाविलासः *

तथा सत्यनाहार्येति । नचानाहार्यज्ञानीयविषयितायां प्रतिबन्धकतावच्छेदकत्वाभिधानं निरर्थकमव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्य विषयितायां विवक्षणादेवाहार्यज्ञानवारणसम्भवादिति वाच्यम्, गुणपक्षकद्रव्यत्वसाध्यकस्थले द्रव्यभिन्नगुणरूपबाधेऽव्याप्त्यापत्तेः, द्रव्यभिन्नगुणत्वावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्विषयितात्वं तच्छून्यत्वस्य द्रव्यत्वावच्छिन्नविषयतानिरूपितद्रव्यभिन्नगुणत्वावच्छिन्नविशेष्यताकज्ञाने सत्त्वेन तदीयविषयितायां प्रतिबन्धकतावच्छेदकत्वविरहात् । तज्ज्ञानविशिष्टज्ञानत्वं तज्ज्ञानसमानाकारकज्ञानत्वम्, वैशिष्ट्यञ्च स्वनिरूपितमुख्यविशेष्यताविशिष्टमुख्यविषयताकत्वसम्बन्धेन । तादृशविशेष्यतावैशिष्ट्यं स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्व--स्वनिरूपितमुख्यविशेष्यतानात्मकविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेनेत्यवधेयम् ।

* गादाधरी *

मैवम्, स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्टस्य पक्षादेर्ज्ञानस्य वह्न्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयिताकपाषाणमयत्ववत्पर्वतेऽति-

* चन्द्रकला *

पर्वत इत्याकारकनिश्चयस्य ज्ञानद्वयात्मकस्य समूहालम्बनरूपस्य वा सत्त्वदशायां पर्वतादौ वह्न्याद्यनुमित्यनुत्पादात् तादृशानुमितिं प्रति निरुक्तनिश्चयविशिष्टनिश्चयस्य प्रतिबन्धकताया आवश्यकतया समानाकारकज्ञानीयविषयताया ऐक्येन पाषाणमयत्वा-वच्छेदेन वह्न्यभाववत्तानिश्चयाऽसमानकालीनपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषय-तायास्तादृशनिश्चयसमानकालीनपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वाभिन्नतया यत्र यत्र पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितात्वं वर्त्तते तत्र तत्रैव पर्वतादिधर्मिकवह्न्य-नुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकताया अक्षतत्वात् यद्रूपपदेन पाषाणमयत्ववत्पर्वतत्वस्योपादातुं शक्यत्वात् ।

यद्रूपावच्छिन्नविषयकतादृशनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रू-पवत्त्वमित्याकारकानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितलक्षणार्थाभ्युपगमे तु न तत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, तादृशपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयकनिश्च-यत्वस्य पाषाणमयत्वावच्छेदेन वह्न्यभाववत्तानिश्चयाऽसमानकालीनेऽपि पाषाणमयः पर्वत इत्याकारकनिश्चये वर्त्तमानतया तत्रानुमितिप्रतिबन्धकताया असत्त्वादेतन्मते पाषाणमयत्ववत्पर्वतत्वस्य यद्रूपानन्तर्गतत्वादित्येवं नन्वित्यादेरुत्तरमाह मैवमित्यादि । ज्ञानस्य = निश्चयस्य । तदवच्छेदकेति । तादृशानुमितिप्रतिबन्धकतावच्छेदक-विषयितानिरूपकपाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तेरित्यर्थः । अनतिरिक्तवृत्तित्व-

* कलाविलासः *

पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिरिति । अथ पाषाणमयत्ववत्पर्वतविषयता-सामान्यान्तर्गतायाः वह्निमान् पर्वतः पाषाणमय इत्याकारकज्ञानीयपाषाणमयत्वव-त्पर्वतत्वावच्छिन्नविषयताया अपि धर्तुं शक्यतया तत्र चानुमितिप्रतिबन्धकतावच्छेद-कत्वविरहादेव पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणसम्भवे तत्राऽतिव्याप्तिदानमसं-गतम्, पाषाणमयो न वह्निमान् इत्याकारकज्ञानकाले वह्निमान् पर्वतः पाषाणमय इतिज्ञानस्याहार्यतया प्रकृतानुमित्यप्रतिबन्धकत्वादिति चेन्न, अव्यापकीभूतविषयिता-शून्यत्वस्यावश्यं निवेशनीयतया पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वाव्यापकी-भूतविषयिताशून्यज्ञानीयत्वस्य वह्निमान् पर्वतः पाषाणमय इतिज्ञानीयपाषाणमय-त्ववत्पर्वतत्वावच्छिन्नविषयितायामसत्त्वेन तादृशज्ञानीयपाषाणमयत्ववत्पर्वतत्वाव-च्छिन्नविषयतायास्तादृशविषयितासामान्यानन्तर्गतत्वादेव तत्राऽतिव्याप्तिदानसंगतेः।

॥ गादाधरी ॥

व्याप्तिः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे तादृशविशिष्टविषयतायाः पाषाणमयत्वावच्छेदेन वह्न्यभाववत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात्। नचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽपि जलाद्यवच्छेदेन वह्न्यभाव-

॥ चन्द्रकला ॥

रूपावच्छेदकत्वनिवेशपक्षे तत्राऽतिव्याप्तिं वारयति तादृशेति। पाषाणमयत्ववत्पर्वतरूपविशिष्टविषयिताया इत्यर्थः। वह्न्यभाववत्तेति। पाषाणमयत्वावच्छेदेन पाषाणमयो न वह्निमान् इत्याकारकनिश्चयाविशिष्टो यः पर्वतः पाषाणमय इत्याकारकनिश्चयस्तत्राऽपि वर्त्तमानतयेत्यर्थः। अनुमितीति। तादृशपाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायाः स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकपर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकताकत्वेनेत्यर्थः।

ननु स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणेऽपि तादृशज्ञानविशिष्टज्ञानमादाय नोक्तातिव्याप्तिः यद्रूपावच्छिन्नविषयितात्वव्यापकं ज्ञानवैशिष्ट्यानवच्छिन्नप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वं तद्रूपवत्त्वमित्यस्यैव लक्षणार्थत्वोपगमात् पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायाः पाषाणमयत्वावच्छेदेन वह्न्यभाववत्ताज्ञानवैशिष्ट्यावच्छिन्नायामेव प्रतिबन्धकतायामवच्छेदकत्वात् पाषाणमयत्ववत्पर्वतत्वस्य यद्रूपपदेनोपादानाऽसम्भवात्।

नचैतन्मते प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्याधिकस्य प्रवेशनीयतया गौरवमिति वाच्यम्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशमतेऽपि जलावच्छेदेन जलवान् वह्न्यभाववानित्याकारकनिश्चयविशिष्टस्य जलवांश्च ह्रद इत्याकारकनिश्चयस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकतया निरुक्तनिश्चयविशिष्टनिश्चयविषयस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्य वह्न्यभावरूपसाध्याभावव्याप्त्यघटितत्वेन सत्प्रतिपक्षानात्मकतयाऽसम्भवल्लक्ष्यभावस्य विषयितायाः तादृशनिश्चयविशिष्टनिश्चय एव सत्त्वेन तत्र ह्रदादिपक्षकवह्न्याद्यनुमितिप्रतिबन्धकताया निराबाधतया ह्रदो वह्निमानित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिःस्यात्,अतस्तद्वारणाय यद्रूपावच्छिन्नविषयकतादृशनिश्चयत्वव्यापकं ज्ञानवैशिष्ट्यानवच्छिन्नं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्यस्यैव लक्षणार्थतया वक्तव्यतया प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्योभयमतसिद्धतया गौरवानवकाशादित्याशयं मन्वानःशंकते नचेति। वाच्यमिति परेणान्वयः।

जलाद्यवच्छेदेनेत्यादि। जलव्यापकवह्न्यभावप्रतियोगिकस्वरूपेण वह्न्यभावव-

❀ गादाधरी ❀

वत्ताघटितस्य वह्न्यभाववज्जलादिमद्वृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवान् वह्न्यभाववानित्यादिज्ञानसहितस्य जलवांश्च ह्रद इत्यादिज्ञानस्य तादृशज्ञानविशिष्टतादृशज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य सत्प्रतिपक्षाद्यनात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनीयतया मन्मतेऽपि तत्रानतिप्रसङ्गादिति वाच्यम्,

❀ चन्द्रकला ❀

त्ताघटितस्येत्यर्थः। तादृशेति। जलवान् वह्न्यभाववानित्याकारकनिश्चयविशिष्टजलवांश्च ह्रद इत्याकारकनिश्चयत्वेनेत्यर्थः। प्रतिबन्धकतयेति। ह्रदादिधर्मिकवह्न्याद्यनुमितीत्यादिः।

वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकत्वस्य निरुक्तज्ञानविशिष्टज्ञाने एव सत्त्वं सूचयितुमाह तादृशप्रतिबन्धकतेति। तादृशज्ञानविशिष्टज्ञानत्वावच्छिन्नप्रतिबन्धकताशून्यं यज्ज्ञानं तदविषयीभूतस्य तादृशविशिष्टस्येत्यर्थः। तथाच वह्न्यभाववजलवद्वृत्तिजलवद्ध्रदरूपविशिष्टविषयकत्वस्य तादृशज्ञानविशिष्टज्ञाननिष्ठतया तद्व्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायामक्षतत्वाद् भवति ह्रदो वह्निमानित्यादौ तादृशविशिष्टेऽतिव्याप्तिरिति भावः।

सत्प्रतिपक्षाद्यनात्मकस्येति। साध्याभावव्याप्यघटितत्वादित्यादिः। मन्मतेपीति। स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वमभ्युपगच्छतो मम मतेऽपीत्यर्थः। तत्र = पाषाणमयत्ववत्पर्वते। अनतिप्रसंगादिति। पर्वतो वह्निमान् धूमादित्यादावित्यादिः।

अर्थात् उभयमते एव ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, ह्रदादिधर्मिकवह्न्याद्यनुमितिं प्रति तादृशसत्प्रतिपक्षात्मकविशिष्टविषयकैकनिश्चयत्वेन जलव्यापको वह्न्यभावः इत्याकारकनिश्चयविशिष्टवह्न्यभावसमानाधिकरणजलवांश्च ह्रद इत्याकारकनिश्चयत्वेन च प्रतिबन्धकताद्वयकल्पनस्य गुरुतया तत्र तादृशनिश्चयविशिष्टनिश्चयत्वेनैकप्रतिबन्धकताया एव कल्पनीयत्वात् तत एव तादृशविशिष्टविषयकैकज्ञानस्थलेऽपि प्रकृतानुमितिप्रतिबन्धनिर्वाहसम्भवात्, एकज्ञानस्यैव तादृशज्ञानविशिष्टज्ञानत्वानपायादिति निरुक्तसत्प्रतिपक्षनिश्चये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताविरहेण जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदनिश्चयत्वव्यापकत्वस्य तादृशप्रकृतानुमितिप्रतिबन्धकतायामभावादुभयमत एव प्रतिबन्धकताया ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवादित्येवं समाधानमाह ज्ञानवैशिष्ट्येति।

❀ गादाधरी ❀

ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः । साध्याभावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानत्वेन स्वतन्त्रसाध्याभावधर्मिकतद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानसाधारण्यानुरोधेनावश्यकल्प्यप्रतिबन्धकतयैवोपपत्तेः, तादृशविशिष्टज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावादुक्तविशिष्टेतिऽप्रसङ्गस्तु विवक्षणीयविशिष्टान्तराघटितत्वनिवेशनेनैव वारणीयः । न च ज्ञानद्वयसाधारणप्रतिबन्धकतायाः

❀ चन्द्रकला ❀

प्रतिहेत्विति । जलादिव्यापकवह्न्यभावादिसमानाधिकरणजलादिमद्ध्रदादिरूपसत्प्रतिपक्षेऽव्याप्तिरित्यर्थः । तद्व्यापकतेति । प्रतिहेतुव्यापकतानिश्चयविशिष्टसाध्याभावसमानाधिकरणप्रतिहेतुमत्तानिश्चयत्वेनेत्यर्थः । स्वतन्त्रेति । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपैकविशिष्टज्ञान-वह्न्यभावधर्मिकजलव्यापकताज्ञानविशिष्टवह्न्यभावसमानाधिकरणजलवद्ध्रदज्ञानोभयसाधारण्यानुरोधेन अवश्यक्लृप्तज्ञानविशिष्टज्ञानत्वावच्छिन्नप्रतिबन्धकतयैवोपपत्तेरित्यर्थः । तादृशेति । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपविशिष्टसत्प्रतिपक्षनिश्चयस्येत्यर्थः ।

ज्ञानवैशिष्ट्येति । गौरवादित्यादिः । मानाभावादिति । तथाच प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे उभयमत एवोक्तसत्प्रतिपक्षेऽव्याप्तिरिति भावः ।

नन्वेवमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्याऽवश्यं निवेशनीयत्वे वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपेऽतिव्याप्तिः, तादृशविशिष्टनिश्चयत्वस्य जलावच्छेदेन वह्न्यभावनिश्चयविशिष्टजलवांश्च ह्रद इत्याकारकज्ञानविशिष्टज्ञान एव सत्त्वेन तत्राऽनुमितिप्रतिबन्धकताया अक्षतत्वादित्यत आह उक्तविशिष्ट इति ।

वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्टेऽतिप्रसंगस्त्वित्यर्थः । विवक्षणीयेति । दीधितिकृता विवक्षणीयं यद्विशिष्टान्तराऽघटितत्वं तादृशविशेषणेनैवेत्यर्थः । वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदात्मकं यद्विशिष्टं तद्भिन्नं यद् वह्न्यभाववज्जलवदादिरूपं विशिष्टान्तरं तद्घटितत्वस्यैव वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदे विद्यमानतया तदघटितत्वस्य तत्राऽसत्त्वान्न तादृशविशिष्टेऽतिव्याप्तिरित्यभिमानः ।

अभिमानं निराकर्त्तुमाह नचेति । वाच्यमितिपरेणान्वयः । ज्ञानद्वयेति । जला-

❀ गादाधरी ❀

प्रत्येकज्ञानविषयविशिष्टविषयकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत्, तथाच दर्शितविशिष्टघटकस्य प्रत्येकज्ञानविषयस्य न निरुक्तविशिष्टान्तरात्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमेवेति वाच्यम्, वक्ष्यमाणविशिष्टान्तराघटितत्वस्येव यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रतिब-

❀ चन्द्रकला ❀

वच्छेदेन वह्न्यभाववत्ताज्ञान-जलवांश्च ह्रद इत्याकारकज्ञानद्वयनिष्ठायाः प्रतिबन्धकताया इत्यर्थः। प्रत्येकेति। केवलवह्न्यभाववजलवत्तावच्छिन्नरूपविशिष्टविषयकत्वमित्यर्थः। नानतिरिक्तेति। केवलवह्न्यभाववज्जलादिविषयकत्वस्य जलवद्ह्रदादिज्ञानाऽसमानाकालीनेऽपि जलवान्वह्न्यभाववानितिज्ञाने वर्त्तमानतया तत्र ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकताया विरहादित्याशयः।

दर्शितेति। वह्न्यभाववज्जलवद्वृत्तिजलादिमद्ह्रदात्मकविशिष्टघटकस्येत्यर्थः। प्रत्येकेति। जलावच्छेदेन वह्न्यभाववत्ताज्ञानविषयस्य जलादिमांश्च ह्रद इत्याकारकज्ञानविषयस्य चेत्यर्थः। विशिष्टान्तरेति। प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टस्यैव विशिष्टान्तररूपत्वादिति भावः।

निरुक्तेति। अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टान्तराऽघटितत्वं वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदस्य निराबाधमित्यर्थः। तथाच ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकवह्न्यभाववद्ह्रदादिरूपविशिष्टान्तराघटितत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदे वर्त्तमानतया विशिष्टान्तराऽघटितत्वविशेषणेनाऽपि नोक्तस्थलेऽतिव्याप्तिवारणं सम्भवतीति हृदयम्।

नन्वेवमुक्तविशिष्टे कथमतिव्याप्तिवारणमित्यत आह वक्ष्यमाणेति। प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यथा विशिष्टान्तराऽघटितत्वमवश्यं निवेश्यम् तथोक्तविशिष्टेऽतिव्याप्तिवारणायापि विशिष्टद्वयाऽघटितत्वमपि निवेश्यमित्याशयः।

विशिष्टद्वयाऽघटितत्वविशेषणघटितलक्षणार्थमाह यादृशेति। तथाच यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयताव-

❀ कलाविलासः ❀

यादृशविशिष्टविषयकनिश्चयेति। अत्र निश्चयवैशिष्ट्यं निश्चये एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन। तेन कालान्तरीययादृशनिश्चयमादाय पुरुषान्तरीयतादृशनिश्चयमादाय वा विशिष्टद्वयाऽप्रसिद्धावपि नाऽसम्भवः।

न च तादात्म्येन निश्चयवैशिष्ट्याभिधानाल्लाघवमिति वाच्यम्, तथा सति

❀ गादाधरी ❀

न्धकतानतिरिक्तवृत्ति, तादृशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयतया उक्तविशिष्टवारणसम्भवात् ।

❀ चन्द्रकला ❀

च्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं हेत्वाभासत्वमिति फलितम् । अत्र च तादृशविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वमेव विशिष्टद्वयाऽघटितत्वं तच्च लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपविशेषणं बोध्यम् ।

एवञ्च नोक्तविशिष्टेऽतिव्याप्तिः जलावच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टजलवांश्च ह्रद इत्याकारकनिश्चयत्वव्यापकत्वस्य ह्रदादिधर्मिकयथोक्तानुमितिप्रतिबन्धकतायां वर्त्तमानतया तादृशवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वेऽसत्त्वात् लक्ष्यतावच्छेदकयद्रूपपदेन निरुक्तह्रदत्वस्य धर्त्तुमशक्यत्वात् । भवतिच ह्रदो वह्निमानित्यादौ बाधादौ लक्षणसमन्वयः । तादृशवह्न्यभाववज्जलवत्तावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्य वह्न्यभावविशिष्टह्रदत्वे वर्त्तमानत्वात् वह्न्यभावविशिष्टह्रदत्वादेश्च यद्रूपपदेनोपादानसम्भवात् ।

अत्र तादृशविषयिताशून्यप्रतीतिविषयतावच्छेदकरूपवत्त्वमात्रोक्तौ घटादावतिव्याप्तिः वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्य घटत्वादौ सत्त्वादतस्तादृशविषयिताशून्यप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वादिना विशेष्यदलमभिहितमेवमन्यत्राऽपि लक्षणसमन्वयः स्वयमूहनीयः, अधिकमन्यत्रानुसन्धेयमितिदिक् ।

❀ कलाविलासः ❀

यादृशस्थले तादृशनिश्चययोः समूहालम्बनरूपता न कस्यापि जाता तादृशस्थले तादात्म्यसम्बन्धेन निश्चयवैशिष्ट्याऽप्रसिद्ध्या असम्भवतादवस्थ्यापत्तेरिति ध्येयम् । वस्तुतस्तु जातित्वेन जलत्वावगाहिजातिमान्वह्न्यभाववानितिनिश्चयविशिष्टस्य जलवांश्च ह्रद इतिनिश्चयस्य जलवान् वह्न्यभाववानितिनिश्चयसहितस्य वा जातित्वादिना ह्रदत्वावगाहिनो जलवांश्च जातिमानित्याकारकनिश्चयस्य चानुमित्यप्रतिबन्धकतयाऽसम्भववारणाय यादृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीययादृशविशिष्टविषयिताशालिनिश्चयविशिष्टयादृशविशिष्टविषयित्वाव्यापकीभूतविषयिता - शून्यज्ञानीययादृशविशिष्टविषयिताशालिनिश्चयत्वमित्यादेरेवावश्यं निवेशनीयतया समूहालम्बनतादृशनिश्चयोपादानाऽसम्भवात् तादात्म्येन निश्चयवैशिष्ट्यं न विवक्षणीयमिति तु युक्तमुत्पश्यामः ।

विशिष्टद्वयाघटितत्वशरीरे अनुमितौ प्रकृतपक्षसाध्यहेतुकत्वाऽप्रवेशे ह्रदो गगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तितावत्कालीनवह्निमान् जलादित्यत्र तादृश-

* कलाविलासः *

वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, वह्न्यधिकरणनिरूपितवृत्तित्वावच्छेदेन गगनाभाववत्तानिश्चयविशिष्टाऽभावधर्मिकवह्न्यधिकरणवृत्तितानिश्चयस्य अभावो गगनवानित्यनुमितिप्रतिबन्धकतया तादृशविशिष्टद्वयघटितत्वस्य निरुक्ताऽसाधारण्ये सत्त्वात् ।

प्रकृतपक्षकत्वानिवेशे अभावो गगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तितावत्कालीनवह्निमान् जलादित्येतादृशवह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, पूर्वोक्तनिश्चयविशिष्टनिश्चयस्य प्रकृतपक्षीभूताभावधर्मिकतादृशानुमितिं प्रत्येव प्रतिबन्धकत्वात् ।

वस्तुतस्तु गगनवदभावो गगनाभाववद्वह्न्यधिकरणनिरूपितवृत्तितावत्कालीनवह्निमान् जलादित्यत्र तादृशसाध्यव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिवारणाय विशेष्यदले यादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतामादाय लक्षणं संगमनीयम् तादृशप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतैव विशिष्टद्वयाऽघटितत्वशरीरे निवेश्या । तथाच प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यं स्ववृत्त्यभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितपरम्परयावच्छेदकतावत्त्व-स्वाभाववत्प्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन । स्वाभावश्च स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परया निश्चयनिष्ठावच्छेदकतानिरूपिता या सामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मविशिष्टधर्मावच्छिन्नविषयितावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकः । धर्मवैशिष्ट्यं धर्मे स्वावच्छिन्नविषयिताविशिष्टविषयितानिरूपकतावच्छेदकत्वसम्बन्धेन विषयितावैशिष्ट्यं विषयितायां स्वाश्रयसमानाधिकरणवृत्तित्वसम्बन्धेनेतिध्येयम् । एवञ्च पक्षसाध्यहेतुकत्वानां पृथक्निवेश एव नास्तीति वदन्ति ।

विशिष्टद्वयाघटितत्वशरीरे स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणे धर्मसम्बन्धसाधारणैकावच्छेदकताया वक्तुमशक्यत्वात् यादृशस्थलविशेषे जलवान् वह्न्यभाववानितिज्ञानं जलवांश्च ह्रद इति ज्ञानञ्च प्रमात्मकमेव भवति तादृशस्थले तादृशज्ञानयोः विषयितासम्बन्धेन वह्न्यभाववज्जलवद्विशिष्टज्ञानविशिष्टविषयितासम्बन्धेन जलवद्ह्रदविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं लाघवात्, एवञ्च लक्षणे यदि धर्मविधयाऽवच्छेदकत्वं निवेश्यते तदा वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः, संसर्गविधयाऽवच्छेदकत्वनिवेशे तु वह्न्यभाववत्तद्व्यक्तित्ववद्वृत्तितद्व्यक्तित्ववद्ह्रदेऽतिव्याप्तिः, तादृशस्थले भ्रमात्मकज्ञानस्यापि सम्भवेन तादृशज्ञानयोः

❀ कलाविलासः ❀

विषयितासम्बन्धेन प्रतिबध्यप्रतिबन्धकभावकल्पनाऽसम्भवात् ।

ननु विशिष्टद्वयाऽघटितत्वशरीरे निश्चयपदद्वयं किमर्थमितिचेन्न, जातिपक्षक-द्रव्यत्वसाध्यकस्थले द्रव्यभेदवज्जातेर्बाधत्वेन लक्ष्यतया द्रव्यभेदवत्सन्देहवद्-वृत्तिसन्देहवज्जातित्वावच्छिन्नेऽतिव्याप्त्यापत्तेः, सन्दिग्धं द्रव्यं न वेति संशयीय-निरवच्छिन्नद्रव्यत्वप्रकारकज्ञाने सन्दिग्धत्वावच्छिन्नविशेष्यतानिरूपितद्रव्यत्वत्वावच्छि-न्नविषयतायाः तादृशविशिष्टविषयित्वाव्यापकीभूतायाः शून्यत्वस्य सत्त्वादेवमपर-दिश्यपीति वदन्ति ।

अथोक्तकल्पे सामानाधिकरण्येन ह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवद्-वृत्तिजलवद्ध्रदेऽतिव्याप्तिः, तादृशस्थलेऽवच्छेदावच्छेदेन जलवत्त्वस्यैव प्रकृतानु-मितिविरोधितया व्यापकतावच्छेदकधर्मभेदेन व्यापकताभेदस्यावश्यकत्वेन सर्वसा-धारणज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः कल्पयितुमशक्यत्वात्, तत्र पृथक्प्रति-बन्धकताकल्पने तु ज्ञानवैशिष्ट्यावच्छिन्नत्वनिवेशनमफलमिति तस्य विशिष्टद्वया-घटितत्वं निर्विवादमितिचेन्न,

ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतास्थले सामानाधिकरण्येन ज्ञानद्वयमपि सामानाधिकरण्यावगाहिज्ञानं प्रतिबध्नातीत्यस्य तर्कमाथुर्यां प्रतिपादिततया दर्शित-स्थलेऽपि सामानाधिकरण्यावगाहिज्ञानद्वयस्यैव ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धक-ताया आवश्यकत्वादिति ध्येयम् ।

वस्तुतो ह्रदधर्मिकह्रदत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति जलवान् वह्न्य-भाववान् जलवांश्च ह्रद इत्याकारकनिश्चयस्येव शैवालवान् वह्न्यभाववान् शैवाल-वांश्च ह्रद इत्याकारकनिश्चयस्यापि विभिन्नरूपेण प्रतिबन्धकताकल्पने गौरवात् लाघवात् निश्चयविशिष्टनिश्चयत्वेनैव तादृशनानाविधज्ञानानां प्रतिबन्धकत्वं कल्प-नीयमिति न कोऽपि दोषः । वैशिष्ट्यम् एकक्षणावच्छेदेनैकात्मवृत्तित्वमिति प्राहुः ।

नचोक्तकल्पेऽसम्भवः वह्न्यभावविशिष्टह्रदनिश्चयविशिष्टवह्न्यभाववद्ध्रदनिश्चय-त्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया विशिष्टद्वयविषयितापदेन वह्न्यभाववद्ध्रदादिविषयिताया एवोपादानसम्भवात् विशिष्टद्वयाघटितत्वघटकप्रति-बन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वं निवेश्योक्तासम्भववारणे वह्न्यभाववज्जल-वद्वृत्तिजलाभाववान् ह्रदो वह्निमानित्यत्र तादृशजलवद्ध्रदरूपाश्रयाऽसिद्धावव्याप्तिः निरुक्ताश्रयासिद्धिनिश्चयस्य पक्षे साध्यप्रकारकबुद्धिं प्रत्यपि ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वादिति वाच्यम्, निरुक्तविशिष्टद्वयविषयितायां प्रतिबध्यताविशिष्टा-न्यत्वस्य विवक्षणीयत्वात् तत एव सर्वदोषाणामपि वारणसम्भवात् । वैशिष्ट्यं

❀ गादाधरी ❀

नचैवं तादृशविशिष्टद्वयघटितोक्तसत्प्रतिपक्षेऽव्याप्तिस्तस्य प्रतिहेतुव्यापकताविशिष्टसाध्याभाव–प्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यम्, सत्प्रतिपक्षाघटकतादृशदलद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयविषयताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितत्वार्थकत्वात्।

❀ चन्द्रकला ❀

ननूक्तरीत्या विशिष्टद्वयाघटितत्वनिवेशेऽपि जलव्यापकवह्न्यभावसमानाधिकरण जलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, तादृशह्रदत्वरूपसत्प्रतिपक्षतावच्छेदकधर्मस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिजलव्यापकताविशिष्टवह्न्यभावत्वावच्छिन्नविषयिताविशिष्टवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वाऽसम्भवात् तस्य विशिष्टद्वयाघटितयद्रूपानन्तर्गतत्वादित्याशंकते नचेति। वाच्यमिति परेणान्वयः। तस्य = निरुक्तसत्प्रतिपक्षस्य। प्रतिहेत्विति। जलव्यापकताविशिष्टवह्न्यभाव-वह्न्यभावसमानाधिकरणजलवद्ह्रदात्मकविशिष्टद्वयघटितत्वादित्यर्थः। उत्तरयति सत्प्रतिपक्षेति। प्रतिहेतुव्यापकताविशिष्टसाध्याभावरूपतादृशसत्प्र-

❀ कलाविलासः ❀

स्वावच्छेदकत्व–स्वनिरूपितप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञाननिष्ठप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन।

ननु वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिशंकैव न सम्भवति, तस्य वह्न्यभाववज्जलवन्निरूपितवज्जलवद्ध्रदरूपविशिष्टान्तरघटितत्वादिति विशिष्टद्वयाघटितत्वनिवेशो निरर्थक इति चेन्न,

जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवद्ध्रदरूपविशिष्टान्तरघटिते जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपे सत्प्रतिपक्षेऽव्याप्तिवारणाय विशिष्टद्वयाऽघटितं यद्विशिष्टान्तरं तदघटितत्वनिवेशस्यावश्यकतया वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणार्थमेव विशिष्टद्वयाघटितत्वनिवेशस्यावश्यकत्वात्।

वस्तुतस्तु आधेयतासम्बन्धेन, वह्न्यभाववज्जलवद्विशिष्टजलवद्ध्रदेऽतिव्याप्तेरेवाशंकिततया विशिष्टद्वयाऽघटितत्वनिवेशो न निरर्थकः, निरुक्तविशिष्टस्य विशिष्टान्तरघटितत्वशंकायाः कथमप्यनुदयादिति प्राहुः।

सत्प्रतिपक्षघटकेति। यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं सत्प्रतिपक्षतावच्छेदकरूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताभिन्नत्वमेव विशिष्टद्वयविषयितायां सत्प्रतिपक्षघटकविषयिताभिन्नत्वं विवक्षणीयम्, तेन न यत्र सत्प्रतिपक्षाऽप्रसिद्धिरित्यादिग्रन्थस्याऽसंगतिरितिध्येयम्।

❀ गादाधरी ❀

यत्र तादृशसत्प्रतिपक्षाप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव, साध्यादिभेदेन

❀ चन्द्रकला ❀

तिपक्षघटकविषयिताभिन्नत्वे सति सत्प्रतिपक्षघटकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षविषयिताभिन्ना या विशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयतावच्छेदकत्वरूपस्य विशिष्टद्वयाऽघटितत्वस्य तादृशयद्रूपविशेषणत्वोपगमान्नोक्तसत्प्रतिपक्षेऽव्याप्तिरिति भावः ।

अयमभिप्रायः, यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्ना या सत्प्रतिपक्षतावच्छेदकरूपावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयिताभिन्ना विषयिता तच्छून्यप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्युक्तौ नोक्तसत्प्रतिपक्षेऽव्याप्तिः, तादृशप्रतीतिविषयतावच्छेदकत्वरूपविशिष्टद्वयाऽघटितत्वस्य जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वेऽनपायात् तादृशसत्प्रतिपक्षघटकविषयिताभिन्नविषयितापदेन वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयिताया एवोपादातुं शक्यत्वादिति ।

ननु सत्प्रतिपक्षघटकविषयिताभिन्नत्वस्य विशिष्टद्वयविषयितायां विवक्षणे पर्वतः धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिः, धूमाभाववदयोगोलकत्वावच्छिन्नविषयिताविशिष्टायोगोलकवृत्तिवह्नित्वावच्छिन्नविषयितायास्तादृशविशिष्टद्वयविषयितापदेनोपादानसम्भवेऽपि तत्र सत्प्रतिपक्षघटकविषयिताभिन्नत्वसम्पादनं दुःशक्यम्, तादृशपक्षसाध्यकस्थले सत्प्रतिपक्षस्यैवाऽप्रसिद्धत्वादित्यत आह यत्रेति । यादृशपक्षसाध्यकदुष्टहेतुकस्थले इत्यर्थः । तत्र = तादृशस्थले । भिन्नान्तमिति । विशिष्टद्वयविषयितायां सत्प्रतिपक्षघटकविषयिताभिन्नत्वं न देयमित्यर्थः । तथाच तत्र तादृशविशिष्टविषयिताविशिष्टतादृशविशिष्टविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वमेव विशिष्टद्वयाऽघटितत्वं लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपविशेषणमिति भावः ।

नन्वेवं लक्षणस्याननुगम इत्यत आह साध्यादीति । आदिना पक्षहेत्वादिपरिग्रहः । तथाच पक्षसाध्यसाधनादिभेदेन लक्षणस्य भिन्नत्वमिष्टमेवेति हृदयम् ।

❀ कलाविलासः ❀

यत्र सत्प्रतिपक्षाऽप्रसिद्धिस्तत्र विशिष्टद्वयाऽघटितत्वनिवेशो न कर्त्तव्य इति तु नाशङ्कनीयम्, काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववद्वृत्त्यक्तिमद्वृत्तितद्व्यक्तिमत्पर्वतेऽतिव्याप्तिवारणार्थमेव तन्निवेशस्यावश्यकत्वात् ।

* गादाधरी *

लक्षणभेदात् भ्रमात्मकज्ञानीयतादृशविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसाध्याभावादिविषयतोपेया।

* चन्द्रकला *

ननु लक्ष्यभेदेन लक्षणस्य भिन्नत्वे इतरभेदानुमाने भागासिद्धिः, लक्ष्यमात्रस्यैव पक्षतया यत्किञ्चिल्लक्षणस्यैव हेतुताया आवश्यकत्वात् तस्य लक्ष्यीभूतपक्षैकदेशेऽसत्त्वादित्यत आह भ्रमात्मकेति। निरूप्यनिरूपकभावापन्नविषयितात्वेन रूपेणेत्यर्थः। एवञ्च पर्वतो धूमवान् वह्नेरित्यादिसर्वसाधारणमेकमेव लक्षणं वक्तव्यमित्याह प्रतिहेत्विति। प्रतिहेतुव्यापकत्वविषयितानिरूपितसाध्याभावविषयिताभिन्नत्वे सति तादृशहेतुविषयितानिरूपितपक्षविषयिताभिन्ना या तादृशविशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयतावच्छेदकत्वमेव यद्रूपविशेषणं देयमित्यर्थः। तथाच पर्वतो धूमवान् वह्नेरित्यादावपि भ्रमात्मकजलव्यापकधूमाभावसमानाधिकरणजलवत्पर्वतज्ञानीयजलव्यापकत्वविषयितानिरूपितधूमाभावविषयिताभिन्नत्वे सति जलविषयितानिरूपितपर्वतविषयिताभिन्नत्वस्य पूर्वोक्तविशिष्टद्वयविषयितायामक्षतत्वात् लक्ष्यभेदेन लक्षणस्य भिन्नत्वानभ्युपगमेऽपि न क्षतिरित्याशयः।

ननु ह्रदो वह्निमानित्यादौ जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदस्य सत्प्रतिपक्षत्वमेव न स्वीक्रियते, अपितु वह्न्यभावाभाववदवृत्तिमद्ध्रदादेः वह्निमदवृत्तिमद्ध्रदादेरेव तथात्वं स्वीकरणीयं, विशिष्टद्वयविषयितां सत्प्रतिपक्षघटकविषयिताभेदं प्रतिहेतुव्यापकत्वावच्छिन्नसाध्याभावादिविषयिताभेदं वा निवेश्य जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदे लक्षणसमन्वयसम्भवे जलव्यापकवह्न्यभावकालीनजलवद्ध्रदेऽतिव्याप्तिवारणमशक्यं स्यात्, सत्प्रतिपक्षघटकविषयिताभिन्ना या वह्न्य-

* कलाविलासः *

भ्रमेति। विरुद्धानुमितिजनकतावच्छेदकविषयितात्वावच्छिन्नभिन्नत्वमेव विशिष्टद्वयविषयितायां विवक्षणीयमिति तु विभावनीयम्।

ननु यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशैकविशिष्टावटितत्वविवक्षयैव निरुक्तविशिष्टे अतिव्याप्त्यादिदोषवारणसम्भवे गुरुतरनिवेशनं किमर्थमितिचेन्न,

वह्न्यभाववज्जलवदवृत्तिजलवद्ध्रदत्वावच्छिन्नविषयतावान्न वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वावच्छिन्नविषयतावान्नेतिरीत्या भेदकूटनिवेशे गौरवादेकस्यैव वह्न्यभाववज्जलत्वत्वावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयित्वाभावस्य प्रवेशे लाघवमिति संक्षेपः।

❀ गादाधरी ❀

न च दर्शितविशिष्टस्य सत्प्रतिपक्षरूपता न स्वीक्रियतेऽपि तु हेतुतावच्छेदकाघटितसाध्याभावाभाववद्वृत्तिमत्पक्षात्मकविशिष्टस्यैव, व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य उक्तरीत्या संग्रहे तद्धर्मव्यापकसाध्याभावकालिकतद्धर्मविशिष्टपक्षादिव्यावृत्तिरप्यशक्या स्यादित्यविशेषेण व्यापकताघटितविशिष्टमात्रस्यालक्ष्यताया एव युक्तत्वात्, तथा चोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचितमिति वाच्यम्,

❀ चन्द्रकला ❀

भाववज्जलवत्त्वावच्छिन्नविषयिताविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयिता तच्छून्यप्रतीतिविषयतावच्छेदकत्वस्य जलव्यापकवह्न्यभावकालीनजलवद्ध्रदत्वे सत्त्वादतो जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदस्य सत्प्रतिपक्षानात्मकतया अलक्ष्यत्वमेव समीचीनमिति तत्र नातिव्याप्तिः, जलव्यापको वह्न्यभाव इत्याकारकनिश्चयविशिष्टवह्न्यभावकालीनजलवद्ध्रदनिश्चयीयविशिष्टद्वयविषयितायाः सत्प्रतिपक्षघटकविषयिताभिन्नत्वसत्त्वेन तच्छून्यप्रतीतिविषयितावच्छेदकत्वस्य जलव्यापकवह्न्यभावकालीनजलवद्ध्रदत्वेऽसत्त्वात् ।

एवञ्च लाघवात् विशिष्टद्वयाऽघटितत्वमनिवेश्य पर्वतो वह्निमान् धूमादित्यादौ पूर्वोक्तरीत्या पाषाणमयत्ववत्पर्वते ह्रदो वह्निमान् धूमादित्यादौ च वह्न्यभाववजलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितात्वव्यापकं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वं तद्रूपवत्त्वमेव हेत्वाभासत्वमिति विवक्षणीयमित्येवं स्वरूपसम्बन्धरूपावच्छेदकत्ववादी पुनः शंकते नचेति । वाच्यमिति परेणान्वयः ।

दर्शितेति । जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ह्रदादिरूपविशिष्टस्येत्यर्थः । हेतुतेति । साध्याभावव्याप्यवत्पक्षरूपविशिष्टस्येत्यर्थः । उक्तरीत्या = विशिष्टद्वयविषयितायां सत्प्रतिपक्षघटकविषयिताभिन्नत्वादिकं निवेश्य । तद्धर्मेति प्रतिहेत्वित्यर्थकम् । विशिष्टेति । प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षात्मकविशिष्टमात्रस्येत्यर्थः । तथाच = निरुक्तविशिष्टस्यालक्ष्यत्वे च । उक्तप्रयासमपेक्ष्य = गुरुतरविशिष्टद्वयाऽघटितत्वनिवेशमपेक्ष्य ।

तथा च स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्ववादिन एव विजयेरन् इत्याह ज्ञानवैशिष्ट्येति । तथापि प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे इदं वह्निमत् जलत्वादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलत्वरूपाऽसाधारण्येऽव्याप्तिः,

❀ गादाधरी ❀

एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेनासाधारण्यविरोधरूपस्य विषयतायाः पक्षधर्म्मिकप्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात् । दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात् ।

❀ चन्द्रकला ❀

निरुक्तजलत्वरूपाऽसाधारण्यविषयितायाः जलत्वरूपहेतुमत्पक्षनिश्चयात्मकज्ञानवैशिष्ट्यावच्छिन्नायामेव प्रकृतानुमितिप्रतिबन्धकतायामवच्छेदकत्वात् यद्रूपावच्छिन्नविषयितापदेन तादृशजलत्वत्वावच्छिन्नविषयिताया धर्त्तुमशक्यत्वात् तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्याभावादित्येवं रीत्या स्वरूपसम्बन्धरूपावच्छेदकत्ववादिनां पूर्वोक्तामाशंका निरस्यति एवमपीति । दर्शितप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्याऽलक्ष्यत्वेऽपीत्यर्थः ।

मतभेदेनेति । यन्मते निश्चितसाध्यवद्व्यावृत्तत्वविशिष्टो हेतुः साध्यवद्व्यावृत्तत्वविशिष्टो वा हेतुः असाधारण्यं वह्न्यादिमद्व्यावृत्तगगनादेरेव तथात्वादिति तन्मते साध्यव्यापकीभूताभावप्रतियोगिहेतुरेव विरोधः, यन्मते च साध्याऽसामानाधिकरण्यविशिष्टहेतुरेव विरोधः तन्मते साध्यव्यापकीभूताभावप्रतियोगिहेतोरसाधारण्यमिति हृदयम् ।

वह्न्यादिव्यापकीभूताभावप्रतियोगित्वरूपा च हेतौ वह्न्याद्यभावव्यतिरेकव्याप्तिः तज्ज्ञानञ्च न वह्न्याद्यनुमितौ नवा वह्न्यादेःपरामर्शे प्रतिबन्धकं भवितुमर्हति अपितु हेतुमत्पक्षज्ञानसहितं वह्निव्यापकीभूताभावप्रतियोगि जलं जलवांश्च ह्रद इत्याकारकज्ञानविशिष्टज्ञानमेव वह्न्यभावव्याप्यवत्त्वज्ञानमुद्रया वह्न्यनुमितिं प्रतिबध्नाति, तथाच तादृशाऽसाधारण्यनिश्चयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाऽसम्भव एवेत्याह पक्षधर्मीति ।

दर्शितेति । वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिप्रसंगवारणायेत्यर्थः । निवेशनीयत्वादिति । तथाचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितमेव लक्षणं करणीयमिति भावः ।

ननु निरुक्तविशिष्टद्वयाघटितयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्युक्तावपि वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिः, तादृशजलत्वावच्छिन्नविषयकनिश्चयत्वस्य जलवद्ध्रदरूपहेतुमत्पक्षज्ञानाकालीनेऽपि तादृशजलनिश्चये वर्त्तमानतया तत्र प्रकृतानुमितिप्रतिबन्धकत्वविरहादतो वह्निव्यापकीभूताभावप्रतियोगिजलमात्रस्याऽलक्ष्यत्वमभ्युपगम्य ह्रदादि-

❀ गादाधरी ❀

न च पक्षवृत्तित्वविशेषितं प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यम्, पक्षवृत्तित्वाघटितविशिष्टविषयताया अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात् तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतु-साध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतहेत्वादिरूपनिरुक्तविशिष्टद्वयघटिततया नि-

❀ चन्द्रकला ❀

रूपपक्षवृत्तित्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगिजलस्यैवाऽसाधारण्यं स्वीकरणीयम्।

तथाच विशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवति, वह्निव्यापकीभूताभावजलनिश्चयविशिष्टजलवद्ध्रदनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशाभावप्रतियोगिजलविषयिताविशिष्टजलवद्ध्रदविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्य ह्रदवृत्तित्वविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टजलत्वेऽसत्त्वादित्याह नचेति। द्वितीयवाच्यमितिपरेणान्वयः। पक्षवृत्तित्वेति। केवलवह्निव्यापकीभूताभावप्रतियोगिजलादिरूपहेतुविषयिताया इत्यर्थः। अप्रतिबन्धकेति। जलवद्ध्रदरूपहेतुमत्पक्षज्ञानाऽकालीनज्ञाने वर्त्तमानतयेत्यर्थः। प्रतिबन्धकतेति। प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादित्यर्थः। तादृशस्येत्यादि। हेतुनिष्ठपक्षवृत्तित्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगित्वरूपतादृशासाधारण्यादेरित्यर्थः।

विशिष्टद्वयविषयिताशून्यत्वं निरुक्ताऽसाधारण्यज्ञाने न सम्भवतीत्याह पक्षेति। हेतुनिष्ठपक्षवृत्तित्वविशेषितसाध्यव्यापकीभूताभावप्रतियोगित्वस्याऽसाधारण्यत्वेऽपि न क्षतिः, विशिष्टद्वयविषयितायां निरुक्ताऽसाधारण्यघटकविषयिताभेदनिवेशेनैव सामञ्जस्यात्, यत्राऽसाधारण्याऽप्रसिद्धिस्तत्रापि पूर्ववदेव गतिः।

नचासाधारण्यघटकत्वनिवेशे तादृशस्य विरोधरूपतामते तादृशविरोधेऽव्याप्तिः, विरोधघटकत्वनिवेशे च तादृशाऽसाधारण्येऽव्याप्तिरिति वाच्यम्, साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुविषयिताभिन्नत्वे सति हेतुमत्पक्षविषयिताभिन्ना या विशिष्टद्वयविषयिता तच्छून्यप्रतीतिविषयतावच्छेदकत्वस्यैव विशिष्टद्वयाऽघटितत्वपदेन विवक्षितत्वात् तस्य च लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपविशेषणत्वोपगमात्।

तथापि समाधिसौकर्यादाह पक्षवृत्तित्वेति। तथा च पक्षवृत्तित्वाऽविशेषितसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरेवाऽसाधारण्यं तस्य च विशिष्टद्वयघटितत्वशंकापि नास्तीति भावः।

नन्वेवं तादृशाऽसाधारण्यविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृ-

* गादाधरी *

रुक्तविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यम्, पक्षवृत्तित्वाघटितविशिष्टस्यैवासाधारण्यादिरूपताया "विरोधोपि फलतः प्रतिरोध एव तदन्यत्वेन वा विरोधि विशेषणीयमिति" पंक्तिव्याख्यानावसरे सम्पादनीयत्वात्।

* चन्द्रकला *

त्तित्वात् कथं तत्र लक्षणसमन्वय इत्यत आह विरोधोऽपीति। सव्यभिचारग्रन्थे इत्यादि। सम्पादनीयत्वादिति। तथा च यथोक्तविशिष्टद्वयाऽघटितयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्व-पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्तद्रूपवत्त्वमेव हेत्वाभासत्वं वक्तव्यम्, वह्न्यादिव्यापकीभूताभावप्रतियोगि जलं इत्याकारकासाधारण्यनिश्चयो यदि ह्रदादिरूपपक्षधर्मिकजलादिमत्तानिश्चयकालीनस्तदा तादृशाऽसाधारण्यनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्वविरहात् तादृशोभयाभावे तादृशनिश्चयत्वव्यापकत्वमक्षतम्। तादृशाऽसाधारण्यनिश्चयस्य ह्रदादिधर्मिकजलादिमत्तानिश्चयाकालीनत्वे तु तादृशनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्वसत्त्वेऽपि पक्षधर्मिकहेतुमत्तानिश्चयकालीनत्वविरहात् यथोक्ताऽसाधारण्यनिश्चयत्वव्यापकतायास्तादृशोभयाभावेऽक्षततया पक्षवृत्तित्वाऽविशेषितसाध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्ये लक्षणसमन्वयः।

एवं ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधनिश्चयस्य प्रकृतानुमितिप्रतिबन्धकतया तादृशबाधनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्वविरहादेव तादृशोभयाभावस्य बाधनिश्चयत्वव्यापकतया तादृशबाधादावपि लक्षणसमन्वयः। एवमनयैव दिशा अन्यत्रापि लक्षणसमन्वयः स्वयमूहनीय इत्यलम् पल्लवितेन।

* कलाविलासः *

विरोधोऽपीति। पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहाऽविरोधिप्रकृतानुमितिविरोधिरूपवत्त्वस्य सव्यभिचारलक्षणतया साध्याऽसामानाधिकरण्यविशिष्टहेतुरूपविरोधेऽतिव्याप्तिः, तस्य तादृशत्वादत आह विरोधोऽपीति। तथाच पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमेव विरोधः सच फलतः अनुमितिरूपफलानुत्पादप्रयोजकत्वात् प्रतिरोध एव सत्प्रतिपक्षतुल्य एवेति तस्य साध्यग्रहविरोधित्वात् सत्यन्ताभावेन न सव्यभिचारलक्षणस्यातिव्याप्तिः।

यदि मूलकारमते हेतुनिष्ठसाध्याऽसामानाधिकरण्यमेव विरोधस्तदा तत्रातिव्याप्तिर्दुर्वारा स्यादत आह तदन्यत्वेनेति। विरोधान्यत्वेनानुमितिविरोधि विशेषणीयमिति तु सव्यभिचारस्य निरुक्तग्रन्थतात्पर्यं पर्यवसितम्।

❀ दीधितिः ❀

विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन ।

❀ गादाधरी ❀

नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि व्यभिचारादिघटितपदार्थान्तरेऽतिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह विशेषणीयञ्चेति । तादृशलक्षणमितिशेषः ।

❀ चन्द्रकला ❀

विशेषणीयञ्चेत्यादिदीधितिमवतारयति नन्वनतिरिक्तेति । प्रमेयत्वविशिष्टव्यभिचारनिश्चयस्य व्याप्तिग्रहप्रतिबन्धकत्वेऽपि तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायाः व्यभिचारत्वावच्छिन्नविषयितायामेव स्वीकरणीयतया मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितायाः तथात्वे मानाभावात् स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविवक्षणे मेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः सम्भवति, किन्त्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया एव पूर्वोक्तयुक्त्याऽवश्यकतया तादृशावच्छेदकत्वनिवेशपक्षे एव तत्रातिव्याप्तिं सूचयतीतिभावः । व्यभिचारेति । धूमवान् वह्नेरित्यादौ प्रमेयत्वविशिष्टो यो धूमाभाववद्वृत्तित्वविशिष्टो वह्निस्तत्र प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरित्यर्थः । तद्विषयकत्वस्य = तादृशव्यभिचारविषयकत्वस्य । प्रतिबन्धकतेति । तादृशव्यभिचारविषयकत्वरूपस्वव्यापकयथोक्तानुमिति-

❀ कलाविलासः ❀

विशिष्टद्वयाऽघटितत्वसहितलक्षणानुगमस्तु धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वम् । वैशिष्ट्यं स्वतादात्म्य-स्वविशिष्टनिश्चयत्वव्यापकप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वोभयसम्बन्धेन । निश्चये स्ववैशिष्ट्यं स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन । प्रतिबन्धकतावत्त्वञ्च धर्मे स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परया निश्चयनिष्ठावच्छेदकतानिरूपिता या सामानाधिकरण्यसम्बन्धावच्छिन्ना निश्चयनिष्ठावच्छेदकता तन्निरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्प्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । तादृशावच्छेदकतावत्त्वञ्च प्रतीतौ स्वनिरूपिता या विषयित्वनिष्ठा स्वाश्रयसमानाधिकरणज्ञानवृत्तित्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपिता अथ चावच्छिन्नत्वसम्बन्धावच्छिन्ना किञ्चिद्धर्मनिष्ठावच्छेदकतानिरूपिता विषयितात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्त्वसम्बन्धेनेति ध्येयमिति दिक् ।

विशिष्टान्तराऽघटितत्वशरीरघटकस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकरूपे

❀ गादाधरी ❀

तादृशविशिष्टेति। अनुमितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः। व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादिरूपतादृशरूपावच्छिन्नघटितत्वादसम्भव इत्यतोऽन्तरेति। स्वावच्छिन्नाविषयकप्रतीतिविषयता-

❀ चन्द्रकला ❀

प्रतिबन्धकताकत्वादित्यर्थः। तादृशेति। यद्रूपावच्छिन्नविषयकत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वमित्यादि लक्षणघटकीभूतं यद्रूपमित्यर्थः। अनुमितिप्रतिबन्धकतायामित्यादि। यद्रूपावच्छिन्नविषयकत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नमेव तादृशविशिष्टान्तरपदेन विवक्षणीयमित्यर्थः।

अन्तरपदप्रयोजनमाह व्यभिचारत्वेति। तथाचान्तरपदानुपादानेऽसम्भवःस्याद् व्यभिचारादेरपि तादृशविशिष्टपदोपात्तव्यभिचारादिघटितत्वात् स्वस्य स्वघटितत्वस्य सर्ववादिसिद्धत्वादित्याशयः।

ननु अन्तरपदं यदि भिन्नार्थकं तदा प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, शुद्धव्यभिचारादेः प्रमेयत्वविशिष्टव्यभिचाररूपविशिष्टव्यभिचारात्मकतया तद्भेदस्य तत्र विरहात् प्रमेयत्वविशिष्टव्यभिचारभेदस्य बाधादौ सत्त्वेऽपि तदघटितत्वस्य

❀ कलाविलासः ❀

प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वनिवेशं विहाय प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकतावच्छेदकत्वविवक्षणे निरवच्छिन्नस्वरूपसम्बन्धेन वह्न्यभावविशिष्टह्रदस्य ह्रदो वह्निमानित्यादौ बाधत्वमभ्युपगच्छतां मते तादृशबाधेऽव्याप्तिः।

तादृशबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् शुद्धस्वरूपसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वं तस्य प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकतावच्छेदकतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य निरवच्छिन्नस्वरूपसम्बन्धेन वह्न्यभावविशिष्टह्रदत्वरूपनिरुक्तबाधत्वे विरहात्।

नच स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तद्रूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपमेव स्वस्मिन् विशिष्टान्तराघटितत्वं लाघवाद्विवक्षणीयमिति वाच्यम्, तथा सति जलव्यापकवह्न्यभावसमानाधि-

* गादाधरी *

वच्छेदकावच्छिन्नार्थकम्, अतः शुद्धव्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराद्यभिन्नत्वेपि न क्षतिः । तद्घटितत्त्वं तदविषयकप्रतीतिविषयत्वम्, एवञ्चानुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् तदवच्छिन्नत्वं समुदितार्थः । यद्रूपावच्छिन्ने लक्षणं सङ्गमनीयं तदेव स्वपदार्थः ।

* चन्द्रकला *

तत्राऽनपायादित्यत आह स्वावच्छिन्नेति । लक्ष्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नार्थकमित्यर्थः । अतः = एतादृशरीत्या विशिष्टान्तरशब्दार्थनिर्वचनतः । न क्षतिरिति । न मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिरित्यर्थः । प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारत्वे सत्त्वाद् व्यभिचारत्वस्यैव विशिष्टान्तरत्वसम्भवादिति भावः ।

समुदितविशिष्टान्तराऽघटितत्वं निर्वक्ति एवञ्चेति । तथाच स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकम् अथच प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपावच्छिन्नविषयकत्वव्यापकम् प्रकृतानुमितिप्रतिबन्धकत्वं तादृशं वा यद्रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तादृशस्वात्मकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तादृशस्वात्मकतद्रूपवत्त्वमिति तु विशिष्टान्तराऽघटितत्वविशेषणघटितलक्षणार्थः पर्यवसितः । घटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावच्छेदकबाधत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकघटत्वरूपस्ववत्त्वस्य घटादौ सत्त्वात् तत्राऽतिव्याप्तिः स्यादतः स्वात्मकयद्रूपेत्यादिना विशेष्यदलस्य प्रवेशः । तथाच घटत्वाद्यवच्छिन्नविषयकनिश्चयत्वव्यापकताया अनुमितिप्रतिबन्धकतायां विरहान्न घटादावतिव्याप्तिरिति तु परमार्थः ।

* कलाविलासः *

करणजलवद्ध्रदेऽव्याप्त्यापत्तेः, जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकजलवद्ध्रदत्वावच्छिन्नविषयतासामान्यस्यैव प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतया तादृशजलवद्ध्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशसत्प्रतिपक्षतावच्छेदकेऽसत्त्वादिति ध्येयम् ।

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपे प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वनिवेशे पर्वतो वह्न्यभावव्याप्यवान् पर्वतीयवह्न्यभावादित्यत्र

❀ गादाधरी ❀

भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूता ये बाधत्वादयस्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसङ्गतिः।

❀ चन्द्रकला ❀

यद्रूपावच्छिन्ने इत्यादिना स्वपदार्थं निरुच्य लक्ष्ये लक्षणसमन्वयं प्रदर्शयति- भवति हीत्यादि। अयोगोलकं धूमवद् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्ट-वह्नित्वरूपव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकञ्च यद् धूमाभाववदयोगोलकत्वरूपं बाधत्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तादृशव्यभिचारत्वं तदवच्छिन्नविषयकनिश्चयत्वव्यापकतायाः अयोगोलकं धूमवद् धूमव्याप्यवह्निमच्चेत्याकारकसमूहालम्बनरूपप्रकृतानुमितिप्रतिबन्धकतायामक्षतत्वात् स्वपदेन धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वरूपव्यभिचारत्वस्योपादानसम्भवात्।

एवं ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वादिरूपबाधत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकम् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकञ्च यद् धूमाभावविशिष्टह्रदत्वादिरूपं स्वरूपासिद्धित्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतादृशबाधत्वाद्यवच्छिन्नविषयकनिश्चयत्व - व्यापकत्वस्यापि प्रकृतानुमितिप्रतिबन्धकतायां सत्त्वात् वह्न्यभाववद्ध्रदत्वादिरूपबाधत्वादेरपि स्वपदेन धर्तुं शक्यतया तादृशबाधादौ लक्षणसमन्वयः।

यत्र च पर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारमात्रस्यैव दोषता तत्र विशिष्टान्तरतावच्छेदकरूपाप्रसिद्धिरिति तु नाशंकनीयम्, तत्रापि वह्निवृत्तित्वविशिष्टधूमाभाववद्वृत्तित्वत्वादेर्विपरीतव्यभिचारत्वादेरेव विशिष्टान्तरतावच्छेदकत्वसम्भवादित्यनयैव रीत्याऽन्यत्रापि लक्षणसमन्वयो बोध्यः।

❀ कलाविलासः ❀

पर्वतीयवह्निमत्पर्वतरूपस्वरूपासिद्धावव्याप्तिः, स्वरूपासिद्धित्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्य वह्निमत्पर्वतत्वस्य प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशस्वरूपासिद्धित्वे विरहात्।

नच तथापि स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकरूपे प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्तिज्ञानाऽवृत्तिविषयितानिरूपकतावच्छेदकत्वविवक्षणान्न निरुक्ताव्याप्तिरिति वाच्यम्, तथा सति गौरवात्। यादृशस्थलविशेषे ह्रदो वह्निमानित्यनुमितेरव्यवहितपूर्वं वह्न्यभाव इत्याकारकं ज्ञानं न जायते तादृशस्थले

❀ गादाधरी ❀

मेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावान्न तदवच्छिन्नेऽतिव्याप्तिः ।

मेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना व्यभिचारत्वाद्यवच्छिन्ना-

❀ चन्द्रकला ❀

प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिं वारयति मेयत्वेति । तथाच मेयत्वविशिष्टव्यभिचारत्वं नैतादृशं स्वं प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकञ्च यद् व्यभिचारत्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वे विरहान्न प्रमेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्ने तादृशव्यभिचारेऽतिव्याप्तिरिति समुदितार्थः पर्यवसितः ।

ननु लक्ष्यतावच्छेदकत्वेनाभिमते स्वस्मिन् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वमनिवेश्य लाघवात् तादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयत्वमेव स्वाश्रये निवेशनीयमित्यत आह मेयत्वविशिष्टेति । मेयत्वादिना = मेयत्वादिधर्मेण । आदिना वाच्यत्वादिपरिग्रहः ।

व्यभिचारत्वेति । व्यभिचारत्वाद्यवच्छिन्नाऽविषयिणी या प्रमेयमित्याकारिका

❀ कलाविलासः ❀

वह्न्यभावविशिष्टह्रदेऽव्याप्तेश्च, वह्न्यभावत्वस्यापि तादृशविशिष्टान्तरतावच्छेदकत्वसम्भवादित्यस्मद्गुरुचरणाः ।

ननु लक्ष्यतावच्छेदके विशिष्टान्तरतावच्छेदकरूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशापेक्षया लाघवात् विशिष्टान्तरतावच्छेदकरूपानवच्छिन्नप्रकारतावच्छेदकत्वनिवेशनमेव समुचितमिति चेन्न, यादृशस्थलविशेषे घट इत्याकारकज्ञानं नियमतो बाधविषयकमेव भवति तत्र घटेऽतिव्याप्त्यापत्तेः, घटविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वाद् विशिष्टान्तरतावच्छेदकबाधत्वानवच्छिन्नप्रकारतावच्छेदकत्वाच्च ।

मन्मते तु घटत्वे बाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वविरहान्नातिव्याप्तिरितिध्येयम् ।

स्वावच्छिन्नाऽविषयकप्रतीतीति । अत्र प्रतीतिपदं निरर्थकमिति तु नाशंक्यम्, ज्ञानेच्छादिविषयताया अनुगतत्वाऽसम्भवे स्वावच्छिन्नविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकत्वनिवेशे महागौरवं स्यादिति तन्निवेशस्यावश्यकत्वात् ।

❀ गादाधरी ❀

प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्गगनाभाववन्मेयत्वादि तदाश्रयाविषयकप्रतीत्यप्रसिध्या व्यभिचारादौ तादृशप्रतीतिविषयत्वस्य दुरुपपादतयाऽव्याप्तिरतस्तदवच्छिन्नाविषयकत्वनिवेशः ।

❀ चन्द्रकला ❀

वच्छिन्नाऽविषयकप्रमेयप्रतीतिविषये व्यभिचारादौ व्यभिचारत्वस्य वर्त्तमानत्वेऽपि तादृशप्रतीतिविषयतावच्छेदकतायाःप्रमेयत्वादिनिष्ठतया तस्या व्यभिचारत्वादौ दुर्घटत्वात्, बाधत्वादेरेव व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकानुमितिप्रतिबन्धकतावच्छेदकधर्मस्वरूपत्वादित्याशयः ।

ननु स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्माश्रयाऽविषयकप्रतीतिविषयतावच्छेदकत्वमेव स्वस्मिन् विशेषणं लाघवात् कथं नाभिहितमित्यत आह प्रमेयमित्यादि । तथाच स्वस्मिन् तादृशधर्माश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे प्रमेयपक्षकगगनसाध्यकवाच्यत्वहेतुकस्थले गगनाभाववद्वृत्तित्वविशिष्टवाच्यत्वरूपव्यभिचारेऽव्याप्तिः, तादृशवाच्यत्वत्वरूपव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतादृशगगनाभावविशिष्टप्रमेयत्वरूपबाधत्वाश्रयीभूतप्रमेयाविषयकप्रतीतेरप्रसिद्धत्वात्, वस्तुमात्रविषयकप्रतीतेरेव प्रमेयविषयकत्वात् निरुक्तव्यभिचारत्वस्य स्वपदानुपात्तत्वादितिभावः । तदवच्छिन्नाऽविषयकत्वनिवेश इति । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षणे तु न

❀ कलाविलासः ❀

वच्छिन्नविषयकप्रतीतिविषयवृत्तिव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयवृत्तित्वस्य व्यभिचारत्वे सत्त्वेनाऽसम्भवानवकाशात् । अतः द्वितीयदलघटकावच्छेदकत्वदलस्य प्रथमं व्यावृत्तिरभिहिता । नच स्वानवच्छिन्नप्रकारतावच्छेदकस्य विशिष्टान्तरतावच्छेदकत्वसम्भवे स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्य तथात्वाभिधानं गौरवग्रस्तमिति वाच्यम्, व्यभिचारविशिष्टमेयत्वेऽतिव्याप्त्यापत्तेः, साक्षात्परम्परासाधारणावच्छेदकत्वस्य वक्तुमशक्यतया व्यभिचारविशिष्टमेयत्वानवच्छिन्नप्रकारतावच्छेदकं यद् बाधत्वादिकं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारविशिष्टमेयत्वे सत्त्वात् ।

अस्माकन्तु व्यभिचारविशिष्टमेयत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारविशिष्टमेयत्वे विरहान्नातिव्याप्तिरिति तु सुधीभिर्विवेचनीयम् ।

❁ गादाधरी ❁

अत्र च तादृशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोषतावच्छेदकधर्मे विशेषणतापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराविषयकत्वनिवेश एवोचितः ।

❁ चन्द्रकला ❁

तादृशव्यभिचारेऽव्याप्तिः, गगनाभाववत्प्रमेयत्वावच्छिन्नाऽविषयकगगनाभाववद्वृत्तिवाच्यत्वविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशवाच्यत्वत्वरूपव्यभिचारत्वे सत्त्वादिति तात्पर्यम् ।

यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वमित्यादिलक्षणघटकीभूते यद्रूपे स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपविशिष्टान्तराऽघटितत्वविशेषणं पृथक्प्रतीत्यादिनिवेशेन गौरवग्रस्तमतस्तादृशलक्षणघटकयद्रूपावच्छिन्नविषयकनिश्चय एव लाघवात् तादृशधर्मावच्छिन्नाऽविषयकत्वरूपमेव विशिष्टान्तराऽघटितत्वविशेषणं वक्तव्यमित्याह **अत्र चेति** । एतल्लक्षणघटके चेत्यर्थः ।

**तादृशेति** । अनुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्येत्यर्थः । **दोषतेति** । स्वस्मिन्नित्यादिः । **ज्ञानस्येति** । मूलोक्तेत्यादिः । **ज्ञानपदार्थे** = अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितयद्रूपावच्छिन्नविषयकनिश्चये । **एवोचित इति** । तथाच

❁ कलाविलासः ❁

ज्ञानस्येत्यत्र ज्ञानपदार्थे तादृशविशिष्टान्तराऽविषयकत्वनिवेश एवोचित इति ।

ननूक्तरीत्या विशेष्यदलघटकनिश्चये विशिष्टान्तरतावच्छेदकरूपावच्छिन्नाऽविषयकत्वविवक्षणे किं लाघवमितिचेन्न ? लक्ष्यतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चये विशिष्टान्तरतावच्छेदकरूपावच्छिन्नाविषयकत्वविवक्षणेऽपि तादृशरूपावच्छिन्नाऽविषयकयद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धो व्यापकतारूपोऽभावो लक्षणे न निवेश्यते अपितु केवलं यद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्याकारक एवाभावः । तथाच प्रकृतानुमितिप्रतिबन्धकतावृत्तिनिरुक्तव्यापकतारूपाभावीयप्रतियोगितानिरूपितपरम्परया या निश्चयनिष्ठावच्छेदकता तद्विशिष्टरूपवत्त्वं हेत्वाभासत्वम् । वैशिष्ट्यं स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वसमानाधिकरणो यः किञ्चिद्रूपावच्छिन्नविष-

❋ गादाधरी ❋

एवञ्च निष्कृष्टवक्ष्यमाणकल्पे यद्विषयकनिश्चयस्येत्यत्र निश्चय एव तन्निवेश्यं लाघवादित्यवधेयम् ।

❋ चन्द्रकला ❋

स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदको यो धर्मस्तदवच्छिन्नाऽविषयकस्वात्मकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकप्रकृतानुमितिप्रतिबन्धकताकस्वात्मकतद्रूपवत्त्वं हेत्वाभासत्वमित्येवं विशिष्टान्तराऽघटितत्वसहितलक्षणार्थः पर्यवसितः ।

अत्रवदन्तिकल्पेऽपि निश्चय एव विशिष्टान्तराऽघटितत्वं न तु यद्रूपे इत्याह एवञ्चेति। अत्रापि निश्चय एव विशिष्टान्तराऽविषयकत्वरूपविशिष्टान्तराघटितत्वविवक्षणे चेत्यर्थः। निष्कृष्टेति। वक्ष्यमाणात्रवदन्तिकल्पे इत्यर्थः। तन्निवेश्यम् = विशिष्टान्तराऽघटितत्वं निवेश्यम्, अधिकमन्यत्रानुसन्धेयम्।

❋ कलाविलासः ❋

यकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्रूपावच्छिन्नविषयित्वं नास्तीतिप्रतीतिसिद्धाऽभावस्तदीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावत्त्वोभयसम्बन्धेनेति लाघवस्यावश्यकत्वात् ।

नचैवं विशिष्टान्तरतावच्छेदकत्वघटकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वघटकनिश्चयेऽपि लाघवात् स्वावच्छिन्नाऽविषयकत्वनिवेश एव समुचित इति वाच्यम्, तथा सति यादृशस्थलविशेषे अप्रामाण्यज्ञानानास्कन्दितव्यभिचारविषयकं ज्ञानं नियमतो मेयत्वविशिष्टव्यभिचारविषयकं समूहालम्बनमेव जायते, शुद्धव्यभिचारविषयकज्ञानन्तु अप्रामाण्यज्ञानास्कन्दितमेव, तादृशस्थले मेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यापत्तेः । मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकाप्रामाण्यज्ञानानास्कन्दितव्यभिचारत्वावच्छिन्नविषयकनिश्चयस्याऽप्रसिद्धतया व्यभिचारत्वस्य विशिष्टान्तरतावच्छेदकरूपपदेन धर्तुमशक्यत्वादिति ध्येयम् ।

विशिष्टान्तराघटितत्वसहितलक्षणानुगमस्तु धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वमिति, वैशिष्ट्यं स्वतादात्म्य-स्वविशिष्टनिश्चयत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतावत्त्वोभयसम्बन्धेन, स्ववैशिष्ट्यञ्च निश्चये स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन, प्रतिबन्धकतावत्त्वञ्च स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्धर्मवत्त्वसम्बन्धेन, धर्मवत्त्वञ्च, स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्व—

॥ गादाधरी ॥

अथ धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधादेर्व्यभिचारादिघटिततया तत्राव्याप्तिः । न च यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तरावच्छिन्नाघटितत्वस्य विवक्षितत्वान्न दोषः, व्यभिचारस्य उक्तबाधविषयकत्वा-

॥ चन्द्रकला ॥

प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वनिवेशस्यावश्यकत्वश्रौव्ये पुनः धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽव्याप्तिः, तादृशवह्निमत्त्वरूपबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकधूमाभाववद्वृत्तिवह्नित्वरूपव्यभिचारत्वस्य तादृशवह्निमत्त्वस्य वा धूमव्याप्तिविषयकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतया तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशबाधत्वे विरहात् तादृशबाधत्वस्य स्वपदेन धर्त्तुमशक्यत्वादित्याशंकते अथेति ।

धूमव्यभिचारिवह्निमात्रस्य पक्षत्वे तादृशवह्निना सह धूमादेः संयोगसम्भवान्निरुक्तवह्नित्वावच्छेदेन धूमाभावस्य बाधत्वं न सम्भवति, धूमव्यभिचारिवह्निमतः पक्षत्वे तु तादृशवह्निमत्त्वावच्छेदेन वह्निमत्त्वसामानाधिरण्येनापि धूमाभावस्य बाधताया निर्विवादतया अवच्छेदावच्छेदेन सामानाधिकरण्येन च बाधप्रदर्शनाय धूमव्यभिचारिवह्निमतः पक्षत्वानुसरणमिति ध्येयम् । तत्र = धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपे बाधे ।

ननु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतो यःस्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदको धर्मस्तदवच्छि-

॥ कलाविलासः ॥

स्ववृत्तित्वोभयसम्बन्धेन, वृत्तित्वमपि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसम्बन्धेनेति ध्येयम् ।

धूमव्यभिचारीति । नच धूमव्यभिचारिवह्नेरेव पक्षत्वसम्भवे तादृशवह्निमतः पक्षत्वानुसरणं निरर्थकमितिवाच्यम् , धूमव्यभिचारिवह्न्यवच्छेदेन धूमाभावस्य विद्यमानतया पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्येन च बाधप्रदर्शनार्थमेव तादृशवह्निमतः पक्षत्वानुसरणस्यावश्यकत्वात् तादृशवह्नेः पक्षत्वे वह्नित्वरूपपक्षतावच्छेदकावच्छेदेन धूमाभावस्याऽसत्त्वात् पक्षतावच्छेदकावच्छेदेन बाधस्यासम्भवादिति वदन्ति ।

प्रथमनचकल्पे स्वावच्छिन्नविषयकत्वावच्छिन्नेत्यत्र तादृशविषयकत्वनिष्ठायाः

❀ गादाधरी ❀

न्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकविषयिताकत्वेऽपि तादृशबाधविषयकत्वाऽन्यूनवृत्तिप्रतिबन्धकतासामान्यान्तर्गतानुमितिप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तादृशघटितत्वस्याकिञ्चित्करत्वादिति वाच्यम्,

❀ चन्द्रकला ❀

न्नाविषयकप्रतीतिविषयतावच्छेदकत्ववत्त्वमेव विशिष्टान्तराऽघटितत्वसहितलक्षणार्थो वक्तव्यः, तादृशप्रतिबन्धकतात्वव्यापकत्वञ्च विषयितायां व्यापकत्वसम्बन्धेन, तथाच न व्यभिचारघटितनिरुक्तबाधेऽव्याप्तिः, धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमव्यभिचारिवह्नित्वादौ सत्त्वेऽपि तादृशबाधत्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वस्य धूमव्यभिचारिवह्निमद्धर्मिकधूमानुमितिप्रतिबन्धकतायामपि सत्त्वात् तत्र व्यापकतासम्बन्धेन धूमव्यभिचारिवह्न्यादिविषयिताया विरहेण तादृशप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकत्वस्य तत्राऽवर्त्तमानत्वात्, धूमव्यभिचारिवह्नित्वादेर्विशिष्टान्तरतावच्छेदकत्वाऽसम्भवात्।

एवञ्च धूमव्यभिचारिवह्निमद्वृत्तिधूमाभावत्वरूपविपरीतबाधत्वमेव विशिष्टान्तरतावच्छेदकं तत्र धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य, तादृशस्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकातात्वव्यापकविषयितानिरूपकतावच्छेदकत्वस्य च विद्यमानत्वात् तादृशपक्षवृत्तिधूमाभावत्वरूपविपरीतबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतं यत् धूमाभावद्धूम-

❀ कलाविलासः ❀

प्रतिबन्धकतावच्छेदकतायाः प्रतिबन्धकतासामान्यावच्छेदकमित्यत्राऽपि प्रतिबन्धकतावच्छेदकताया अनतिरिक्तवृत्तित्वरूपमेव वक्तव्यम्, द्वितीयावच्छेदकतायाः स्वरूपसम्बन्धरूपत्वे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, तादृशसत्प्रतिपक्षतावच्छेदकरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् जलवद्ध्रदत्वं तस्य प्रकृतानुमितिप्रतिबन्धकतासामान्यनिरूपितस्वरूपसम्बन्धरूपावच्छेदकतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशसत्प्रतिपक्षतावच्छेदके विरहात्। प्रथमावच्छेदकतायाःस्वरूपसम्बन्धरूपत्वे ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादिरूपबाधादावव्याप्तिः, निरुक्तबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकरूपाऽप्रसिद्धेः, अभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इत्याकारज्ञानसाधारणतादृशप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वस्य कुत्राप्यवर्त्तमानत्वादिति ध्येयम्।

❀ गादाधरी ❀

[ नच यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्त्वस्यविवक्षितत्वान्न दोषः ]

❀ चन्द्रकला ❀

व्यभिचारिवह्निमत्त्वरूपम् स्वं तादृशस्ववत्त्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपे बाधेऽक्षतत्वान्न निरुक्तव्यभिचारघटितबाधेऽव्याप्तिः ।

भवति हि ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादौ लक्षणसमन्वयः । तादृशह्रदत्वरूपस्वात्मकबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यद् ध्रदवृत्तिवह्न्यभावत्वरूपविपरीतबाधत्वं तस्य वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वव्यापकतादृशविपरीतबाधविषयितानिरूपकतावच्छेदकतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्ववत्त्वस्य वह्न्यभावविशिष्टह्रदत्वेऽनपायात् ।

नच विपरीतबाधनिश्चयनिष्ठा प्रतिबन्धकता भिन्नैवेति वाच्यम्, स्वरूपसम्बन्धावच्छिन्नाधेयत्वसंसर्गातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वावच्छिन्नविषयतानिरूपितस्वरूपसंसर्गातिरिक्तसम्बन्धानवच्छिन्नवह्न्यभावत्वावच्छिन्नविषयताशालिनिश्चयत्वेन बाधनिश्चयद्वयनिष्ठायाः प्रतिबन्धकताया ऐक्यसम्भवादिति ध्येयम् । तथाच सर्वत्रैव विपरीतव्यभिचारबाधत्वादिकमादायैव लक्षणसमन्वयःकरणीय इत्यभिमानेन निरुक्ताव्याप्तिवारणाय प्रथमनचकल्पमाह यद्रूपेति । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकेत्यादिः । स्वावच्छिन्नेति । स्वं लक्ष्यतावच्छेदकत्वेनाभिमतो धर्मः, तदवच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतात्वव्यापकमित्यर्थः । सामान्यपदस्य व्यापकत्वातिरिक्तार्थकताया वक्तुमशक्यत्वादिति भावः । यद्रूपावच्छिन्नविषयकत्वे तादृशप्रतिबन्धकतात्वव्यापकत्वञ्च व्यापकतासम्बन्धेनेति ध्येयम् ।

तादृशेति । तादृशं यद्रूपात्मकं यत् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकरूपं रूपान्तरं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वरूपस्य विशिष्टान्तराऽघटितत्वस्येत्यर्थः। विवक्षितत्वादिति । स्वस्मिन्नित्यादिः । न दोषः=न व्यभिचारघटितनिरुक्तबाधेऽव्याप्तिः ।

❀ कलाविलासः ❀

प्रथमनचकल्पे यदि उभयत्रैव प्रतिबन्धकतावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं तदाऽसम्भववारणाय स्वस्मिन् विशिष्टान्तरतावच्छेदकरूपे चाऽव्यापकीभूतविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वमपि निवेश्यम्, तथाच विपरीतबाधत्व-व्यभिचारत्वादिकमादायैव सर्वत्र लक्षणसमन्वयःकरणीय इति भावः ।

नचैवं ह्रदो वह्न्यभाववान् ह्रदे वह्न्यभाव इत्याकारकज्ञानद्वयसाधारणप्रति-

*** गादाधरी ***

[व्यभिचारस्य उक्तबाधविषयकत्वान्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तद्दशघटितत्वस्याकिञ्चित्करत्वादिति वाच्यम् ]

*** चन्द्रकला ***

निरुक्तकल्पे प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिशंका तु नास्त्येव, मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वावच्छिन्नविषयितायाः प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकव्याप्तिग्रहप्रतिबन्धकतात्वव्यापकतया व्यभिचारत्वादेरेव तादृशविशिष्टान्तरतावच्छेदकत्वेन तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य तादृशविशिष्टव्यभिचारत्वे विरहात् प्रमेयत्वविशिष्टव्यभिचारत्वस्य स्वपदेनोपादानाऽसम्भवादित्यतस्तादृशातिव्याप्तिवारणकारणं अत्र नाभिहितम् ।

व्यभिचारत्वस्य विशिष्टान्तरतानवच्छेदकत्व एव व्यभिचारघटितबाधे नाऽव्याप्तिरित्यभिमानेन तत्राव्याप्त्यभावे हेतुमाह व्यभिचारेति । व्यभिचारत्वावच्छिन्नस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वावच्छिन्नविषयकत्वव्यापकव्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वेऽपीत्यर्थः । तादृशेति । निरुक्तबाधत्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतात्ववति अनुमितिप्रतिबन्धकत्वे व्यभिचारविषयिताया व्यापकत्वसम्बन्धेन विरहेण तादृशबाधत्वरूपस्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतात्वव्यापकविषयिताकत्वविरहेणेत्यर्थः ।

तद्घटितत्वस्य=धूमव्यभिचारिवह्न्यादिघटितत्वस्य । अकिञ्चित्करत्वादिति । तथाच व्यभिचारत्वस्य विशिष्टान्तरतानवच्छेदकतया कुतो व्यभिचारघटितबाधेऽव्याप्तिरिति भावः ।

*** कलाविलासः ***

बन्धकत्वं दुर्वचमितिवाच्यम् , स्वरूपत्वावच्छिन्नसंसर्गातिरिक्तसम्बन्धानवच्छिन्नवह्न्यभावत्वावच्छिन्नविषयतानिरूपिता या स्वरूपसंसर्गावच्छिन्नाधेयत्वसंसर्गातिरिक्तसम्बन्धानवच्छिन्ना ह्रदत्वावच्छिन्नविषयता तच्छालिनिश्चयत्वेन तादृशज्ञानद्वयसाधारणप्रतिबन्धकतायाःउपादानसम्भवादित्यपि केचित् ।

प्रथमनवकल्पस्यानुगमस्तु-धर्मविशिष्टधर्मवत्त्वमिति, वैशिष्ट्यञ्च स्वतादात्म्य-स्वविशिष्टनिश्चयत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्ववत्त्वोभयसम्बन्धेन,स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन, तादृशप्रतिबन्धकतात्ववत्त्वञ्च स्वव्यापकविषयितानिरूपकतावच्छेदकधर्मवत्त्वसम्बन्धेन, विषयितायां स्वव्यापकत्वन्तु व्यापकत्वसम्बन्धावच्छिन्नम्, तादृशधर्मवत्त्वञ्च स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्व-स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वमपि स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्व-स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीय-

❀ चन्द्रकला ❀

अत्र कल्पे विपरीतबाधत्वव्यभिचारत्वादिकमादाय यदि सर्वत्र लक्षणसमन्वयः क्रियते तदा बाधविशिष्टव्यभिचारेऽतिव्याप्तिः स्यात्, बाधविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् व्यभिचारविशिष्टबाधत्वं तस्य बाधविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वव्यापकविषयिता - निरूपकतावच्छेदकतया विशिष्टान्तरतावच्छेदकयद्रूपात्मकत्वेन तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकबाधविशिष्टव्यभिचारत्वरूपस्ववत्त्वस्य बाधविशिष्टव्यभिचारे सत्त्वात्।

अतो निरुक्तातिव्याप्तिवारणाय विशिष्टान्तरतावच्छेदकात्मकलक्षणघटकयद्रूपे स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकत्वस्य च यथा विशेषणत्वं तथा-स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्व - मपि तत्र विशेषणं देयम्, एवञ्च न बाधविशिष्टव्यभिचारेऽतिव्याप्तिः, तादृशविशेषणत्रयविशिष्टविशिष्टान्तरतावच्छेदकरूपस्याऽप्रसिद्धत्वात्।

व्यभिचारविशिष्टबाधत्वे बाधविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य, बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकत्वस्य च सत्त्वेऽपि बाधविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयित्वाव्यापकीभूता या व्यभिचारविशिष्टबाधत्वावच्छिन्ना विषयिता तच्छून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वस्य तत्राऽसत्त्वात्।

बाधविशिष्टव्यभिचारत्वे तादृशव्यभिचारत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य केवलबाधत्वे व्यभिचारत्वे वा बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदक - त्वस्य च विरहादन्यस्य कस्यापि धर्मस्य यद्रूपपदेनोपादानाऽसम्भवात्।

तथा च ह्रदो धूमवान् वह्नेरित्यादौ सर्वत्र बाधव्यभिचारादावसम्भवः, धूमाभावविशिष्टह्रदत्वरूपबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकह्रदवृत्तिधूमाभाव - त्वरूपविरीतबाधत्वादौ तादृशबाधत्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकत्वसत्त्वेऽपि धूमाद्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयित्वाऽव्यापकीभूतह्रदवृत्तिधूमाभावत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्व-

❀ कलाविलासः ❀

त्वोपलक्षितविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन।

द्वितीयनवकल्पेऽपि अवच्छेदकत्वद्वयमनतिरिक्तवृत्तित्वरूपमेव वाच्यमन्यथा द्वितीयावच्छेदकतायाः स्वरूपसम्बन्धरूपत्वे जलव्यापकवह्न्यभावसमानाधिकरण-

❀ गादाधरी ❀

व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याप्रसिद्ध्याऽसम्भवात्, व्यभिचारत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तथाविधविषयितानिरूपकतावच्छेदकत्वात्, तस्य च व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्।

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदक-

❀ चन्द्रकला ❀

विरहादन्यस्य तादृशविशेषणत्रयाक्रान्तस्य धर्मस्याऽप्रसिद्धतया सर्वत्र विशिष्टान्तरतावच्छेदकधर्मस्याऽप्रसिद्धेरित्याशयेन निरुक्तकल्पं दूषयति व्यभिचारत्वादीति। लक्ष्यतावच्छेदकीभूतेत्यादिः।

अप्रसिद्धिमेव दर्शयति व्यभिचारमेयत्वेति। तस्य = व्यभिचारत्वस्य मेयत्वविशिष्टव्यभिचारत्वस्य च। विपरीतव्यभिचारत्वस्य तु व्यभिचारत्वाद्यवच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वविरहादिति पूरणीयम्। निरुक्तव्यभिचारघटितवाधेऽव्याप्तिवारणाय द्वितीयनचकल्पमाह स्वावच्छिन्नेति। स्वं लक्ष्यतानवच्छेदकप्रमेयत्वविशिष्टवाधत्व-प्रमेयत्वविशिष्टव्यभिचारत्वादिकम् .। तथाच स्वावच्छिन्नविषयकत्वव्यापकःप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकविषियतानिरूपकतावच्छेदको यत्किञ्चिद्धर्मःस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदको यस्य स्वस्य एवं भूतं यत् यत् स्वं तत्तदवच्छिन्नविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपवत्त्वं समुदितलक्षणार्थःपर्यवसितः। भवति हि ह्रदो वह्निमान्धूमादित्यादौ वह्न्यभाववद्ह्रदरूपबाधे धूमवान्वह्नेरित्यादौ च धूमाभाववद्वृत्तित्वविशिष्ट-

❀कलाविलासः ❀

जलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, स्वपदेन निरुक्तसत्प्रतिपक्षतावच्छेदकधर्मस्यापि धर्त्तुं शक्यत्वात्, एवञ्च प्रथमावच्छेदकतायाःस्वरूपसम्बन्धरूपत्वे पूर्ववदेव वह्न्यभावविशिष्टह्रदादावव्याप्तिः, मेयत्वविशिष्टबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकनिरुक्तबाधत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकस्य पूर्वोक्तयुक्त्याऽप्रसिद्धेः। सुतरामेवाव्यापकीभूतविषयिताशून्यत्वमपि उभयत्र निश्चये विवक्षणीयमिति भाव्यम्।

यद्यपि विशिष्टान्तराऽघटितत्वविवक्षणे बाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारविशिष्टप्रमेयत्वं व्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकञ्च बाधविशिष्टमेयत्वादिकं तदाश्रयाऽविषयकप्रतीत्यप्रसिद्ध्यैवाऽस-

* कलाविलासः *

म्भवसम्भवे धूमव्यभिचारिवह्निमान् धूमवान्वह्नेरित्यत्र बाधेऽव्याप्त्यभिधानमनुचितम्। तथापि स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपविशिष्टान्तरतावच्छेदकधर्मे प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकतावच्छेदकत्वस्यापि विवक्षणीयतया न तादृशप्रमेयत्वादिकमादायाऽसम्भव इति सुतरामव्याप्त्यभिधानम्। नचैवं प्रसिद्धवह्न्यभाववद्ध्रदरूपबाध एवाव्याप्तिः, तादृशह्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यद् वह्न्यभावव्याप्यवद्ध्रदत्वं तदाश्रयाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य निरुक्तबाधत्वे विरहादिति वाच्यम्, वह्न्यभावव्याप्यवद्ध्रदत्वाश्रयाऽविषयकं यद् वह्न्यभाववद्ध्रदत्वेन घटावगाहिज्ञानं तद्विषयतावच्छेदकत्वस्य तादृशह्रदत्वरूपबाधत्वे सत्त्वात्तत्राऽव्याप्त्यसम्भवादिति ध्येयम्। द्वितीयनचकल्पे स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वं यत्किञ्चिद्रूपेऽनिवेश्य स्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य तत्र विवक्षणे यादृशस्थले व्यभिचारविषयकं ज्ञानं नियमतो बाधविषयकमेव भवति तादृशस्थले व्यभिचारेऽव्याप्तिः, बाधत्वरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वस्य स्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य च व्यभिचारत्वे सत्त्वेन स्वपदेन बाधत्वस्योपादातुं शक्यतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य व्यभिचारत्वे विरहात्।

नच तादृशं यद् यत् स्वं तदनवच्छिन्नप्रकारतावच्छेदकत्वमपि लक्ष्यतावच्छेदकीभूतयद्रूपे विवक्षणीयम्, तथासति न तादृशस्थले व्यभिचारेऽव्याप्तिः, तादृशबाधत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य व्यभिचारत्वे सत्त्वादिति वाच्यम्, यत्र मेयत्वविशिष्टबाधविषयकं ज्ञानं नियमतो मेयत्वविशिष्टव्यभिचारविषयकमेव भवति तत्र मेयत्वविशिष्टबाधेऽतिव्याप्त्यापत्तेः। मेयत्वविशिष्टबाधत्वरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गतमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्य बाधत्वे विरहेण स्वपदेन मेयत्वविशिष्टबाधत्वस्य धर्त्तुमशक्यतया स्वपदोपात्तमेयत्वविशिष्टव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य मेयत्वविशिष्टबाधत्वेऽनपायात्। अस्मन्मते तु मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टबाधत्वे विरहान्नातिव्याप्तिः। तथाच स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयस्वावच्छिन्नविषयिताव्यापकप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदकयद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदको यःकश्चिद्धर्मः स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदको यस्य स्वस्य एवम्भूतं यद् यत् स्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वमेव लक्ष्यतावच्छेदकयद्रूपविशेषणमिति भावः।

* गादाधरी *

विषयितानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवं भूतं यद्यत्वं "प्रमेयत्वविशिष्टव्यभिचारत्वादि" तद-

* चन्द्रकला *

वह्निरूपे व्यभिचारे च लक्षणसमन्वयः, प्रमेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वादिरूपस्वावच्छिन्नविषयकत्वव्यापकपक्षधर्मिकसाध्यानुमितिप्रतिबन्धकतात्वस्य व्यापकतासम्बन्धेन व्यापिका या शुद्धबाधादिविषयिता तन्निरूपकतावच्छेदकयत्किञ्चिद्धर्मस्य वह्न्यभावविशिष्टह्रदत्वादेःप्रमेयत्वविशिष्टतादृशबाधत्वादिरूपस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया स्वपदग्राह्यतादृशप्रमेयत्वविशिष्टबाधत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकवह्न्यभावविशिष्टह्रदत्वरूपयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायां सत्वात्तादृशतद्रूपवत्त्वस्य वह्न्यभावविशिष्टह्रदादावक्षतत्वात्। एवं प्रमेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वादिकं स्वपदेनादाय अनयैव रीत्या लक्षणसमन्वयो बोध्यः।

धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽपि नाव्याप्तिः, तादृशबाधत्वस्य तादृशबाधत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वाऽसम्भवात् स्वपदेन निरुक्तव्यभिचारघटितबाधत्वस्य धर्त्तुमशक्यत्वात्, प्रमेयत्वविशिष्टव्यभिचारघटितबाधत्वमेव स्वपदेनोपादाय पूर्ववत्तत्रापि लक्षणसमन्वयसम्भवात्। मेयत्वविशिष्टव्यभिचारादौ तु अतिव्याप्तिशंका नास्त्येव, प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाविषयकत्वव्यापकव्याप्तिग्रहप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकीभूतस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्व्यभिचारत्वकं यत् स्वं प्रमेयत्वविशिष्टव्यभिचारत्वादिकं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वस्मिन्नसत्वेन तादृशयद्रूपपदेन प्रमेयत्वविशिष्टव्यभिचारत्वादेःउपादातुमशक्यत्वात्।

प्रमेयत्वविशिष्टव्यभिचारत्वादेः मेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकधर्मस्य स्वाव-

* कलाविलासः *

अथैवमुक्तकल्पे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षेऽव्याप्तिः, तादृशजलवद्ह्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्य जलव्यापकवह्न्यभावकालीनजलवद्ध्रदत्वस्य तादृशसत्प्रतिपक्षतावच्छेदकरूपावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकतया स्वपदेन जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वस्यैवोपादानसम्भवादितिचेन्न ? अत्रापि तादृशयत्किञ्चिद्रूपावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्य विवक्षणं यत्वादुक्ताव्याप्तेरसम्भवादिति केचित्।

❁ गादाधरी ❁

वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यम्, तथा सति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ बाधत्वाद्यव-

❁ चन्द्रकला ❁

च्छिन्नाऽविषयकप्रतीतिविषयतानवच्छेदकत्वात् प्रमेयत्वविशिष्टव्यभिचारत्वादेः कस्यापि स्वपदेनोपादानाऽसम्भवादसम्भवः स्यादतस्तादृशनिरूपकतावच्छेदकः कश्चिदित्युक्तम्। तथाच यत्किञ्चित्तादृशधर्मस्य व्यभिचारत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वात् स्वपदेन तादृशविशिष्टव्यभिचारत्वमादायैव नाऽसम्भव इति ध्येयम्।

तादृशस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदधर्मवत्त्वमात्रस्य लक्षणार्थत्वे यद्रूपावच्छिन्नविषयकनिश्चयत्वेत्यादिना विशेष्यदलाऽप्रवेशे घटादावतिव्याप्तिः, स्वपदग्राह्यमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकघटत्वादि-धर्मवत्त्वस्य घटादौ सत्त्वात्। विशेष्यदलप्रवेशे तु न तत्राऽतिव्याप्तिः, घटत्वाद्यवच्छिन्ननिश्चयस्य प्रकृतानुमितावप्रतिबन्धकत्वादित्यन्यत्र विस्तरः।

विवक्षणीयतयेति। विशिष्टान्तराघटितत्वदलेनेत्यादिः। निरुक्तद्वितीयनचकल्पं दूषयति तथासतीति। निरुक्तरीत्या लक्षणार्थस्य निर्वचने सतीत्यर्थः। तथाचोक्तकल्पे धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाध एवाव्याप्तिः, धूमव्यभिचारिवह्निमत्त्वरूपस्वावच्छिन्नविषयकत्वव्यापकव्याप्तिग्रहनिरूपितप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकतादृशस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकीभूतो धूमव्यभिचारिवह्नित्वरूपः कश्चिद्धर्मो यस्य धूमव्यभिचारिवह्निमत्त्वस्य एवम्भूतं यत् स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य लक्ष्यतावच्छेदकयद्रूपात्मकधूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वे विरहादित्याह धूमव्यभिचारीति।

बाधत्वेति। धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वाद्यवच्छिन्नार्थकम्।

❁ कलाविलासः ❁

द्वितीयनचकल्पस्यानुगमस्तु धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यं स्वतादात्म्य-स्वविशिष्टनिश्चयत्वव्यापकप्रकृतानुमितिप्रतिबन्धकताकालीनधर्मवृत्तिधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, धर्मवृत्तित्वं धर्मे स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकविषयितानिरूपकतावच्छेदकत्व-स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्व-स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयविषयितानिरूपकतावच्छेदकत्वैतत्त्रितयसम्बन्धेन।

धूमव्यभिचारीति। नच विशेष्यदलघटकप्रतिबन्धकतावच्छेदकत्वस्य स्वपदार्थ-

* गादाधरी *

च्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वकत्वादव्याप्तेर्दुर्वारत्वात् ।

नच स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभू-

* चन्द्रकला *

स्वावच्छिन्नेति । धूमव्यभिचारिवह्निमत्त्वरूपस्वावच्छिन्नार्थकम् । दुर्वारत्वादिति । स्वपदेन पक्षतावच्छेदकधूमव्यभिचारिवह्निमत्त्वस्य धर्तुं शक्यत्वादिति भावः ।

निरुक्ताव्याप्तिवारणार्थं पुनरपि तृतीयनचकल्पमाह स्वावच्छिन्नेति । स्वं लक्ष्यतावच्छेदकत्वेनाभिमतो धर्मः । तथाच स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वस्य व्यापकतासम्बन्धेन व्यापकीभूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नाऽनिरूपितं तादृशतादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तादृशस्ववत्त्वं समुदितलक्षणार्थः पर्यवसितः ।

ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वात्मकबाधत्वरूपस्वावच्छिन्नविषयकत्वव्यापकतादृशसाध्यानुमितिप्रतिबन्धकतात्वव्यापकीभूतायां वह्न्यभावविशिष्टयत्किञ्चिद्ध्रदविषयितायां वह्न्यभावविशिष्टह्रदत्वावच्छिन्ननिरूपितत्वस्यावश्यकतया यादृशयादृशधर्ममध्ये तादृशवह्न्यभावत्वादेरप्रविष्टत्वात् घटत्वपटत्वादेरेव यादृशयादृशधर्मान्तर्गततया तादृशघटत्वाद्यवच्छिन्नाऽनिरूपितत्वस्य तत्राऽक्षतत्वात् तादृशघटत्वपटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकवह्न्यभावविशिष्टह्रदत्ववत्त्वरूपस्ववत्त्वस्य वह्न्यभावविशिष्टह्रदादौ वर्त्तमानत्वात् तादृशबाधादौ लक्षणसमन्वयः । एवमन्यत्राऽपि ।

❀ कलाविलासः ❀

विशेषणत्वोपगमादेव स्वपदेन धूमव्यभिचारिवह्निमत्त्वमादाय व्यभिचारघटितबाधेऽव्याप्तिवारणसम्भवे द्वितीयनचकल्पे तत्राऽव्याप्तिदानमसंगतमिति वाच्यम्, तथा सति बाधविशिष्टव्यभिचारेऽतिव्याप्त्यापत्तेः, धूमव्यभिचारिवह्निमत्त्वस्येव बाधवैशिष्ट्यस्यापि स्वपदेन धर्तुमशक्यत्वात् । प्रकृतेबाधवैशिष्ट्यमादायैव तत्रातिव्याप्तेर्वारितत्वादिति ध्येयम् ।

तृतीयनचकल्पे अवच्छेदकताद्वयमेवात्र पूर्ववदनतिरिक्तवृत्तित्वरूपं वक्तव्यम्,-अन्यथा पूर्ववदेव द्वितीयावच्छेदकतायाःस्वरूपसम्बन्धरूपत्वे जलव्यापकवह्न्यभाव-

* गादाधरी *

तयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नाऽनिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्रूपावच्छिन्नत्वमेव समुदितार्थः ।

* चन्द्रकला *

प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वव्यापकव्याप्तिग्रहप्रतिबन्धकतात्वव्यापकशुद्धव्यभिचारत्वावच्छिन्ननिरूपितविषयितायाः प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपिततया यादृशयादृशधर्मान्तर्गतप्रमेयत्वविशिष्टव्यभिचारत्वा-

* कलाविलासः *

समानाधिकरणजलवद्ध्रदेऽव्याप्तिः, जलवद्ध्रदत्वावच्छिन्नविषयितायाःतादृशसत्प्रतिपक्षतावच्छेदकधर्मावच्छिन्नाऽनिरूपितत्वात् । एवञ्च प्रथमावच्छेदकतायाःस्वरूपसम्बन्धरूपत्वे ह्रदो वह्निमानित्यादौ पूर्ववदेवाव्याप्तिः, ज्ञानविशिष्टज्ञानादिसाधारणानुमितिप्रतिबन्धकतासामान्यानतिरिक्तवृत्तियत्किञ्चिद्विषयित्वाप्रसिद्धेः ।

अथोक्तकल्पेऽसम्भवः, बाधादिविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकतादृशबाधादिविषयिताया बाधाद्येकदेशवृत्तिधर्मावच्छिन्नाऽनिरूपिततया तादृशधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधत्वादौ विरहादितिचेन्न, साक्षात्परम्परासाधारणनिरूपितत्वस्याभ्युपगमे बाधाद्येकदेशवृत्तिधर्मावच्छिन्नाऽनिरूपितत्वस्य बाधविषयितायामसम्भवात्, तादृशधर्मावच्छिन्नाऽनिरूपितत्वमनिवेश्य तादृशधर्मानवच्छिन्नप्रकारतावच्छेदकत्वस्य तादृशधर्मानवच्छिन्नविषयितानिरूपकतावच्छेदकत्वस्य वा विवक्षणे यादृशस्थलविशेषे मेयत्वविशिष्टव्यभिचारविषयकं ज्ञानं नियमतो बाधविषयकमेव भवति तत्र प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, केवलव्यभिचारत्वावच्छिन्ननिरूपितविषयितायाः मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गतबाधनिश्चयप्रतिबन्धकतानवच्छेदकतया यत्किञ्चिद्विषयितापदेन व्यभिचारविषयिताया धर्त्तुमशक्यत्वात्, तादृशसमूहालम्बनज्ञानीयस्वावच्छिन्नविषयिताया धर्त्तव्यत्वेऽपि तत्र बाधत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य बाधत्वानवच्छिन्नविषयितानिरूपकतावच्छेदकत्वस्य बाधत्वावच्छिन्नानिरूपितत्वस्य सत्त्वेन तादृशविशेषणानां स्वस्मिन् वर्त्तमानत्वात् । अस्माकन्तु तादृशबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वे विरहान्नातिव्याप्तिरितिकेचित् ।

तृतीयनचकल्पस्यानुगमस्तु धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वमिति, वैशिष्टयञ्च स्वतादात्म्य-स्वविशिष्टधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, स्ववैशिष्टयं धर्मे स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकविषयितावृत्तित्वसम्बन्धेन, वृत्तित्वञ्च स्वावच्छिन्ननिरूपितत्वसंसर्गावच्छिन्नस्वनिष्ठाव-

❀ गादाधरी ❀

मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता-सामान्यावच्छेदकीभूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयिताया मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य च स्वस्मिन्नसत्त्वेन मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात्, व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकायाः कस्याश्चिदपि विषयितायाः व्यभिचारत्वादिविशिष्टानिरूपितत्वासम्भवात्, तादृशविषयिताया यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतया व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वाच्च न कश्चिद्दोषः ।

❀ चन्द्रकला ❀

वच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वस्मिन्प्रमेयत्वविशिष्टव्यभिचारत्वे विरहात् स्वपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्य धर्तुमशक्यत्वान्न तत्रातिव्याप्तिरित्याह मेयत्वेति । स्वस्मिन्=प्रमेयत्वविशिष्टव्यभिचारत्वे । व्यभिचारादौ लक्षणसमन्वयम् प्रदर्शयति व्यभिचारत्वादीति । स्वपदग्राह्येत्यादिः । तादृशत्वात्=यादृशयादृशधर्मान्तर्गतत्वात् ।

न कश्चिद्दोष इति । धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपस्वावच्छिन्नविषयकत्वव्यापकानुमितिप्रतिबन्धकतात्वव्यापकतायाः धूमव्यभिचारिवह्नित्वावच्छिन्नविषयितायां विरहेण तादृशव्यापकीभूतयत्किञ्चिद्विषयितापदेन निरुक्तव्यभिचारघटितबाधविषयिताया एव धर्त्तव्यतया तत्रच घटत्वाद्यवच्छिन्नाऽनिरूपितत्वस्यावश्यकत्वेन तादृशघटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकव्यभिचारघटितबाधत्वरूपस्ववत्त्वस्य तादृशबाधादौ सत्त्वान्न कुत्राप्यव्याप्तिरतिव्याप्तिर्वा सम्भवतीति हृदयम् ।

अत्र कल्पे विषयितायां यत्किञ्चित्त्वाऽनिवेशे प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वावच्छिन्नव्याप्तिग्रहप्रतिबन्धकतावच्छेदकविषयितासामान्यान्तर्गतायां प्रमेयत्वविशिष्टव्यभिचारविषयि-

❀ कलाविलासः ❀

च्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, विषयितायां तादृशप्रतिबन्धकतात्वव्यापकत्वन्तु स्वव्यापकत्वसम्बन्धेन ।

अथवाकल्पे अवच्छेदकताद्वयस्य स्वरूपसम्बन्धरूपत्वे पूर्ववदेवाव्याप्त्यादिकं स्वयमूहनीयम् ।

❀ गादाधरी ❀

अथवा यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यं तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यम् ।

❀ चन्द्रकला ❀

तायां प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वसत्त्वेन यादृशयादृशधर्ममध्ये तस्याऽप्रवेशात् यादृशयादृशघटत्वाद्यवच्छिन्नाऽनिरूपिता तादृशी विषयिता तादृशघटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रमेयत्वविशिष्टविशिष्टव्यभिचार - त्वरूपस्ववत्त्वस्य प्रमेयत्वविशिष्टव्यभिचारेऽनपायादतो यत्किञ्चित्त्वं तादृशविषयिताविशेषणम् । तथा सति यत्किञ्चिद्विषयितापदेन शुद्धव्यभिचारविषयिताया एव धर्त्तव्यतया तत्रच प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वविरहान्न तत्राऽतिव्याप्तिः ।

यादृशयादृशेतिवीप्सानादरेऽपि प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकयत्किञ्चिद्व्यभिचारविषयितायां यत्किञ्चिद्घटत्वाद्यवच्छिन्नाऽनिरूपितत्वस्यावश्यकतया तादृशघटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्ववत्त्वस्य प्रमेयत्वविशिष्टव्यभिचारे सत्त्वादतो यादृशयादृशेतिवीप्सादरः । तथा सति यादृशयादृशधर्मान्तर्गतप्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽनिरूपितत्वस्य तादृशशुद्धव्यभिचारविषयितायामक्षतत्वात् स्वस्मिंश्च प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वविरहान्न तत्राऽतिव्याप्तिरिति ध्येयम् ।

तृतीयचतुर्थनञकल्पयोर्दूषणस्य साम्यात् तृतीयनञकल्पे दूषणमदत्त्वैव चतुर्थनञकल्पमाह अथवेति । तथाच यद्धर्मावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वस्य व्यापकतासम्बन्धेन व्यापकीभूतविषयितात्वव्यापकं यद्धर्मावच्छिन्ननिरूपितत्वं तद्धर्मवत्त्वं समुदितलक्षणार्थः पर्यवसितः ।

प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकव्याप्तिग्रहप्रतिबन्धकतात्वव्यापकीभूतविषयितात्वस्य शुद्धव्यभिचारविषयितायामपि सत्त्वेन तत्रच प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वविरहात् यद्धर्मपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्योपादानाऽसम्भवान्न तत्रातिव्याप्तिः ।

अत एव तादृशविषयितात्वे यद्धर्मावच्छिन्ननिरूपितत्वसामानाधिकरण्यमनभिधाय

❀ कलाविलासः ❀

निरुक्तकल्पस्यानुगमो यथा धर्मविशिष्टधर्मवत्त्वं दोषत्वम्, धर्मवैशिष्ट्यं धर्मे स्वतादात्म्य-स्वविशिष्टविषयितात्वव्यापकत्वोभयसम्बन्धेन, स्ववैशिष्ट्यं विषयितायां

* गादाधरी *

बाधविशिष्टव्यभिचारत्वावच्छिन्नेऽतिप्रसङ्गात् तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां केवलव्यभिचारविषयितायां तादृशव्यभिचारज्ञानप्रतिबन्धकतायां च केवलबाधविषयिताया अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वाद्यवच्छिन्नविषयिताया एव तथाविधप्रति-

* चन्द्रकला *

तादृशनिरूपितत्वव्याप्यत्वं तादृशविषयितात्वव्यापकत्वं वा तादृशनिरूपितत्वे वक्तव्यम्, अन्यथा प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिःस्यात्, प्रमेयत्वविशिष्टव्यभिचारत्वरूपयद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकप्रमेयत्वविशिष्टव्यभिचारविषयितान्तर्भावेन तादृशविषयितात्वे प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वसामानाधिकरण्यसत्त्वेन यद्धर्मपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्यापि धर्तुं शक्यत्वात्।

नवा व्यभिचारघटितबाधेऽव्याप्तिः, तादृशप्रतिबन्धकतासामान्यावच्छेदकव्यभिचारघटितबाधविषयितायां धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्ननिरूपितत्वस्याक्षतत्वात्।

ह्रदो वह्निमान् धूमादित्यादौ तादृश्यां वह्न्यभावविशिष्टह्रदविषयितायां वह्न्यभावविशिष्टह्रदत्वावच्छिन्ननिरूपितत्वस्य धूमवान् वह्नेरित्यादौ च धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारविषयितायां धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्ननिरूपितत्वस्य च सत्त्वात् तत्र तत्र बाधव्यभिचारादौ लक्षणसमन्वयः।

सर्वत्र प्रतिबन्धकतासामान्यनिवेशो व्यभिचारघटितबाधेऽव्याप्तिवारणार्थ एव। अन्यथा धूमाभाववद्धूमव्यभिचारिमत्त्वावच्छिन्नविषयकत्वव्यापकयत्किञ्चिद्व्याप्तिग्रहप्रतिबन्धकतावच्छेदकव्यभिचारविषयितायां धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्ननिरूपितत्वविरहेण यद्धर्मपदेन निरुक्तबाधत्वस्योपादातुमशक्यत्वात् निरुक्तव्यभिचारघटितबाधेऽव्याप्तिः स्यात्। एवं पूर्वपूर्वकल्पेऽपि प्रतिबन्धकतासामान्यनिवेशस्यानयैव रीत्या व्यावृत्तिः स्वयमूहनीयेति दिक्।

तृतीयनचकल्पे चतुर्थाथवेत्यादिकल्पे च बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणमशक्यमेव, बाधविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकतासामान्यावच्छेदकयत्किञ्चिद्विषयितापदेन केवलबाधविषयिता केवलव्यभिचारविषयिता वा धर्तुं न शक्यते? केवलबाधविषयितायाःतादृशप्रतिबन्धकतासामान्यान्तर्गतव्याप्तिग्रहप्रतिबन्धकतायामनवच्छेदकत्वात्, व्यभिचारविषयितायाश्च साध्यानुमितिप्रतिबन्धकतानवच्छेदकत्वात्, किन्तु बाधविशिष्टव्यभिचारविषयितैव तादृ-

* कलाविलासः *

स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वव्यापकत्वसम्बन्धेन, वि-

❀ गादाधरी ❀

बन्धकतासामान्यावच्छेदकत्वं, तस्यां च तादृशधर्मविशिष्टनिरूपितत्वस्याव-श्यकत्वात् प्रथमकल्पे स्वपदेन चरमकल्पे च यद्धर्मपदेन तस्योपादानसम्भवात्।

अथ वह्न्यभावादिधर्मितावच्छेदकवह्न्यादिप्रकारकबुद्धेरिव धूम-व्यभिचारविशिष्टवह्न्यादिधर्मितावच्छेदककस्य धूमव्याप्यतया वह्न्यादिप्र-कारकग्रहस्याऽनाहार्यस्याऽसम्भवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकस-मूहालम्बनानुमितेरप्रसिद्ध्या तादृशानुमितिप्रतिबन्धकताघटितयथाश्रुतलक्ष-णस्य तद्रूपावच्छिन्नपक्षकवह्न्यादिहेतुकदोषेऽव्याप्तिं स्वयमेव वक्ष्यतीति तद्वारणायाऽऽयासोऽयं वृथेति चेद् ?

❀ चन्द्रकला ❀

शप्रतिबन्धकतासामान्यनिरूपिताऽवच्छेदकीभूता यत्किञ्चिद्विषयिता, तत्र च बाधविशिष्ट-व्यभिचारत्वावच्छिन्ननिरूपितत्वसत्त्वेन तत्र यादृशयादृशधर्मावच्छिन्नाऽनिरूपितत्वं वर्त्तते तादृशघटत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्ट-व्यभिचारत्वे सत्त्वात् बाधविशिष्टव्यभिचारत्वस्याऽपि स्वपदेनोपादानसम्भवात् ।

अथवाकल्पे तु बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धक-तासामान्यावच्छेदिकायां पूर्वोक्तयुक्त्या बाधविशिष्टव्यभिचारविषयितायां बाधविशि-ष्टव्यभिचारत्वावच्छिन्ननिरूपितत्वस्याक्षततया यद्धर्मपदेन बाधविशिष्टव्यभिचार-त्वस्य धर्त्तुं शक्यत्वादित्याह बाधविशिष्टेति । वह्नित्वम् धूमवत् धूमाभाववद्व-ह्नित्ववत इत्यादौ धूमाभाववद्वृत्तित्वविशिष्टधूमाभाववद्वह्नित्वरूपबाधविशिष्टतादृश-वह्निरूपव्यभिचारे इत्यर्थ इति केचित् ।

यद्यपि वह्न्यभाववान् पर्वतो वह्निमान् धूमादित्यादौ वह्निविरोधिवह्न्यभावधर्मिता-वच्छेदकवह्निप्रकारकज्ञानस्याहार्यतया तादृशपक्षसाध्यकानुमित्यप्रसिद्ध्या तत्स्थलीय-दोषे यथा दीधितिकृतैवाग्रे अव्याप्तिर्वक्ष्यते तथा धूमव्यभिचारिवह्निधर्मितावच्छेदकक-धूमाभाववद्वृत्तिवह्निरूपसाध्यव्याप्यहेतुप्रकारकज्ञानस्याप्याहार्यतया तत्स्थलीयदोषेऽ-व्याप्तिः प्रतिबन्धकताघटितलक्षणे वारयितुं न शक्यते इति तद्वारणकारणानुसन्धान-मनुचितमित्युच्यते तथापि न निस्तार इत्याह वह्न्यभावादीति । स्वविरोधिधर्म-धर्मितावच्छेदककस्वप्रकारकज्ञानस्याहार्यत्वादित्याशयः ।

धूमव्याप्यतया = धूमाभाववदवृत्तितया । तादृशेति । धूमव्यभिचारिवह्नि-मत्त्वावच्छिन्नपक्षकधूमप्रकारकधूमव्याप्यवह्निप्रकारकसमूहालम्बनानुमितेरित्यर्थः । स्वयमेव = दीधितिकृतैव ।

❀ कलाविलासः ❀

षयितात्वव्यापकत्वञ्च लक्ष्यतावच्छेदके स्वावच्छिन्ननिरूपितत्वसम्बन्धेनेति ध्येयम् ।

✽ गादाधरी ✽

भवतु तावदेवम्, तथापि विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादौ दर्शितसमूहालम्बनानुमितिप्रसिद्ध्या विशेषगुणवद्घटरूपाश्रयाऽसिद्धेर्गुणवद्घटरूपबाधघटितायाः संग्रह आवश्यकः।

यदि च तत्र घटत्वावच्छेदेन गुणवत्त्वमेव बाधः, आश्रयासिद्धिश्च तत्सामानाधिकरण्येन तदवच्छेदेन वा विशेषगुणवत्त्वम्, तस्यां च गुणत्वरूपसामान्यधर्मावच्छिन्नघटत्वव्यापकताघटितोक्तबाधस्य न प्रवेशः, विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र प्रवेशेऽपि सामान्यरूपेण व्यापकतायास्त-

✽ चन्द्रकला ✽

विशिष्टान्तराऽघटितत्वनिवेशे पुनरव्याप्तिमाह विशेषेति। तथाच तादृशविशिष्टान्तराऽघटितत्वाऽनिवेशे प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिःस्यात्, तन्निवेशे निरुक्तव्यभिचारघटितबाधेऽव्याप्त्यसम्भवेऽपि विशेषगुणाभाववान् घटो गुणसामान्याभाववान् घटत्वादित्यादौ विशेषगुणवद्घटरूपाश्रयासिद्धावव्याप्तिः, विशेषगुणवद्घटत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यद् गुणवद्घटत्वरूपं बाधत्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य विशेषगुणवद्घटत्वे विरहात् निरुक्ताश्रयासिद्धित्वस्य स्वपदेन धर्त्तुमशक्यत्वादिति भावः।

दर्शितेति। विशेषगुणवान् घटो गुणसामान्याभाववान् गुणसामान्याभावव्याप्यघटत्ववांश्चेत्याकारकज्ञानस्य अनाहार्यत्वादितिहृदयम्।

संग्रह आवश्यक इति। तथाच विशिष्टान्तराघटितत्वविशेषणदानानुपपत्तिः, -मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तु प्रकारान्तरेणैव वारणीयेत्याशयः।

निरुक्तामव्याप्तिमपाकर्त्तुं शंकते यदि चेति। घटत्वावच्छेदेन = घटत्वव्यापकगुणप्रतियोगिकसमवायसम्बन्धेन। गुणवत्त्वमेवेति एवकारात् घटत्वसामानाधिकरण्येन गुणवत्त्वस्य बाधत्वव्यवच्छेदः। विशेषगुणाभावविशिष्टघटादावेव गुणसामान्याभावस्य साध्यतया तादृशपदे निरुक्तसाध्यावगाह्यनुमितेर्घटत्वसामानाधिकरण्यावगाहित्वेन तादृशानुमितिम् प्रति सामानाधिकरण्येन गुणवत्त्वावगाहिनिश्चयस्याऽप्रतिबन्धकतया घटत्वसामानाधिकरण्येन गुणवत्त्वस्य बाधत्वं न सम्भवतीति भावः।

घटत्वसामानेति। समवायत्वमात्रावच्छिन्नसम्बन्धेनेत्यर्थः। विशेषगुणवत्त्वमाश्रयासिद्धिरितिपूर्वेण सम्बन्धः। तस्याम् = विशेषगुणवद्घटरूपाश्रयासिद्धौ। न प्रवेशः = नघटकत्वम्। कुतो न तादृशबाधस्य प्रवेशःइत्यत आह विशेषेति। तत्र = आश्रयासिद्धौ। सामान्यरूपेण = गुणत्वरूपेण।

* गादाधरी *

दनन्तर्भावादिति न तादृशाश्रयाऽसिद्ध्यसंग्रहप्रसङ्ग इत्युच्यते, तदापि विशेष-गुणाभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ द्वितीयक्षणावच्छिन्ने घटे विशेषगुणवत्त्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूपबाधप्रवेशस्यावश्यकत्वात्, लक्षणे च तत्संग्रहस्यावश्यकतया उक्तविशेषणदानानुपपत्तिः।

* चन्द्रकला *

तदनन्तर्भावात् = आश्रयासिद्ध्यनन्तर्भावात्।

इत्युच्यत इति। तथाच विशेषगुणवद्घटत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतायाः प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतायाश्च गुणवद्घटत्वरूपबाधत्वे सत्त्वेऽपि गुणत्वावच्छिन्नव्यापकताघटिततादृशगुणवद्घटरूपबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपविशिष्टान्तराऽघटितत्वस्यापि तत्र सत्त्वेन न विशेषगुणवद्घटरूपाश्रयासिद्धावव्याप्तिरिति तु परमार्थः।

समाधत्ते तदापीति। निरुक्तस्थले आश्रयाऽसिद्धावव्याप्तिवारणेऽपीत्यर्थः। तदवच्छिन्ने = द्वितीयादिक्षणावच्छिन्ने। तत्संग्रहस्य = विशेषगुणवद्घटरूपाश्रयासिद्धिसंग्रहस्य।तथाचैकस्मिन्नेव द्वितीयक्षणावच्छिन्ने घटे विशेषगुणवत्त्वम् आश्रयाऽसिद्धिः,-गुणवत्त्वञ्च बाधस्तथासति निरुक्तद्वितीयक्षणावच्छिन्नविशेषगुणवद्घटरूपाऽश्रयाऽसिद्धेर्गुणवद्द्वितीयक्षणावच्छिन्नघटरूपबाधघटितत्वाद्विशिष्टान्तराऽघटितत्वविशेषणोपादाने यथोक्ताश्रयासिद्धावव्याप्तिवारणमशक्यं स्यादित्याशयः।

उक्तविशेषणेति। विशिष्टान्तराऽघटितत्वरूपविशेषणदानाऽनुपपत्तिरित्यर्थः। प्रतिबन्धकताघटितलक्षणस्य निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिमुक्त्वा तद्वारणाय अग्रे दीधितिकृतैवात्रवदन्तिकल्पो वक्ष्यते, तादृशकल्पस्यैव निष्कृष्टतया

* कलाविलासः *

द्वितीयक्षणावच्छिन्न इति। देशकालाद्यवच्छिन्नतद्व्यक्तौ सामानाधिकरण्येनैव भावाभावयोर्विरोधित्वमित्याशयेनैवैतदभिहितमिति ध्येयम्।

अथ पूर्वोक्तस्थल एव वैपरीत्येन गुणसामान्याभाववान् घटो विशेषगुणाभाववान् इत्यादिस्थले आश्रयासिद्धिघटितबाधेऽव्याप्तिसम्भवे स्थलान्तरानुसरणम् अनर्थकं व्यापकताघटितविशिष्टसमवायघटितबाधस्य केवलसमवायघटिताश्रयासिद्धिघटितत्वादिति चेन्न ? संशयरूपपक्षताया अनुमितिहेतुत्ववादिनां मते तादृशस्थले गुणसामान्याभाववान् घटो विशेषगुणाभाववान्नवेतिसंशयस्याहार्यतया अनुमितेरेवाऽप्रसिद्धेः, तत्प्रतिबन्धकताघटितलक्षणस्य तत्र गमनाऽसम्भवादिति तु सुधीभिर्विभावनीयम्।

❀ गादाधरी ❀

वस्तुतस्तु 'अत्र वदन्ती' त्यादिनिष्कृष्टकल्पे मेयत्वविशिष्टव्यभिचारादिवारणाय विशिष्टान्तराऽघटितत्वस्य निवेशनीयतया दर्शितबाधाद्यसंग्रहः दोष एव ।

एतेन स्वावच्छिन्ननिरूपितविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं समुदितलक्षणार्थः ।

❀ चन्द्रकला ❀

तत्कल्पेऽपि प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वनिवेशस्यावश्यकतया तत्कल्पोक्तलक्षणे व्यभिचारघटितबाधस्य निरुक्ताश्रयाद्धिश्चासंग्रहो दोषाय भवति नतु प्रतिबन्धकताघटितलक्षणे तयोरसंग्रहो दोषमावहतीत्याह वस्तुतस्त्विति ।

निरुक्ताश्रयासिद्धौ प्रतिबन्धकताघटितलक्षणेऽपि नाऽव्याप्तिरित्याह एतेनेति । परास्तमितिपरेणान्वयः । स्वावच्छिन्नेति । स्वं लक्ष्यतावच्छेदकत्वेनाभिमतो धर्मः । तथाच स्वावच्छिन्ननिरूपितविषयिताव्यापकयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितानिरूपकीभूतविशिष्टनिरूपितविषयितात्वव्यापिका स्वावच्छिन्ननिरूप्यता यस्य स्वस्य एवं भूतं यत् स्वं तादृशस्ववत्त्वं विशिष्टान्तराऽघटितत्वसहितसमुदितलक्षणार्थः पर्यवसितः ।

❀ कलाविलासः ❀

एतेन स्वावच्छिन्नेति । अत्र कल्पे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे वृक्षः कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिः, यत्किञ्चित्प्रतिबन्धकतावच्छेदककपिसंयोगाभाववद्वृक्षविषयितात्वव्यापकत्वस्य कपिसंयोगाभाववद्वृक्षस्वावच्छिन्ननिरूप्यतायां सत्त्वात् । अतः अनाहार्याऽप्रामाण्यज्ञानानास्कन्दिताव्याप्यवृत्तित्वभ्रमानास्कन्दितस्वावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां निवेश्यम् ।

अत्र कल्पे विशिष्टद्वयाघटितत्वनिवेशो नास्ति । स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतायाःस्वरूपसम्बन्धरूपावच्छेदकत्वस्य लक्षणे निवेशनीयत्वात्, केवलजलवद्ध्रदविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वात्, तत्र च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्वावच्छिन्ननिरूप्यतायाः असत्त्वादित्यवधेयम् ।

निरुक्तकल्पस्यानुगमस्तु प्रकृतानुमितिप्रतिबन्धकताविशिष्टधर्मवत्त्वं हेत्वाभासत्वमिति, वैशिष्ट्यञ्च स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परयावच्छेदकतावत्त्वस्वावच्छेदकविषयितात्वव्यापकत्वोभयसम्बन्धेन, व्यापकता च स्वावच्छिन्ननिरूपितत्वसम्बन्धेनेतिसंक्षेपः ।

❀ गादाधरी ❀

प्रमेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं, तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताकशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूपितत्वाऽव्याप्यत्वात् । उक्तस्थले विशेषगुणविशिष्टघटा-

❀ चन्द्रकला ❀

ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वरूपबाधत्वावच्छिन्नविषयकत्वव्यापकयत्किञ्चिद्वह्न्यनुमितिप्रतिबन्धकताया अवच्छेदकीभूतविषयिताकवह्न्यभावविशिष्टह्रदरूपविशिष्टनिरूपितवह्न्यभावविशिष्टह्रदविषयितात्वव्यापकत्वस्य वह्न्यभाववद्ध्रदत्वरूपबाधत्वावच्छिन्ननिरूप्यतायां सत्त्वात् तादृशबाधत्वस्यैव स्वपदेन धर्त्तुं शक्यतया वह्न्यभावविशिष्टह्रदादिरूपबाधादौ लक्षणसमन्वयः । एवमन्यत्रापि बोध्यः ।

प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकयत्किञ्चिद्व्याप्तिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपककेवलव्यभिचाररूपविशिष्टनिरूपितविषयितायां प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यताविरहेण तादृशविषयितात्वव्यापकत्वावच्छिन्ननिरूप्यताकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वात् स्वपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्योपादानाऽसम्भवादिति प्रथमतो विशिष्टान्तराऽघटितत्वनिवेशप्रयोजनकं प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणं दर्शयति प्रमेयत्वविशिष्टेति । नैतादृशम् = न निरुक्तलक्षणाक्रान्तम् ।

कुत इत्याकांक्षायामाह तदवच्छिन्नेति । प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नार्थकम् । अव्याप्यत्वादिति । तादृशविषयितात्वव्यापकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यतायां विरहादित्याशयः । तादृशविषयितात्वसमानाधिकरणस्वावच्छिन्ननिरूप्यताविवक्षणेऽपि प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, व्याप्तिग्रहप्रतिबन्धकतावच्छेदकविषयिताकप्रमेयत्वविशिष्टव्यभिचाररूपविशिष्टनिरूपितविषयितात्ववत्याम् प्रमेयत्वविशिष्टव्यभिचारविषयितायां स्वात्मकप्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यतायाःसत्त्वादतःस्वावच्छिन्ननिरूप्यतायां तादृशविषयितात्वव्यापकत्वनिवेशः ।

विशेषगुणाभाववान् द्वितीयादिक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादावपि विशेषगुणवत्तादृशघटरूपाश्रयासिद्धौ नाव्याप्तिः, विशेषगुणवत्तादृशघटत्वादिरूपस्वावच्छिन्नविषयकत्वव्यापकयत्किञ्चित्पक्षतावच्छेदकविशिष्टपक्षग्रहप्रतिबन्धकताया अवच्छेदकीभूतविषयिताकतादृशाश्रयाऽसिद्धिरूपविशिष्टनिरूपितविषयितात्वव्यापकत्वस्य विशेषगुणवद्द्वितीयक्षणावच्छिन्नघटत्वरूपाश्रयासिद्धित्वावच्छिन्ननिरूप्यतायामक्षतत्वादित्याह उक्तस्थल इति । विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यादिस्थले इत्यर्थः ।

❀ गादाधरी ❀

दिरूपाऽऽश्रयासिद्ध्यादिविषयकत्वावच्छिन्नविशिष्टपक्षाग्रहादिनिरूपितयत्किञ्चित्प्रतिबन्धकताच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य तादृशाश्रयासिद्ध्यादिनिरूपितत्वव्याप्यत्वात्तत्र लक्षणसमन्वयः। प्रतिबन्धकतायां यावत्त्वानिवेशान्नोक्तरीत्या बाधविशिष्टव्यभिचारादावतिप्रसङ्गः।

स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नयत्किंचित्प्रतिबन्धक-

❀ चन्द्रकला ❀

ननु पूर्वोक्ततृतीयादिनचकल्पवदत्रापि कल्पे बाधविशिष्टव्यभिचारे कथं नातिव्याप्तिरित्यत आह प्रतिबन्धकतायामिति। लक्षणघटकीभूतायामित्यादिः। तथा च बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चिद्व्याप्तिग्रहप्रतिबन्धकतावच्छेदकविषयिताकशुद्धव्यभिचारनिरूपितविषयितायां बाधविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यताया अभावात् तादृशविषयितात्वव्यापकनिरूप्यताकपदेन बाधविशिष्टव्यभिचारत्वस्योपादातुमशक्यत्वान्न बाधविशिष्टव्यभिचारेऽतिव्याप्तिरितिभावः।

यावत्त्वानिवेशादिति। प्रतिबन्धकतायां यावत्त्वनिवेशे तु बाधविशिष्टव्यभिचारेऽतिव्याप्तिःस्यात्, तादृशयावत्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य बाधविशिष्टव्यभिचारविषयितायामेव सत्त्वेन तत्र बाधविशिष्टव्यभिचारत्वावच्छिन्ननिरूप्यताया आवश्यकत्वात्, बाधविशिष्टव्यभिचारत्वस्यैव स्वपदग्राह्यत्वसम्भवादिति परमार्थः।

निरुक्ताऽश्रयासिद्धावव्याप्तिवारणाय लक्षणान्तरमप्याह स्वावच्छिन्नेति। स्वं लक्ष्यतावच्छेदकत्वेनाभिमतो धर्मः एवञ्च स्वावच्छिन्नाऽनिरूपिता या विशिष्टविषयिता

❀ कलाविलासः ❀

स्वावच्छिन्नाऽनिरूपितेति। यद्यद्धर्मावच्छिन्ननिरूपिता विषयिता लक्ष्यतावच्छेदकत्वेनाभिमतस्वावच्छिन्नाऽनिरूपिता भवति तत्तद्धर्मावच्छिन्ननिरूपितविषयिताव्यापकप्रतिबन्धकताभिन्ना या प्रकृतानुमितिप्रतिबन्धकता तादृशस्वावच्छिन्ननिरूपितविषयित्वव्यापिकेति निरुक्तलक्षणार्थःपर्यवसितः। व्यावृत्त्यादिकन्तु पूर्ववदेवानुसन्धेयम्।

तथाच धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यञ्च स्वतादात्म्य–स्वविशिष्टविषयितानिरूपकतावच्छेदकधर्मविशिष्टान्यप्रतिबन्धकतावृत्तित्वोभयसम्बन्धेन, स्ववैशिष्ट्यं विषयितायां स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन, धर्मवैशिष्ट्यञ्च स्वावच्छिन्नविषयित्वव्यापकत्वसम्बन्धेन।

❀ गादाधरी ❀

तावच्छेदकस्वावच्छिन्नविषयिताको यो धर्मस्तद्वत्त्वं समुदितलक्षणार्थः। प्रमेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वम्, तदवच्छिन्नानिरूपितशुद्धव्यभिचारत्वाद्यवच्छिन्नविषयित्वावच्छिन्नायामेव प्रतिबन्धकतायां तदवच्छिन्नविषयिताया अवच्छेदकत्वात्।

❀ चन्द्रकला ❀

तदव्यापकीभूतायाःप्रकृतानुमितिप्रतिबन्धकताया अवच्छेदिका स्वावच्छिन्ननिरूपिता विषयिता यस्य स्वस्य एवम्भूतस्वात्मकधर्मवत्त्वं लक्षणार्थःसमुदित इत्यर्थः।

धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वरूपव्यभिचारत्वाद्यवच्छिन्नाऽनिरूपितबाधादिविशिष्टविषयित्वानवच्छिन्नव्याप्तिग्रहप्रतिबन्धकतावच्छेदकतादृशव्यभिचारत्वरूपस्वावच्छिन्नविषयिताकधूमाभाववद्वृत्तित्वविशिष्टवह्नित्वरूपधर्मवत्त्वस्य तादृशवह्निरूपव्यभिचारे सत्त्वात् व्यभिचारादौ लक्षणसमन्वयः। एवमन्यत्रापि।

प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाःनिरूपितकेवलव्यभिचारात्मकविशिष्टविषयित्वाव्यापकत्वरूपतादृशविशिष्टविषयित्वानवच्छिन्नायां बाधादिनिश्चयनिष्ठायां साध्यानुमितिप्रतिबन्धकतायां अवच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्ननिरूपितविषयितायामभावात्प्रमेयत्वविशिष्टव्यभिचारत्वस्य स्वपदेन धर्तुमशक्यत्वान्न प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरित्याह नैतादृशं स्वमित्यादि। निरुक्तलक्षणाक्रान्तं नैतादृशं स्वमित्यर्थः।

**तदवच्छिन्नेति**। प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताया इत्यर्थः। **अवच्छेदकत्वादिति**। व्यभिचारविषयित्वानवच्छिन्नायान्तु प्रकृतानुमितिप्रतिबन्धकतायां प्रमेयत्वविशिष्टव्यभिचारविषयिताया अवच्छेदकत्वमेव न सम्भवतीति कुतः स्वपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्योपादानमिति हृदयम्।

नवा बाधविशिष्टव्यभिचारेऽप्यतिव्याप्तिः, बाधविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाऽनिरूपितकेवलबाधविषयित्वानवच्छिन्नायां केवलव्यभिचारविषयित्वानवच्छिन्नायां वा प्रतिबन्धकतायां अवच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वावच्छिन्ननिरूपितायां विषयितायामसत्त्वेन स्वपदेन बाधविशिष्टव्यभिचारत्वस्योपादानाऽसम्भवादिति तु तत्त्वम्। विशेषगुणाभाववान् घटो गुणसामान्याभाववानित्यत्राऽपि न विशेषगुणवद्घटरूपाऽश्रयाऽसिद्धावव्याप्तिः, तादृशाश्रयासिद्धित्वरूपस्वावच्छिन्नानिरूपितगुणवद्घटरूपबाधविषयित्वानवच्छिन्नपक्षतावच्छेदकविशिष्टपक्षग्रहप्रतिबन्धकताया अवच्छेदकीभूततादृशाश्रयाऽसिद्धित्वावच्छिन्ननिरूपितविषयिताकाश्रयासिद्धित्व-

❀ गादाधरी ❀

उक्तस्थले चाऽऽश्रयासिद्धिविषयकत्वस्य तदनिरूपितबाधविषयित्वानवच्छिन्ना या विशिष्टपक्षग्रहप्रतिबन्धकता तदवच्छेदकत्वाल्लक्षणसमन्वय इति परास्तम् ।

यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यादिनिष्कृष्टकल्पे अनुमितिप्रतिबन्धकताया अघटकत्वात् प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशेषणदानस्याऽसम्भवेन यत्पदार्थस्यैव तादृशपदार्थान्तराऽघटितत्वेन विशेषणीयतयोक्तबाधाऽव्याप्तेरशक्यपरिहारत्वात् ।

अत्र केचित् । स्वसजातीयविशिष्टान्तराऽघटितत्वमेव यत्पदार्थे देयम् ।

❀ चन्द्रकला ❀

रूपधर्मवत्त्वस्य विशेषगुणवद्घटरूपाश्रयाऽसिद्धावक्षतत्वादित्याह उक्तस्थल इति । विशेषगुणाभाववान् द्वितीयादिक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादिस्थले इत्यर्थः ।

परास्तमिति । निरुक्तरीत्या विशिष्टान्तराऽघटितत्वसहितस्य प्रतिबन्धकताघटितलक्षणार्थस्य निर्वचने विशेषगुणवद्घटरूपाश्रयाऽसिद्धौ लक्षणसमन्वयसम्भवेऽपि धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधे अव्याप्तिवारणमशक्यम्, तादृशपक्षसाध्यकसाध्यव्याप्यहेतुप्रकारकज्ञानस्याहार्यतया तादृशानुमितेरप्रसिद्ध्याऽनुमितिप्रतिबन्धकताघटितलक्षणस्य तादृशबाधे सत्त्वाऽसम्भवात्, निरुक्तरीत्या लक्षणार्थनिर्वचनस्यानावश्यकत्वात् वक्ष्यमाणात्रवदन्तिकल्पोक्तलक्षणेनैव सर्वसामञ्जस्यादिति भावः ।

निष्कृष्टकल्पे = अत्रवदन्तीत्यादिनाभिहितलक्षणे, यत्पदार्थस्यैव = लक्ष्यतावच्छेदकयद्रूपपदार्थस्यैव । तादृशेति स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतलक्षणाश्रयीभूतधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वेनेत्यर्थः । उक्तबाधेति धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादिस्थलीयबाधार्थकम् । निरुक्तस्थलीयबाधत्वस्य तादृशविशिष्टान्तरतावच्छेदकव्यभिचारत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वादित्याशयः ।

प्रकारान्तरेण विशिष्टान्तराऽघटितत्वं निवेश्य धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽव्याप्ति वारयतां मतं दूषयितुमुपन्यस्यति केचिदिति । आहुरितिपरेणान्वयः ।

स्वसजातीयेति । अत्र स्वपदं लक्ष्यतावच्छेदकत्वेनाभिमतधर्मपरं नतु लक्ष्यीभूत-

❀ कलाविलासः ❀

स्वसजातीयेति । अत्र कल्पे अनुयोगिनि स्वत्वान्तर्भावमते अत्रवदन्त्युक्तलक्षणघटकविरोधिविषयिताप्रयुक्तत्वदलस्य व्यर्थत्वमाशंकितं भट्टाचार्येण, तत् कथं

❀ गादाधरी ❀

साजात्यं च हेत्वाभासविभाजकरूपेण। तच्च रूपं-बाधत्वव्यभिचारत्वादि,

❀ चन्द्रकला ❀

पदार्थपरम्, तथासति व्यभिचारस्य प्रमेयत्वविशिष्टव्यभिचाराभिन्नतया तस्य विशिष्टान्तरत्वाऽनुपपत्त्या विपरीतप्रमेयत्वविशिष्टव्यभिचारस्यैव विशिष्टान्तरत्वेनोपादाय तदघटिते प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिःस्यात्, एवञ्चाग्रेऽपि यत्पदार्थविशेषणमित्यस्य यद्रूपपदार्थविशेषणमित्येवमर्थःकरणीय इति ध्येयम्।

तथा च स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकोऽथच स्वाश्रयवृत्तिर्यो हेत्वाभासविभाजको धर्मः सामानाधिकरण्यसम्बन्धेन तद्विशिष्टं यद्रूपं तद्रूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तद्वत्त्वं हेत्वाभासत्वमिति समुदितलक्षणार्थः। अत्र कल्पे घटत्वाद्याश्रये घटादौ हेत्वाभासविभाजकधर्मस्य वर्त्तमानत्वाऽप्रसिद्धया स्वपदेन घटत्वस्योपादानाऽसम्भवात् तत्राऽतिव्याप्त्यप्रसक्त्या तादृशत्वावच्छिन्ननिश्चयत्वव्यापकेत्यादिना पृथक् विशेष्यदलस्य प्रयोजनं नास्तीति मन्तव्यम्।

भवति हि ह्रदो वह्निमानित्यादौ बाधादौ लक्षणसमन्वयः, वह्न्यभावविशिष्टह्रदत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यद् ह्रदवृत्तिवह्न्यभावत्वरूपं विपरीतबाधत्वं वह्न्यभावविशिष्टह्रदत्वाश्रये तादृशह्रदे वर्त्तमानहेत्वाभासविभाजकीभूतबाधत्वरूपधर्मसमानाधिकरणं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकवह्न्यभावविशिष्टह्रदत्वरूपस्ववत्त्वस्य वह्न्यभाववद्ध्रदरूपबाधे सत्त्वात्।

प्रमेयत्वविशिष्टव्यभिचारत्वं नैतादृशं स्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वाश्रयवृत्तिहेत्वाभासविभाजकव्यभिचारत्वसामानाधिकरण्यस्य च शुद्धव्यभिचारत्वे वर्त्तमानतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वस्मिन् प्रमेयत्वविशिष्टव्यभिचारत्वे विरहात्।

तच्च = हेत्वाभासविभाजकञ्च। नवा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽव्याप्तिः, तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमव्यभिचारिवह्नित्वादौ सत्त्वेऽपि तत्र तादृश-

❀ कलाविलासः ❀

संगच्छते ? यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तोभयाभाव इत्यादिसमुदायदलस्यैव व्यर्थत्वसम्भवादिति चेदत्र केचित्—अव्याप्यवृत्तित्वभ्रमाभावविशिष्टयद्विषयकनिश्चयस्य विषयिताप्रयुक्तस्तदुत्तरानुमितौ तादृशोभयाभाव इत्येतावन्मात्रस्य विशेष्यदलस्य निवेशेनैव सामञ्जस्ये विरोधिपदं व्यर्थमित्यस्यैवाभिधाने ग्रन्थतात्पर्यादित्याहुः।

❀ गादाधरी ❀

तेन च रूपेण व्यभिचारादेर्न बाधादिसाजात्यमिति व्यभिचारघटितबाधादौ नाऽव्याप्तिः।

नचैवं यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तोभयाभावस्तत्त्वमित्यत्र विरोधिविषयिताप्रयुक्तत्वदलस्य वैयर्थ्यम्, घटादेस्तादृशरूपेण सजातीयत्वाऽप्रसिद्ध्यैव तत्र नातिप्रसङ्ग इति वाच्यम्,

स्वसजातीयविशिष्टान्तरघटितं यद्यत्स्वं तद्विषयकप्रतीतिविषयत्ववि-

❀ चन्द्रकला ❀

वह्निमत्त्वाश्रयवृत्तिहेत्वाभासविभाजकबाधत्वस्य सामानाधिकरण्यसम्बन्धेन विरहात् स्वसजातीयविशिष्टान्तरतावच्छेदकधर्मपदेन तादृशव्यभिचारत्वस्योपादातुमशक्यतया धूमव्यभिचारिवह्निमद्वृत्तिधूमाभावत्वरूपविपरीतबाधत्वे एव तथात्वस्यावश्यकतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य स्वस्मिन् धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वेऽक्षतत्वादित्याह तेनेत्यादि। स्वाश्रयबाधवृत्तिहेत्वाभासविभाजकरूपेणेत्यर्थः।

नाव्याप्तिरिति। तथाच व्यभिचारादौ सर्वत्रैव विपरीतव्यभिचारत्वादिकमेव विशिष्टान्तरतावच्छेदकत्वेनोपादाय लक्षणसमन्वयः करणीय इति भावः।

ननु अत्रवदन्तिकल्पे अपि निरुक्तरीत्यैव विशिष्टान्तराऽघटितत्वस्य विवक्षणीयतया तत्कल्पे घटादावतिव्याप्तिवारणप्रयोजनकमेव यद्विषयकनिश्चयीयविरोधिविषयिताप्रयुक्तत्वदलमिति स्वयमेव दीधितिकृता वक्ष्यते, तत् कथं संगच्छते? घटादौ हेत्वाभासविभाजकरूपस्याऽवर्त्तमानतया स्वपदेन घटत्वादेर्धर्तुमशक्यत्वादिति तादृशाविरोधिविषयिताप्रयुक्तत्वदलोपादानं निरर्थकं स्यादित्याशंकते नचैवमिति। वाच्यमितिपरेणान्वयः।

एवम् = स्वपदस्य लक्ष्यतावच्छेदकत्वेनाभिमतधर्मपरत्वे। इत्यत्र = एतादृशलक्षणे। तादृशरूपेण = हेत्वाभासविभाजकरूपेण। नातिप्रसंग इति। घटादावुदासीनेऽतिव्याप्तिवारणमात्रप्रयोजनत्वादुक्तप्रयुक्तत्वदलस्येति भावः। समाधत्ते स्वसजातीयेति। अत्र स्वपदं लक्ष्यतानवच्छेदकीभूतप्रमेयत्वविशिष्टव्यभिचारत्व-प्रमेयत्वविशिष्टबाधत्वादिपरम्। तथाच स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं स्वाश्रयवृत्तिहेत्वाभासविभाजकरूपसमानाधिकरणञ्च यद्रूपं तद्रूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यद्यत् स्वं तत्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वं हेत्वाभासत्वमिति प्रतिबन्धकताघटितलक्षणस्य तादृशस्वावच्छिन्नाविषयकप्रतीति-

❀ गादाधरी ❀

**वक्षणेन अनुयोगिनि स्वत्वानन्तर्भावेण पदार्थान्तरेषु अतिप्रसङ्गवारकतया तद्दलसार्थक्यात् ।**

❀ चन्द्रकला ❀

विषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयोत्तराऽनुमितिसामान्ये तादृशनिश्चयीयविरोधिविषयिताप्रयुक्तोभयाभावस्तद्रूपवत्त्वमितिवक्ष्यमाणत्वदन्तिकल्पोक्तलक्षणस्य चार्थः पर्यवसितः ।

तथाच न विरोधिविषयिताप्रयुक्तत्वदलानुक्तौ घटादावतिव्याप्तिदानाऽनुपपत्तिः, प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्वाश्रयवृत्तिहेत्वाभासविभाजकरूपसमानाधिकरणं यद् व्यभिचारत्वं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकस्वात्मकप्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपपदेन घटत्वादेरुपादानसम्भवात् ।

अत एव तादृशयद्रूपवत्त्वमात्रोक्तौ घटादावतिव्याप्तिः स्यादतो यद्रूपावच्छिन्नविषयकनिश्चयत्वेत्यादिना विशेष्यदलमभिहितम् । एवञ्च ह्रदो वह्निमानित्यादौ प्रमेयत्वविशिष्टबाधत्वादिकमेव स्वपदेनोपादाय लक्षणसमन्वयःस्वयमूहनीयः । प्रमेयत्वविशिष्टव्यभिचारत्वस्य स्वपदेनोपादानात् तादृशस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपपदेन तस्योपादानाऽसम्भवान्न प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरिति तु तत्त्वम् । विवक्षयेति । विशिष्टान्तरघटितं यत् स्वं तदघटितत्वेनेत्यादिः। अनुयोगिनीति स्वसजातीयविशिष्टान्तराघटितत्वरूपाभावानुयोगिकोटावेव पूर्वकल्पे स्वत्वस्य प्रवेशः, अत्रतु स्वसजातीयविशिष्टान्तरघटितं यत् स्वं तदघटितत्वरूपाभावप्रतियोगिकोटावेव स्वत्वस्य प्रवेश इति तात्पर्यम् ।

पदार्थान्तरेषु = घटाद्युदासीनेषु । तद्दलेति विरोधिविषयिताप्रयुक्तत्वदलेत्यर्थकम् । बाधविशिष्टव्यभिचारत्वरूपस्वाश्रयवृत्तिहेत्वाभासविभाजकरूपसमानाधिकरणं यद् व्यभिचारत्वं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्व इव बाधविशिष्टव्यभिचारत्वेऽप्यक्षतत्वात् प्रतियोगिनि स्वत्वान्तर्भावकल्पे स्वपदेन बाधविशिष्टव्यभिचारत्वस्याप्युपादातुं शक्यतया न बाधविशिष्टव्यभिचारेऽतिव्याप्तिःशंक्येतिध्येयम् ।

ननु प्रतियोगिनि स्वत्वान्तर्भावपक्षे प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणसम्भवेऽपि व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिवारणमशक्यं स्यात्, व्यभिचारविशिष्टप्रमेयत्वत्वाश्रये व्यभिचारविशिष्टप्रमेयत्वे हेत्वाभासविभाजकधर्माऽप्रसिद्ध्या स्वपदेन व्यभिचारविशिष्टमेयत्वत्वादेरुपादानाऽसम्भवात् प्रमेयत्वव्यभिचारत्वस्यैव स्वपदेन

❀ गादाधरी ❀

न च व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासत्वविरहात् हेत्वाभासविभाजकरूपेण स्वसजातीयाऽप्रसिद्ध्या तस्य स्वपदेनोपादातुमशक्यत्वात् मेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयम्, तस्य शुद्धव्यभिचाराद्यभिन्नतया व्यभिचारत्वादिरूपहेत्वाभासविभाजकरूपेण तत्सजातीयप्रसिद्धेरिति तदविषयकप्रतीतिविषयत्वस्य व्यभिचारविशिष्टमेयत्वादौ सत्वात्तत्रातिप्रसङ्ग इति वाच्यम्,

विशिष्टान्तराऽघटितत्वेनाऽघटितस्य विशिष्टसाध्यसाधनग्रहाऽविरोधि-

❀ चन्द्रकला ❀

धर्मव्यतया तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकतायाः व्यभिचारविशिष्टमेयत्वत्वे वर्त्तमानत्वात् तादृशावच्छेदकीभूतव्यभिचारविशिष्टमेयत्वत्वरूपयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायामनपायादित्याशंकते नचेति । वाच्यमितिपरेणान्वयः । तस्य = व्यभिचारविशिष्टमेयत्वत्वस्य ।

प्रमेयत्वविशिष्टव्यभिचारे हेत्वाभासविभाजकव्यभिचारत्वसत्त्वं स्फुटीकरोति तस्येत्यादि । प्रमेयत्वविशिष्टव्यभिचारत्वस्येत्यर्थः । तत्रातिप्रसंग इति । प्रमेयत्वविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयावच्छेदकयद्रूपपदेन व्यभिचारविशिष्टमेयत्वत्वस्योपादातुं शक्यत्वादितिभावः ।

हेत्वाभासविभाजकधर्ममध्ये व्यभिचारत्वं न साध्याभाववद्वृत्तित्वादिविशिष्टहेतुतावच्छेदकरूपमपितु साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाऽव्यापिका साधनतावच्छेदकविशिष्टसाधनग्रहत्वाऽव्यापिका च या प्रकृतव्याप्तिग्रहत्वव्यापिका प्रतिबध्यता तन्निरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपवत्त्वम्, तच्च रूपं यथा प्रमेयत्वविशिष्टव्यभिचारत्वादिकं तथा व्यभिचारविशिष्टप्रमेयत्वत्वमपि । तथा च व्यभिचारविशिष्टमेयत्वादावपि तादृशव्यभिचारत्वरूपहेत्वाभासविभाजकरूपप्रसिद्ध्या स्वपदेन तादृशमेयत्वत्वादेरुपादानसम्भवान्न व्यभिचारविशिष्टमेयत्वेऽतिव्याप्तिरित्येवं समाधत्ते विशिष्टान्तरेति । विशिष्टान्तराऽघटितत्वविशेषणशून्यस्येत्यर्थः ।

❀ कलाविलासः ❀

विशिष्टान्तराऽघटितत्वेनेति । अत्र धूमवान् अवृत्तिवह्नेरित्यादौ धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः, निरुक्तव्यभिचारस्य व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वेन व्यभिचारसजातीयवृत्तिवह्निरूपसाधनाऽप्रसिद्धिघटितत्वादतः साधनग्रहाऽविरोधित्वनिवेशः । एवं अवृत्तिवह्निकालीनधूमवान् वह्नेरित्यादावपि

❀ गादाधरी ❀

ज्ञाननिष्ठविषयितासंबन्धेन व्याप्तिग्रहप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिरूपस्य व्यभिचारादिविभाजकस्याऽत्र प्रवेशात्, तादृशरूपस्य च व्यभिचारविशिष्टप्रमेयत्वादिसाधारणत्वादित्याहुः ।

तन्न, व्यभिचारघटितबाधादावपि विशिष्टान्तराऽघटितत्वाऽघटितत्व-

❀ चन्द्रकला ❀

तेन प्रमेयत्वविशिष्टव्यभिचारे विशिष्टान्तराऽघटितत्वविशेषणयुक्तस्य तादृशव्यभिचारत्वस्याऽवर्त्तमानतया स्वपदेन तस्योपादानाऽसम्भवेऽपि न क्षतिरिति ध्येयम् ।

साध्यसाधनेति । विशिष्टसाध्यसाधनग्रहाऽप्रतिबन्धकनिश्चयनिष्ठविषयितासम्बन्धेनेत्यर्थः । व्याप्तिग्रहेति । व्याप्तिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपविशिष्टनिश्चयत्वस्य व्यापकं तद्रूपस्येत्यर्थः । अत्र=प्रतियोगिकोटिप्रविष्टस्वत्वघटितलक्षणे । व्यभिचारविशिष्टेति । व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतायाःप्रमेयत्वविशिष्टव्यभिचारत्व इव व्यभिचारविशिष्टमेयत्वत्वेऽप्यक्षतत्वादितिहृदयम् ।

वस्तुतस्तु प्रतियोगिनि स्वत्वान्तर्भावपक्षे स्वावच्छेदकविषयितानिरूपकतावच्छेदकत्वसम्बन्धेन स्ववृत्तिर्या विशिष्टपक्षसाध्यादिग्रहप्रतिबन्धकतान्यतमप्रतिबन्धकता तेन सम्बन्धेन तद्विशिष्टं यत् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं रूपं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यद् यत् स्वं तत्तदवच्छिन्नविषयकत्वाभावकूटवद्यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वं हेत्वाभासत्वमित्येवैतन्मते प्रतिबन्धकताघटितलक्षणार्थो वक्तव्यः । तेन न बाधविशिष्टेऽसिद्ध्यादिविशिष्टे वा प्रमेयत्वादावतिव्याप्तिः शंकनीया । स्वपदं लक्ष्यतानवच्छेदकप्रमेयत्वविशिष्टव्यभिचारत्वादिरूपविशिष्टधर्मपरं, सर्वत्रैव तादृशप्रमेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादाय लक्षणं संगमनीयमिति तु युक्तमुत्पश्यामः ।

निरुक्तं मतं दूषयति तन्नेति । तथाच निरुक्तरीत्या व्यभिचारत्वादेर्निर्वचने धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽव्याप्तिस्तादृशवह्निमत्त्वरूपबाधत्ववृत्ति यत् विशिष्टान्तराऽघटितत्वाघटितं तादृशं

❀ कलाविलासः ❀

धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः, उक्तव्यभिचारस्य साधनग्रहाऽविरोधिव्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वेन व्यभिचारसजातीयवृत्तिवह्निरूपविशिष्टान्तरसाध्याऽप्रसिद्धिघटितत्वात् । अतःसाध्यग्रहाऽविरोधित्वनिवेशः ।

❀ गादाधरी ❀

भिचारत्वादिसत्त्वेन तद्घटकव्यभिचारादेर्व्यभिचारत्वादिना तत्सजातीयतया तत्संग्रहानुपपत्तेः।

नच स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयं, तथाच बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्त्वान्न तादृशबाधादिसजाती-

❀ चन्द्रकला ❀

व्यभिचारत्वं तत्समानाधिकरणं तादृशबाधत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् धूमव्यभिचारिवह्नित्वं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकतादृशबाधत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य निरुक्तबाधत्वे विरहात् तस्य लक्षणघटकतादृशयद्रूपपदेन धर्त्तुमशक्यत्वात् स्वपदेनैव तादृशबाधत्वस्योपादानसम्भवादित्याह व्यभिचारेति।

तद्घटकेति तादृशबाधघटकेत्यर्थकम्। तत्संग्रहेति व्यभिचारघटितबाधाऽव्याप्तेरित्यर्थः।

ननु प्रतियोगिनि स्वत्वान्तर्भावपक्षे स्ववृत्तिहेत्वाभासविभाजकरूपत्वव्यापकं यत् स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं रूपं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं तादृशस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वमेव यद्रूपे विशेषणं देयम्, व्यापकता च स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वसम्बन्धेन। तथाच न व्यभिचारघटितबाधादावव्याप्तिः, व्यभिचारघटितबाधत्ववृत्तिहेत्वाभासविभाजकरूपत्वस्य बाधत्वेऽपि सत्त्वेन तत्र व्यभिचारत्वस्योक्तसम्बन्धेन विरहात् व्यभिचारत्वस्य तादृशबाधत्ववृत्तिहेत्वाभासविभाजकरूपत्वाऽव्यापकत्वादित्याशंकते नचेति। वाच्यमितिपरेणान्वयः।

स्ववृत्तीति। तादृशबाधत्वादिवृत्तिहेत्वाभासविभाजकरूपत्वव्यापकत्वमित्यर्थः। यावत्पदस्य व्यापकत्वार्थकत्वादित्याशयः। तादृशबाधेति व्यभिचारघटितबाधेत्यर्थकम्।

❀ कलाविलासः ❀

स्ववृत्तियावद्धेत्वेति। ननु धूमव्यभिचारिमत्त्वरूपस्वसजातीयविशिष्टान्तरधूमव्यभिचारिवह्नित्वरूपव्यभिचारत्वघटितं यत् स्वं धूमव्यभिचारिवह्निमत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वे विरहात् व्यभिचारघटितबाधेऽव्याप्तिरशक्यपरिहारेतिचेन्न, स्वसजातीयविशिष्टान्तरघटितं यत् स्वं तदघटितत्वपदेन तदवच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयितावत्त्व-तदवच्छिन्नविषयकत्वोभयाभावयत्प्रतीतिविषयतावच्छेदकत्वस्य विवक्षितत्वात्, निरुक्तव्यभिचारघटितबाधविषयकप्रतीतेः धूमव्यभि-

❀ गादाधरी ❀

यत्वम् , अतस्तत्संग्रहसम्भव इति वाच्यम् , एवं सति बाधविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्म्मेण सजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धावपि तद्घटितत्वाऽसत्त्वेन तत्राऽतिव्याप्तेः । तस्मात् व्यभिचारादिघटितबाधादेः संग्रहप्रकारोऽग्रे प्रदर्शनीय एवाऽऽदरणीयः ।

❀ चन्द्रकला ❀

समाधानमाह एवं सतीति । स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यविवक्षणे सतीत्यर्थः । स्ववृत्तीति । व्यभिचारघटितबाधवृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेणेत्यर्थः । तद्घटितत्वेति व्यभिचारविशिष्टबाधघटितत्वस्याऽसत्त्वेनेत्यर्थः ।

अतिव्याप्तेरिति । स्ववृत्तिहेत्वाभासविभाजकरूपत्वव्यापकत्वस्य स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मविशेषणत्वे बाधविशिष्टव्यभिचारेऽतिव्याप्तिः, बाधविशिष्टव्यभिचारत्वरूपस्ववृत्तिबाधत्वादिप्रत्येकसमानाधिकरणं न व्यभिचारत्वं नवा बाधत्वम्, अपितु बाधविशिष्टव्यभिचारत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारविशिष्टबाधत्वमेव, तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्य च बाधविशिष्टव्यभिचारत्वेऽसत्त्वात् स्वपदेन बाधविशिष्टव्यभिचारत्वस्योपादातुमशक्यत्वात् प्रमेयत्वविशिष्टव्यभिचारत्वस्य तादृशत्वेन स्वपदग्राह्यत्वसम्भवेऽपि तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयद्रूपपदेन बाधविशिष्टव्यभिचारत्वोपादानस्याऽवश्यकत्वादिति भावः ।

अग्रे = अत्रवदन्तिकल्पे । आदरणीय इति । तथाच प्रतिबन्धकताघटितलक्षणे व्यभिचारघटितबाधादावव्याप्तिवारणप्रयासो निरर्थक इत्याशयः ।

❀ कलाविलासः ❀

चारिवह्निमत्त्वावच्छिन्नविषयकत्वेऽपि तादृशवह्निमत्त्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयितावत्त्वविरहेण तत्रोभयाभावस्याक्षतत्वात् । प्रमेयत्वविशिष्टव्यभिचारविषयकप्रतीतौ तादृशोभयस्यैव सत्त्वेन न तत्रातिव्याप्तिरिति प्राञ्चः ।

ननु हेत्वाभासविभाजकरूपाणि यावन्ति तत्प्रत्येकाश्रयीभूतं यत् विशिष्टान्तरं तद्घटितं यत् स्वं तदघटितत्वनिवेशादेव बाधविशिष्टव्यभिचारे नातिव्याप्तिः, बाधविशिष्टव्यभिचारस्यापि बाधत्व-व्यभिचारत्वादिप्रत्येकाश्रयीभूतबाधव्यभिचारघटितत्वात् , व्यभिचारघटितबाधत्वं तु नैतादृशं स्वम्, तदाश्रयवृत्तिबाधत्वाश्रयबाधरूप-

* दीधितिः *

तेन प्रमेयत्वादिविशिष्टे व्यभिचारादौ नातिप्रसङ्गः ।

* गादाधरी *

मेयत्वविशिष्टे व्यभिचारादौ = तादृशव्यभिचारत्वाद्यवच्छिन्ने, नातिप्रसङ्गः = न दोषत्वप्रसङ्गः । अत्र मेयत्वविशिष्टव्यभिचारो दोषः इत्यादिव्यवहाराभावान्नेष्टापत्तिः सम्भवति ।

न च विशिष्टव्यभिचारादौ शुद्धव्यभिचारत्वादिना दोषत्वस्याक्षततयोक्तविशेषणदानेऽपि तादृशव्यवहारापत्तिर्दुर्वारैवेति, तत्रेष्टापत्तौ च व्यर्थं विशेषणमिति वाच्यम्, दोषादिपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकत्वेनान्वयितावच्छेदक-

* चन्द्रकला *

ननु प्रमेयत्वविशिष्टव्यभिचारस्य दोषत्वमिष्टमेवेति विशिष्टान्तराऽघटितत्वविशेषणदानमनर्थकमित्यत आह अत्रेति । निरुक्तलक्षणे इत्यर्थः ।

ननु व्यभिचारो दोष इति व्यवहारस्य प्रामाणिकतया प्रमेयत्वविशिष्टव्यभिचारो दोष इत्यस्यापि व्यवहारस्य प्रामाणिकत्वमवश्यमभ्युपगन्तव्यम्, तथाचेष्टापत्तौ विशिष्टान्तराऽघटितत्वविशेषणं व्यर्थं स्यादित्याशंक्य समाधत्ते दोषादिपदस्येति । दोषव्यवहारविषयस्येत्यादिः ।

निरुक्तेति । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिब-

* कलाविलासः *

विशिष्टान्तरघटितत्वस्य तत्राऽसत्त्वात् इति चेन्न, यादृशस्थलविशेषे प्रमेयत्वविशिष्टव्यभिचारविषयकं ज्ञानं कदाचित् वह्न्यभावविशिष्टह्रदविषयकमेव भवति कदाचिच्च वह्नित्वेन घटाद्यवगाहि वह्न्यभाववद्ध्रदविषयकमेव जायते नत्वनयोरन्यतरानवगाह्यपि भवति, तादृशस्थले प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यापत्तेः, तादृशविशिष्टान्तरबाधघटितस्वात्मकबाधत्वावच्छिन्नाऽविषयकवह्नित्वेन घटावगाहिवह्न्यभाववद्ध्रदविषयकप्रमेयत्वविशिष्टव्यभिचारविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वेऽनपायादिति ध्येयम् ।

अथ ह्रदे वह्निसाधने धूमो दुष्ट इत्यादिवाक्यात् ह्रदविशेष्यकवह्निप्रकारकतादृशधूमप्रकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्मावच्छिन्नसम्बन्धी धूम इत्याकारकबोधजननसम्भवेऽपि पर्वते वह्निसाधने धूमो न दुष्ट इत्यादिव्यवहारानुपपत्तिः, तादृशस्थले पर्वतविशेष्यकवह्न्यादिप्रकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकधर्मस्यैवाप्रसिद्धतया तदवच्छिन्नसम्बन्धित्वा-

❀ गादाधरी ❀

धर्म्मबोधकताया व्युत्पन्नतया प्रकृते च मेयत्वविशिष्टव्यभिचारत्वादिरूपस्यान्वयितावच्छेदकस्योक्तविशेषणासत्त्वेनातिप्रसङ्गाभावादिति हृदयम् ।

नन्वाश्रयासिद्ध्यादिस्थले पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमेव दोषस्तस्यैव हेतुनिष्ठतया हेतोर्दुष्टत्वव्यवहारनिर्वाहकत्वात्, तादृशधर्मस्य च

❀ चन्द्रकला ❀

न्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपस्वपदार्थविशेषणविशिष्टान्तराऽघटितत्वावच्छिन्नस्वावच्छिन्ननिरूपिता या प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिता सा यस्य स्वस्य एवम्भूतं यत् स्वं तत्त्वेन दोषान्वयितावच्छेदकतादृशस्वपदार्थबोधकताया इत्यर्थः ।

प्रमेयत्वविशिष्टव्यभिचारत्वं नैतादृशं स्वमित्याह प्रमेयत्वेति । उक्तविशेषणविरहेण = विशिष्टान्तराऽघटितत्वविशेषणविरहेण । अतिप्रसंगाभावात् = प्रमेयविशिष्टव्यभिचारो दोष इति व्यवहारापत्तिविरहात् । व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य जनकतया तादृशदोषव्यवहारेऽपि दोषत्वावच्छिन्नज्ञानस्य हेतुताया आवश्यकतया विशिष्टान्तराऽघटितत्वविशिष्टदोषतावच्छेदकतादृशव्यभिचारत्वज्ञानाऽसम्भवान्न प्रमेयत्वविशिष्टव्यभिचारो दोष इति व्यवहारः इति तु तत्त्वम् ।

एवञ्चेत्यादिदीधितिमवतारयति नन्वाश्रयाऽसिद्ध्येति । काञ्चनमयपर्वतो वह्निमान् धूमादित्यादिस्थले काञ्चनमयत्वाऽभावविशिष्टपर्वतस्य आश्रयासिद्धिरूपदोषत्वाभ्युपगमे तादृशपर्वतस्य धूमरूपहेताववर्त्तमानतया धूमस्य दुष्टत्वानुपपत्तिः स्यात्, काञ्चनमयत्वाभावविशिष्टपर्वतकत्वस्य धूमादिहेतुनिष्ठत्वेऽपि तस्य काञ्चनमयत्वाभावविशिष्टपर्वतरूपविशिष्टान्तरघटिततया लक्ष्यत्वमेव न सम्भवतीति कस्याश्रयासिद्धित्वं स्वीकरणीयमित्यभिप्रायवानाहेतिसमुदितग्रन्थतात्पर्यम् ।

❀ कलाविलासः ❀

भावस्य तदवच्छिन्नसम्बन्धिभेदस्य वा नञा बोधयितुमशक्यत्वादिति चेदत्र केचित्—पर्वते वह्निसाधने धूमो न दुष्ट इत्यादावनन्यगत्या स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन स्ववृत्तितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयित्वव्यापकत्वाभाववत्प्रकृतानुमितिप्रतिबन्धकताको धूम इत्याकारकस्यैव बोधस्य स्वीकारात् प्रथमं स्वपदं वह्न्यभावादिपरं, द्वितीयञ्च स्वपदं हेतुपरमित्याहुः ।

अन्ये तु पर्वते वह्निसाधने धूमो न दुष्ट इत्यादौ दुषधात्वर्थः प्रतिबन्धकत्वमात्रम्, तत्र अनुमित्यर्थकसाधनपदोत्तरसप्तम्यर्थनिरूपितत्वस्यान्वयः, तादृशनिरूपितत्वान्वितप्रतिबन्धकतायाश्च स्वानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकध-

❀ दीधितिः ❀

**एवञ्च पक्षतावच्छेदकादिविरहविशिष्टः पक्षः, पक्षनिष्ठस्तद्विरहो वा,**

❀ गादाधरी ❀

तादृशाऽभाववत्पक्षादिरूपतादृशविशिष्टान्तरघटिततयाऽव्याप्तिरित्यत आह एवञ्चेति। तादृशविशेषणदाने चेत्यर्थः। आदिपदात् साध्यादिपरिग्रहः। पर्वतादिधर्मिककाञ्चनमयत्वादिविशिष्टबुद्धौ पर्वतः काञ्चनमयत्वाभाववानित्यादिधर्म्मिविशेष्यकनिश्चयस्येव पर्व्वते काञ्चनमयत्वं नास्तीत्यादिधर्म्मिविशेषणकनिश्चयस्यापि विरोधित्वमानुभविकमतस्तद्विषयस्यापि दोषत्वमाह पक्षनिष्ठ इति। आधेयतासम्बन्धेन पक्षविशिष्ट इत्यर्थः। समुच्चयार्थको वाकारः।

❀ चन्द्रकला ❀

तादृशेति विशिष्टान्तराऽघटितत्वविशेषणदाने चेत्यर्थः। तथाच तादृशस्थले काञ्चनमयत्वाभावविशिष्टपर्वत एवाश्रयाऽसिद्धिरिति न विशिष्टान्तरघटितत्वशंकापीति हृदयम्। साध्यादिपरिग्रह इति। तथाच साध्यतावच्छेदकाभावविशिष्टसाध्यमेव साध्याऽप्रसिद्धिः नतु तादृशसाध्यकत्वं, येन विशिष्टान्तरघटितत्वशंका पुनः स्यादिति तात्पर्यम्।

ननु पर्वतः काञ्चनमय इत्याकारकबुद्धौ काञ्चनमयत्वाभावविशिष्टपर्वतनिश्चयस्यैव प्रतिबन्धकतया पर्वतनिष्ठकाञ्चनमयत्वाभावनिश्चयस्यातथात्वात् कथं पर्वतादिनिष्ठकाञ्चनमयत्वाभावस्य दोषत्वं दीधितिकृताऽभिहितमित्यत आह पर्वतादिधर्मिकेति। पर्वतादिविशेष्यकेत्यर्थकम्। पर्वते काञ्चनमयत्वं नास्तीति। पर्वतनिष्ठः काञ्चनमयत्वाभाव इत्यादिपर्वतनिष्ठप्रकारताकनिश्चयस्यापीत्यर्थः।

विरोधित्वम्=प्रतिबन्धकत्वम्। आनुभविकमिति। तादृशनिश्चयोत्तरं काञ्चनमयत्वप्रकारकपर्वतविशेष्यकज्ञानस्यानुत्पाददर्शनादित्याशयः। तद्विषयस्य=काञ्चनमयत्वाभावः पर्वते इत्याकारकज्ञानविषयविशिष्टस्य अपि। आधेयतेति। स्वरूपसम्बन्धावच्छिन्नेत्यादिः।

ननु काञ्चनमयत्वाभावविशिष्टपर्वत-पर्वतविशिष्टकाञ्चनमयत्वाभावयोर्द्वयोरेवाश्रयासिद्धितया तद्विरहो वेत्यत्र वाकारो निरर्थकः, पूर्वस्य व्यवच्छेदाऽसम्भवादत आह वाकार इति। तथाचोक्तसमूहस्यैव दोषत्वसूचनाय वाकार इति भावः।

❀ कलाविलासः ❀

मांवच्छिन्नसम्बन्धित्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थाभावेऽन्वयः, तादृशाभावस्य निष्ठार्थाश्रयेऽन्वयः, आश्रयस्य चाभेदेन प्रथमान्तार्थे धूमादावित्या-

* दीधितिः *

**साध्याभाववद्वृत्ति साधनं, साधनवद्वृत्तिस्साध्याभावो वा हेतुदोषः। येन केनापि सम्बन्धेन**

* गादाधरी *

साधनवद्वृत्तिः साध्याभाव इति। साधनधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानं साधनधर्मिकव्याप्तिग्रहप्रतिबन्धकम्। साधनवति साध्याभाव इति ज्ञानेऽपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियमतो भासत इति तदपि व्याप्तिज्ञानप्रतिबन्धकमितिमताभिप्रायेण। तादृशज्ञाने नियमतस्तदभानेऽपि मणिमन्त्रादिन्यायेन तस्यासमानविशेष्यकस्यापि व्याप्तिज्ञानप्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेण वा। दोष इति। ननु पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमिति शेषः। तथाचालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः।

ननु पक्षतावच्छेदकाभाववत्पक्षादीनां हेत्ववृत्तित्वात् कथं हेतौ दुष्टताव्यवहार इत्यत आह येन केनापीति। एकज्ञानविषयत्वादिने-

* चन्द्रकला *

हेतुमन्निष्ठसाध्याभावस्य व्यभिचारत्वं संगमयति साधनधर्मिकेति। प्रकृतहेतुविशेष्यकेत्यर्थकम्। साधनवद्वृत्तीति। आधेयतासम्बन्धेन हेतुमद्विशेषणकः साध्याभाव इत्यर्थः। इति ज्ञानेपि = इत्याकारकनिश्चयेऽपि। साधने = हेतौ। तुल्यवित्तीति। स्वप्रयोजकसामग्रीजन्यग्रहविषयतया एकज्ञानविषयतया वेत्यर्थः।

भासत इति। हेतुमन्निष्ठसाध्याभाव इत्याकारकज्ञानकाल एव तादृशज्ञानीयसाध्याभावविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकता-साध्याभाववद्वृत्तित्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना तादृशावच्छेदकतात्वादित्याकारकं समूहालम्बनं तादृशं हेतुनिष्ठसाध्याभाववद्वृत्तित्वावगाहिज्ञानं भवतीति हृदयम्।

मतान्तरमाह तादृशज्ञान इति। साधनवन्निष्ठसाध्याभाव इत्याकारकज्ञाने इत्यर्थः। नियमत इति। अनुमानादिनेत्यादिः। तदभानेऽपि = हेतौ साध्याभाववद्वृत्तित्वाऽविषयकत्वेऽपि। तस्य = हेतुमति साध्याभाव इति निश्चयस्य। तथाच हेतुमन्निष्ठसाध्याभावस्य प्राचीनमतमवलम्ब्यैव दोषत्वमभिहितमिति भावः।

शेषं पूरयति नन्विति। तत्र = पक्षतावच्छेदकाभाववत्पक्षकत्वे। काञ्चनमयः पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववत्पर्वतस्यैव लक्ष्यतया आश्रयासिद्धित्वे तादृशपर्वतस्य धूमादिहेतावसत्त्वात् हेतोर्दुष्टत्वव्यवहारो न स्यात्, व्यवहर्त्तव्यज्ञानाऽसम्भवादित्याक्षिप्य येन केनापीति दीधितिमुत्थापयति नन्विति। कथमिति। कारणाभावादित्यादिः।

❀ दीधितिः ❀

तद्वांश्च प्रकृतहेतुर्दुष्टः।

❀ गादाधरी ❀

त्यादिः। तद्वान्=तदवच्छिन्नः, दुष्टः=दुष्टपदप्रतिपाद्यः। तथाच हेतौ तादृशदोषानधिकरणत्वेऽपि न क्षतिः। दुष्ट इत्यादौ सामान्यतः सम्बन्धिन एव निष्ठार्थत्वत्। एवं च एकज्ञानविषयत्वादिना वह्न्यभाववद्ह्रदादिरूपदोषस्य धूमादौ सत्त्वेऽपि पर्वतादौ वह्न्यादिसाधने तस्य दुष्टत्वव्यवहारविषयतायास्तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहारस्थले तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताकधर्म्मावच्छिन्नसम्बन्धी दुष्टपदेन बोध्यते, ईदृशव्युत्पत्त्या पूर्ववद्धारणेऽपि पूर्ववदेव वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारो निरुक्तदोषमात्रस्य दुष्टत्वव्यवहारविषयतावच्छेदकत्वे दुर्वार इति प्रकृतहेतुतावच्छेदकविशिष्टसम्बन्धो निष्ठार्थतावच्छेदको वाच्यः।

❀ चन्द्रकला ❀

दुष्टपदेति दुष्टपदजन्यप्रतीतिविषयतावानित्यर्थः। हेतोः=धूमादेः। तादृशेति काञ्चनमयत्वाद्यभावविशिष्टपर्वतादिरूपदोषानधिकरणत्वेऽपीत्यर्थः। सम्बन्धिनः=सम्बन्धमात्रविशिष्टस्य। निष्ठार्थत्वात्=दूषधातूत्तरनिष्ठाप्रत्ययार्थत्वात्।

नन्वेकज्ञानविषयतासम्बन्धेन दोषसम्बन्धिन एव दुष्टत्वे वह्न्यभाववान् ह्रदो धूमश्चेत्याकारकैकसमूहालम्बनज्ञानविषयताया धूमे सत्त्वेऽपि पर्वतादौ वह्निसाधने धूमो दुष्ट इतिव्यवहारो यदि न सम्भवति, तादृशस्थले पर्वतपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नसम्बन्धी धूम इत्येवं समुदितशब्दार्थतया तादृशनिरूपकतावच्छेदकधर्माऽप्रसिद्ध्या तादृशवाक्यार्थज्ञानाऽसम्भवेन व्यवहर्त्तव्यज्ञानाऽभावात्, तथापि वह्निना धूमसाधने रासभो दुष्ट इतिव्यवहारापत्तिः स्यात्, वह्निहेतुकधूमसाध्यकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नस्य रासभविषयकसमूहालम्बनैकज्ञानविषयतासम्बन्धेन सम्बन्धिताया रासभे सत्त्वेन व्यवहर्त्तव्यज्ञानरूपकारणबाधाऽसम्भवादित्याशंक्य प्रकृतहेतुरित्युक्तिं समर्थयति एवञ्चेत्यादिना। सम्बन्धिमात्रस्य निष्ठार्थत्वे इत्यर्थः।

तद्रूपावच्छिन्नेति। पक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकस्वात्मकधर्मावच्छिन्नसम्बन्धबोधकत्वव्युत्पत्त्येत्यर्थः। निरुक्तेति। लक्षणाक्रान्तदोषमात्रस्येत्यर्थः। एकज्ञानविषयतासम्बन्धेनेत्यादिः। प्रकृतहेतुतेति। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्ध इत्यर्थः।

❁ गादाधरी ❁

एतल्लाभाय प्रकृतहेतुरित्युक्तम् ।

ह्रदे वह्नेः साधने धूमो दुष्ट इत्यत्र ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्न-विषयिताकधर्म्मावच्छिन्नसम्बन्धी धूम इत्यन्वयबोधः, तत्र प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्म्मविशिष्ट एव दुषधातोरर्थः, साधनपदं लक्षणया धूमत्वावच्छिन्नहेतुकानुमितिपरं, तत्र ह्रद इति सप्तम्यन्तार्थह्रदत्वावच्छिन्नपक्षकत्वस्य, वह्नेरिति षष्ठ्यन्तार्थस्य वह्नित्वावच्छिन्नसाध्यकत्वस्य चान्वयः, तादृशानुमित्यन्वितसप्तम्यर्थनिरूपितत्वस्य दुषधात्वर्थैकदेशे प्रतिबन्धकत्वेऽन्वयः। एवञ्च पर्व्वते वह्नेः साधने धूमो दुष्ट इत्यत्र पर्व्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयताकधर्म्मविशिष्टसम्बन्धी धूम इत्येव प्रतीयते, तत्र तादृशधर्म्मस्याप्रसिद्ध एवेति न तथा व्यवहारः।

❁ चन्द्रकला ❁

प्रकृतहेतुरित्युक्तमिति। तथाच स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत एव दुष्टत्वाभ्युपगमे न वह्निना धूमसाधने रासभो दुष्ट इतिव्यवहारापत्तिः, धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नरूपदोषस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन रासभे विरहात् व्यवहर्त्तव्यज्ञानस्यैवाऽसम्भवादिति भावः। ह्रदो वह्निमान् धूमादित्यादौ ह्रदे वह्नेःसाधने धूमो दुष्ट इतिव्यवहारोपपत्तये ह्रदपदोत्तरं सप्तम्यर्थो विशेष्यत्वं तत्र ह्रदत्वरूपपक्षतावच्छेदकावच्छिन्ननिरूपिताधेयतासम्बन्धेन प्रकृत्यर्थस्य ह्रदादेरन्वयः, वह्नेरित्यत्र षष्ठ्यर्थो विधेयत्वम्, तत्र वह्नित्वरूपसाध्यतावच्छेदकावच्छिन्ननिरूपिताधेयतासम्बन्धेन वह्नेः प्रकृत्यर्थस्यान्वयः तादृशह्रदान्वितविशेष्यत्व-वह्न्यन्वितविधेयत्वयोश्च निरूपकत्वसम्बन्धेन लाक्षणिकधूमत्वावच्छिन्नहेतुकानुमितिपरायां साधनपदार्थीभूतायां तादृशानुमितावन्वयः, तादृशानुमित्यर्थकसाधनपदोत्तरसप्तम्यर्थनिरूपितत्वस्य च प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नार्थकदुषधात्वर्थैकदेशे प्रतिबन्धकतायामन्वयः, दूषधातूत्तरनिष्ठार्थस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धविशिष्टस्य सम्बन्धिनोऽभेदेन प्रथमान्तार्थे धूमेऽन्वयःस्वीकरणीयः। तथाच ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकता-वच्छेदकवह्न्यभावविशिष्टह्रदत्वरूपस्वात्मकधर्मावच्छिन्नस्य स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वरूपसम्बन्धवदभिन्नो धूम इत्यन्वयबोधस्तत्र पर्यवसितः।

* दीधितिः *

**यादृशधर्म्मिणि यादृशधर्म्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्म्मिणस्तादृशधर्म्मवत्त्वं हेतुदोष इत्यपि कश्चित् ।**

* गादाधरी *

**पक्षविशेषादिकमनन्तर्भाव्य धूमो दुष्ट इति व्यवहारस्त्वबाधित इष्यत एवेति दिक् । साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धिर्न तु तद्विशिष्टसाधनादेरतो न तस्य दोषत्वमिति कश्चिदाह । व्याचष्टेऽपि लक्षणमन्यथैव, अन्यथातिप्रसङ्गात् । तादृशव्याख्यामुपन्यस्यति यादृशेति । यद्रूपावच्छिन्नेत्यर्थकम् । ज्ञानम् = ज्ञानत्वावच्छिन्नम् । तस्य धर्मिणः = तद्धर्मावच्छिन्नस्य, तेन सम्बन्धेनेति शेषः । तादृशधर्मवत्त्वम् = तद्रूपावच्छिन्नधर्म्मवत्त्वम् ।**

* चन्द्रकला *

तथासति पर्वते वह्नेः साधने धूमो दुष्ट इतिव्यवहारो न सम्भवति, तत्र दूषधात्वर्थस्य तादृशप्रतिबन्धकतावच्छेदकविषयिताकधर्मावच्छिन्नस्याऽप्रसिद्धया वाक्यार्थाप्रसिद्धेर्व्यवहर्त्तव्यज्ञानाऽसम्भवादित्येवं ह्रदे इत्यादितो न तथा व्यवहार इत्यन्तसमुदितग्रन्थतात्पर्यम् ।

नन्वेवं पक्षविशेषादिकं परित्यज्य केवलं धूमो दुष्ट इतिव्यवहारः स्यादित्यत आह पक्षेति । तथाच तादृशव्यवहार इष्ट एवेति भावः । यादृशे धर्मिणीत्यादिदीधितिकारोक्तलक्षणोत्थितौ वीजमाह साधनेति । हेतुनिष्ठत्वविशिष्टसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारत्वं नतु साध्याभाववद्वृत्तित्वविशिष्टहेतोस्तथात्वम् इति कस्यचिन्मतमित्याशयः । अतः = साधननिष्ठसाध्याभाववद्वृत्तित्वादेर्व्यभिचारतः । तस्य = साध्याभाववद्वृत्तित्वविशिष्टसाधनस्य ।

ननु यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकमित्यादि पूर्वोक्तलक्षणेनैवोपपत्तौ निरुक्तलक्षणान्तरानुसरणमनर्थकमित्यत आह अन्यथेति । पूर्वोक्तलक्षणार्थस्यादरे इत्यर्थः । अतिप्रसंगादिति । यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमितिपूर्वोक्तलक्षणादरे साध्याभाववद्वृत्तित्वविशिष्टहेतावतिव्याप्तिः स्यात्, निरुक्तहेतुविषयकनिश्चयत्वव्यापकतायाः व्याप्तिविषयकप्रकृतानुमितिप्रतिबन्धकतायां सर्ववादिसिद्धत्वादतः प्रकारान्तरेणैव लक्षणं वक्तव्यमिति भावः । ज्ञानत्वावच्छिन्नम् = निश्चयत्वावच्छिन्नम् । तेन तादृशदोषविषयकसंशयादिकमादाय नाऽसम्भवः । तद्रूपावच्छिन्नधर्मवत्त्वमिति । तथाच यद्रूपावच्छिन्नविशेष्यकयत्सम्बन्धावच्छिन्न-

❀ गादाधरी ❀

साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिकं न दोषः, साधनादेः साध्याभाववद्वृत्तित्वादिधर्मताविरहात् ।

❀ चन्द्रकला ❀

यादृशधर्मप्रकारताकनिश्चयत्वेन प्रकृतानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्रूपावच्छिन्नवृत्तित्वविशिष्टतद्रूपावच्छिन्नवत्त्वं हेतुदोषः इति पर्यवसितः लक्षणार्थः ।

धूमवान् वह्नेरित्यादौ वह्नित्वावच्छिन्ने धर्मिणि स्वरूपेण धूमाभाववद्वृत्तित्वधर्मप्रकारकनिश्चयस्य प्रकृतानुमितिप्रतिबन्धकतया स्वरूपेण वह्नित्वावच्छिन्नवृत्तित्वविशिष्टधूमाभाववद्वृत्तित्ववत्त्वे लक्षणसमन्वयः ।

एवं ह्रदत्वावच्छिन्ने स्वरूपेण वह्न्यभावत्वावच्छिन्नप्रकारकनिश्चयस्यापि ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्ननिष्ठ वह्न्यभावत्वावच्छिन्नवत्त्वेऽपि लक्षणसमन्वयो बोध्यः ।

ननु धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वे वह्नित्वावच्छिन्नवत्त्वमपि दोषः स्यात्, धूमाभाववद्वृत्तित्वं वह्नावित्याकारकधूमाभाववद्वृत्तित्वविशेष्यकाधेयतासम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारकनिश्चयस्यापि वह्निधर्मिकधूमव्याप्तिविषयकप्रकृतानुमितिप्रतिबन्धकतया तादृशे वृत्तित्वे धर्मिणि वह्नित्वावच्छिन्नवत्त्वस्याक्षतत्वादित्यत आह **साधनादीति** । आधेयतासम्बन्धेन वह्न्यादिविशेषणकधूमाद्यभाववद्वृत्तित्वादिविशेष्यकनिश्चयस्येत्यर्थः । आदिना ह्रदादिविशेषणकवह्न्यभावादिविशेष्यकनिश्चयादेः परिग्रहः ।

**साध्येति** । धूमाद्यभाववद्वृत्तित्वादेरित्यर्थः । आदिपदात् साध्याभावादेः परिग्रहः । साधनीयत्वादिकम् = आधेयतासम्बन्धेन वह्न्यादिविशिष्टत्वम् । आदिना ह्रदादिरूपपक्षीयत्वपरिग्रहः । साधनादेः = वह्न्यादिरूपहेतोः । आदिना पक्षादेरुपग्रहः । **साध्येति** । धूमाद्यभाववद्वृत्तित्वादिधर्मताविरहादित्यर्थः । अत्राप्यादिना साध्याभावादिरूपवह्न्यभावादिपरिग्रहः ।

आधेयतासम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन वृत्तिमत्त्वरूपधर्मत्वाऽप्रसिद्ध्या साध्याभाववद्वृत्तित्वे धर्मिणि यादृशधर्मवत्ताज्ञानस्येत्यनेन आधेयतासम्बन्धेन वह्न्यादिमत्त्वस्योपादानाऽसम्भवाद् वह्न्यादेस्तादृशवृत्तित्वधर्मताया वक्तुमशक्यत्वादितिभावः ।

निश्चयत्वावच्छिन्नत्वं प्रतिबन्धकतायां विवक्षितम्, तच्च निश्चयत्वनिष्ठावच्छेदक-

❀ गादाधरी ❀

अत्राप्यवच्छेदकत्वं पूर्ववन्नतु स्वरूपसम्बन्धविशेषः। पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभावत्त्वावच्छिन्नवत्त्वादावतिप्रसङ्गात्, तदवच्छिन्नधर्मिकतद्रूपावच्छिन्नवत्ताज्ञानत्वस्यापि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्, अवच्छेदकतापर्य्याप्तिविवक्षणे तु ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वाद्यवच्छिन्नवत्त्वेऽव्याप्तेः, वह्नित्वादिना घटाद्यवगाहिनो ह्रदो न वह्निमानित्यादिनिश्चयस्य ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्नविशेष्यकत्वास्तववह्न्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबन्धकता, अपि तु तद्विशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैवातस्तादृशमेव रूपं प्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणं न तु ह्रदत्वावच्छिन्नधर्म्मिकवह्न्यभावत्वावच्छिन्नप्रकारकत्वमिति यद्रूपपदेन वह्न्यभावत्वाद्युपादानं न सम्भवति,

❀ चन्द्रकला ❀

तानिरूपकत्वम्, अत्रावच्छेदकत्वं यदि स्वरूपसम्बन्धरूपं तदा ह्रदो वह्निमानित्यादौ ह्रदनिष्ठाऽभावत्वावच्छिन्नवत्त्वेऽतिव्याप्तिः, ह्रदधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतायाः ह्रदत्वावच्छिन्ने धर्मिणि अभावत्वावच्छिन्नविषयत्वावच्छिन्नतया अपि स्वीकरणीयत्वात्।

नच यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं तद्रूपावच्छिन्ने तद्रूपावच्छिन्नवत्त्वं हेतुदोष इत्युक्तौ न ह्रदनिष्ठाभाववत्त्वेऽतिव्याप्तिः, ह्रदविशेष्यतानिरूपितवह्न्यभाववत्त्वावच्छिन्नप्रकारताया एव तादृशप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणतया तादृशाभावत्वावच्छिन्नप्रकारतायाश्चाऽतथात्वादिति वाच्यम्, तथासति ह्रदनिष्ठवह्न्यभाववत्वेऽव्याप्त्यापत्तेः। ह्रदत्वादिना पदार्थान्तरावगाहिभ्रमादिसाधारण्यानुरोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयताया एव प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणतया ह्रदनिष्ठवह्न्यभावत्वावच्छिन्नविषयतायास्तथात्वस्य वक्तुमशक्यत्वादित्याह अत्राप्यवच्छेदकत्वमित्यादि। निरुक्तलक्षणेऽप्यवच्छेकदत्वमित्यर्थः। तद्रूपेति। अभावत्वावच्छिन्नवत्त्वानिश्चयस्यापीत्यर्थः। अव्याप्तौ हेतुमाह यतः वह्नित्वादिनेति। तादृशमेव रूपम् = ह्रदादिविशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकत्वम्। वह्न्यभावत्वाद्युपादानमिति। नचैवं पूर्ववदसम्भवसम्भवेऽव्याप्तिदान-

* गादाधरी *

पर्वतो वह्न्यभाववानित्यादौ पर्वतत्वावच्छिन्ननिष्ठवह्नित्वावच्छिन्नरूप-बाधादेरसंग्रहभयेन यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नप्रकारतानि-रूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकता तद्रूपविशिष्टे तद्रूपावच्छिन्नविशेषिततद्रूपावच्छिन्नवत्त्वं दोष इत्यादिविवक्षाया असम्भवात्। अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेरिव साध्याभाव-वद्वृत्तिसाधनादेरपि दोषत्वे क्षतिविरहात् एतावानायासोऽनर्थक इत्य-स्वरसः कश्चिदित्यनेन सूचितः।

यथाऽव्याख्यातयथाश्रुतार्थे निर्वह्निः पर्वतो वह्निमानित्यादौ प्रकृतपक्ष-तावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरप्रसि-द्ध्याऽव्याप्तिर्दर्शयिष्यते, तत्र विशिष्य पक्षतावच्छेदकाद्यप्रवेशे

* चन्द्रकला *

मनुचितमितिवाच्यम्, पर्वतो वह्न्यभाववानित्यत्र पर्वतनिष्ठवह्निमत्त्वे लक्षण-समन्वयसम्भवात् तत्र वह्नित्वादिना पदार्थान्तरावगाहिज्ञानस्याऽप्रतिबन्धकतया विशिष्टविषयकत्वेनैव वह्निमत्पर्वतनिश्चयस्य तादृशानुमितिप्रतिबन्धकताया आवश्य-कत्वादिति वदन्ति।

ननु स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वनिवेशेऽपि न ह्रदादिनिष्ठाभाव-वत्त्वेऽतिव्याप्तिः, यद्रूपावच्छिन्नविशेष्यतानिरूपितं यद्रूपावच्छिन्नप्रकारतानिरूपित-यद्रूपावच्छिन्नप्रकारत्वं प्रकृतानुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकता-वत् तद्रूपावच्छिन्ने तद्रूपावच्छिन्न विशिष्ट तद्रूपावच्छिन्नवत्त्वं हेतुदोष इति विवक्षया ह्रदनिष्ठवह्निविशेषिताभाववत्त्वस्यैव दोषत्वसम्भवादित्याशंकते **पर्वत** इति। असंग्रह-भयेन = अव्याप्तिभयेन।

तथाचोक्तरीत्या स्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षणे पर्वतो वह्न्यभाववानित्य-त्र पर्वतनिष्ठवह्नित्वावच्छिन्नवत्त्वरूपबाधेऽव्याप्तिः, पर्वतधर्मिकवह्न्यभावानुमितिम् प्रति निरुक्तबाधनिश्चयस्य पर्वतविशेष्यकवह्नित्वावच्छिन्नप्रकारताकत्वेनैव प्रतिबन्धकतया तादृशयद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नप्रकारताकत्वेनाऽतथात्वात् तत्र रूपद्वयस्यैवाऽप्रसिद्धेरिति भावः।

कश्चिदित्युक्तिं समर्थयति साधननिष्ठेति। तथाचोभयोरेव लक्ष्यतया पूर्वोक्त-लक्षणमेव सम्यगिति हृदयमितिदिक्।

दर्शयिष्यते, दीधितिकृतेति शेषः। तत्र = अनुमितौ। पक्षतावच्छेदकान्वयि विषयत्वं सतम्यर्थः। विशिष्येति पक्षतावच्छेदकतापर्याप्त्यधिकरणत्वेनेत्यादिः।

* दीधितिः *

**अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहः, ह्रदस्य वह्निधूमशून्यत्वम्,**

* गादाधरी *

नाऽप्रसिद्धिरतस्तन्निवेशप्रयोजनमाह अथेति। पर्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्वत्र न दोष इति सम्बध्यते। तथाच पक्षतावच्छेदकाद्यप्रवेशे पूर्वोक्तयुक्त्याऽसम्भवात्, तद्वारणाय यत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्य-हेतुकानुमितिसामान्यप्रतिबन्धकत्वमेव निवेश्यमिति पर्वतो वह्निमान् धूमादित्यादौ पर्वतादिनिष्ठकाञ्चनमयत्वाभावादावतिव्याप्तिः, तस्यापि काञ्चनमयत्वादिसहितपर्वतत्वादिरूपयत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतु-कानुमितिप्रतिबन्धकज्ञानविषयत्वादिति भावः। आदिपदञ्च वस्त्वन्तरसंग्रा-हकम्। प्रकृतानुमित्यविषयपदार्थाभावेऽतिव्याप्तिं सूचयित्वा तद्विषयसाध्या-द्यभावे तां सूचयति ह्रदस्येति। ह्रदनिष्ठं वह्निशून्यत्वं धूमशून्यत्वञ्चेत्यर्थः। ह्रदादिनिष्ठाभावेऽतिव्याप्तिसूचनञ्च

* चन्द्रकला *

नाऽप्रसिद्धिरिति। पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नपक्षाद्यप्रवेशे निर्वह्निः पर्वतो वह्निमानित्याकारकानुमितेरप्रसिद्धिसम्भवेऽपि पर्वतो वह्निमानित्याकारकानु-मितेर्नाप्रसिद्ध्याऽप्रसिद्ध्यभिधानमसंगतं स्यादिति भावः। तन्निवेशेति। पक्षता-वच्छेदकतायाः पर्याप्त्यधिकरणत्वादिनिवेशनप्रयोजनमित्यर्थः। यत्किञ्चिद्धर्मावच्छि-न्नपक्षकानुमितिसामान्यप्रतिबन्धकत्वनिवेशे पर्वतो वह्निमान् धूमादित्यादौ काञ्चन-मयत्वाभावविशिष्टपर्वते वह्न्यभावविशिष्टह्रदे धूमाद्यभावविशिष्टह्रदादौ चातिव्याप्तिः, काञ्चनमयपर्वतो वह्निमान् वह्निव्याप्यधूमवान् तादृशपर्वत इत्याकारिकायाः ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारिकाया अप्यनुमितेः यत्किञ्चिद्धर्मावच्छिन्नप-क्षकानुमितित्वेन धर्तुं शक्यतया तादृशानुमितिप्रतिबन्धकतायाः काञ्चनमयत्वाद्य-भावविशिष्टपर्वतादिनिश्चये सत्त्वादतः पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्न-विशेष्यकत्वस्यानुमितौ निवेशः इत्येवं भावमाह तथाचेति।

वस्त्वन्तरेति। घटत्वादिसंग्राहकमित्यर्थः। प्रकृतेति। पर्वतो वह्निमानित्याका-रकप्रकृतानुमित्यविषयीभूतं यत् काञ्चनमयत्वं तदभावेऽतिव्याप्तिमित्यर्थः। तद्विष-येति प्रकृतानुमितिविषयेत्यर्थकम्। पक्षनिष्ठविशेष्यताकत्वस्याप्यनिवेशसूचनाय ह्रदादौ वह्न्यभावेऽतिव्याप्तिरित्याह ह्रदादीति।

❀ दीधितिः ❀

**पर्वतस्य महानसीयवह्निधूमविरहित्वम्, मेयत्वस्य**

❀ गादाधरी ❀

प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यम्। महानसीयेति। महानसीयवह्न्यभावो महानसीयधूमाभावो वेत्यर्थः। अत्रातिव्याप्तिसूचनञ्च प्रकृतसाध्यतावच्छेदक—प्रकृतहेतुतावच्छेदकयोरनिवेशे बोध्यम्। इदमुपलक्षणम्—साध्यहेत्वोरनिवेशेऽपि जलत्वाभावादावतिव्याप्तिर्बोध्या, प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्मताज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयित्वा व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति। वह्निव्यभिचार इत्यनेनान्वयः। अत्रातिव्याप्तिस्तादृशदलसमुदायस्यैव अनिवेशे बोध्या।

❀ चन्द्रकला ❀

साध्यहेतुनिष्ठप्रकारताकानुमितिनिवेशेऽपि न निस्तारः, पर्वतो महानसीयवह्निमान् वह्निव्याप्यमहानसीयधूमवांश्चेत्याकारकानुमितिप्रतिबन्धके महानसीयवह्न्यभाववान् महानसीयधूमाभाववान् वेत्याकारकनिश्चयविषये महानसीयवह्न्याद्यभावविशिष्टपर्वतादावतिव्याप्त्यापत्तेरित्याह अत्रेति। महानसीयवह्न्यभावविशिष्टपर्वते महानसीयधूमाभावविशिष्टे तत्र चातिव्याप्त्यभिधानमित्यर्थः। प्रकृतेति। केवलसाध्यादिनिष्ठप्रकारताकानुमितिमात्रविवक्षणे साध्यतावच्छेदकहेतुतावच्छेदकयोरप्रवेशे इत्यर्थः। बोध्यमिति। साध्यतावच्छेदकतापर्याप्त्यधिकरणत्वादिनिवेशे तु न तत्राऽतिव्याप्तिः, पर्वतादौ वह्न्यादेः साध्यतास्थले वह्नित्वमात्राद्यवच्छिन्नप्रकारताकानुमितेरेव साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नानुमितित्वेन तत्र महानसीयवह्न्याद्यभावविशिष्टपर्वतादिनिश्चयस्याप्रतिबन्धकत्वादित्याशयः। यत्किञ्चिद्धर्मावच्छिन्नप्रकारताकानुमितिनिवेशे पर्वतो जलत्ववान् वह्निव्याप्यजलत्ववान् वेत्याकारकानुमितिविरोधिनि जलत्वाभाववत्पर्वतादावतिव्याप्तिरित्याह इदमुपलक्षणमिति।

हेतुतावच्छेदकावच्छिन्नप्रकारताकत्वानिवेशे हेतुमत्पक्षज्ञानविरोधिनि महानसीयधूमाद्यभाववत्पर्वते यथाऽतिव्याप्तिस्तथा व्याप्तिज्ञानविरोधिन्यपि वह्न्यभाववद्वृत्तिमेयत्वेऽपि अतिव्याप्तिः वह्निव्याप्यमेयत्ववान् पर्वत इत्याकारकानुमितिमादाय सम्भवतीति सूचयति प्रकृतहेतुतेति। अत्राऽतिव्याप्तिः=वह्निव्यभिचारिमेयत्वेऽतिव्याप्तिः। तादृशेति। यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्याप्यप्रकारताकानुमितिमात्रनिवेश एव तादृशमेयत्वादावतिव्याप्तिरिति भावः।

❀ दीधितिः ❀

केवलधूमस्य वा वह्निव्यभिचारो, विशिष्टधूमस्य वा पर्वतीयवह्नि-व्यभिचारो न दोषः । नवा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्, अतस्तद्धर्म्मावच्छिन्नतत्पक्षकतद्धर्म्मावच्छिन्नतत्साध्यकतद्धर्म्मावच्छि-

❀ गादाधरी ❀

प्रकृतहेतुकत्वनिवेशेऽपि एतद्दोषस्य शक्यवारणतया हेतुतावच्छेदक-निवेशनायाह केवलधूमस्येति । वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तक-विशेषणानवच्छिन्नेत्यर्थः । साध्यतावच्छेदकानिवेशे पूर्वं साध्यवत्ताज्ञान-विरोधिन्यतिव्याप्तिर्दर्शिता, इदानीं व्याप्तिज्ञानविरोधिन्यतिव्याप्तिं दर्शयति विशिष्टधूमस्य वा पर्वतीयवह्निव्यभिचार इति । दोषलक्षण इव दुष्टलक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्यावश्यकतां दर्शयति न वा तत्सम्बन्धेनेति । तत्र = पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नवह्निसाधने । तस्य=विशिष्टधूमत्वा-वच्छिन्नस्य । पक्षादौ पक्षतावच्छेदकादेर्यादृशसम्बन्धेन विशेषणत्वं यत्रा-भिमतं तत्र तत्सम्बन्धेन तदवच्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्ष-केत्युक्तम्, पक्षतावच्छेदकादिनिवेशे पक्षादिनिवेशस्याप्रयोजकत्वादिति ।

❀ चन्द्रकला ❀

हेतुतावच्छेदकमनिवेश्य तादृशहेतुनिष्ठप्रकारताकानुमितिनिवेशे तु वह्न्यभाववद्वृ-त्तित्वविशिष्टकेवलधूमेऽतिव्याप्तिं संगमयति केवलधूमस्येति । वह्निशून्येति । वह्न्य-भाववान् यो देशः प्रभाभण्डलादिः तत्र वर्त्तमानधूमव्यक्ताववर्त्तमानं यत् विशेषणं सा-मानाधिकरण्यसम्बन्धेन पर्वताद्यन्यतमत्वं तदनवच्छिन्नधूमस्यैव कैवल्यमित्यर्थः । साध्य-व्याप्येत्यत्र व्याप्त्यंशे निरूपितत्वसम्बन्धावच्छिन्न साध्यनिष्ठप्रकारताकत्वमात्रनिवेशे पर्व-तीयवह्निव्याप्यतादृशविशेषणावच्छिन्नधूमवान् पर्वत इत्याकारकानुमितिप्रतिबन्धकनि-श्चयविषये पर्वतीयवह्न्यभाववद्वृत्तित्वविशिष्टतादृशविशिष्टधूमेऽतिव्याप्तिमाह पर्वती-येति । दोषवत्त्वं दुष्टत्वमित्यत्रापि दुष्टलक्षणे प्रकृतपक्षसाध्यादिनिवेशप्रयोजनं समर्थ-यति दोषलक्षण इवेति । तथाच दुष्टलक्षणे पक्षतावच्छेदकाद्यप्रवेशे पर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाभावविशिष्टपर्वतादेः स्वज्ञानविषयप्रकृतहेतुतावच्छेदक-वत्त्वसम्बन्धेन धूमादौ सत्त्वात् पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमो दुष्ट इति व्यवहारापत्तिरशक्यवारणा स्यादतो दुष्टलक्षणेऽपि पक्षतावच्छेदकादिप्रवेश आवश्यक इति भावः । तद्धर्मावच्छिन्नतत्पक्षकेत्यत्र तत्पक्षकत्वाभिधानप्रयोजनं दर्शयति पक्षतेति ।

* दीधितिः *

न्तद्धेतुकानुमितिप्रतिबन्धकत्वम् वाच्यम्। तथाच निर्व्वह्निः पर्व्वतो वह्निमान् पर्व्वतावृत्तिवह्निमान् वा तद्‌व्यभिचारिणः,

* गादाधरी *

वाच्यम् = तद्‌रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणे निवेशनीयम्।

तथाचेति। निर्वह्निः पर्वतो वह्निमान् इत्यत्र पक्षतावच्छेदकनिर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति, स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकानाहार्य्यज्ञानस्यानभ्युपगमात्। पर्वतः पर्वतावृत्तिवह्निमान् इत्यत्र पर्वते पर्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वमनुमितेर्न सम्भवति स्वस्मिन् स्वावृत्तित्वाद्यवच्छिन्नप्रकारकानाहार्य्यज्ञानस्याननुभविकत्वात्।

एवं पर्वतो वह्निमान् वह्निव्यभिचारिण इत्यत्र वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवतीति पूर्वोक्तयुक्तेः।

* चन्द्रकला *

तथाच पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकावच्छिन्नत्वस्य साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नत्वस्य हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नत्वस्य च प्रवेशलाभाय तत्पक्षेत्याद्यभिधानम्, अन्यथा ह्रदो वह्निमान् इत्यादौ कालिकादिसम्बन्धेन ह्रदत्वाद्यवच्छिन्नानुमितिसामान्यान्तर्गतायां कालो वह्निमानित्यनुमितौ वह्न्यभावविशिष्टह्रदादिनिश्चयस्याऽप्रतिबन्धकतया सर्वत्राऽसम्भवापत्तिः स्यादिति हृदयम्।

पक्षतावच्छेदकाद्यवच्छिन्नविशेष्यताकत्वादिविशिष्टाया अनुमितेरेव लक्षणघटकत्वे निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ दोषेऽव्याप्तिः, निर्वह्निपर्वतविशेष्यकवह्निप्रकारकानुमितेरप्रसिद्धत्वादित्याह स्वविरोधीति। स्वं वह्न्यादिप्रकारस्तद्विरोधी तद्विशिष्टबुद्धिप्रतिबन्धकतावच्छेदकप्रकारिताकधर्मवान् वह्न्यभावादिः स एव धर्मितावच्छेदकं यस्य तादृशस्वप्रकारकज्ञानस्य। तादृशज्ञानस्यानाहार्यत्वानभ्युपगमादित्यर्थः। स्वस्मिन्निति। स्वं विशेष्यीभूतः पर्वतादिः तत्र तदवृत्तित्वावच्छिन्नप्रकारताकज्ञानस्याप्याहार्यत्वस्यानुभविकत्वेन तस्यानाहार्यस्याननुभविकत्वादित्यर्थः। वह्निव्यभिचारिणः = वह्न्यभाववदवृत्तिधर्मात्। वह्निव्याप्यत्वेति। वह्न्यभाववदवृत्तिधर्मवत्त्वावगाहित्वमित्यर्थः। पूर्वोक्तेति। स्वविरोधिधर्मधर्मितावच्छेदककवह्न्यभाव-

✽ दीधिति ✽

पर्व्वतावृत्तेर्व्वा धर्म्मादित्यादौ न कोऽपि हेत्वाभासः स्यात्, तादृशानुमितेरप्रसिद्धत्वात्।

✽ गादाधरी ✽

पर्वतो वह्निमान् पर्वतावृत्तेरित्यत्र पर्वते पर्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति यथाविवक्षितानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थलेऽव्याप्तिकथनम्।
न कोपि हेत्वाभासः स्यादिति। तथाचापार्थकरूपनिग्रहस्थानत्वेन तथा प्रयोक्तुर्निग्रहोपपत्तावपि निर्वह्नित्वेन पर्वते वह्नेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः।

तादृशानुमितेः = तथाविवक्षितानुमितेः। अप्रसिद्धत्वादिति। आहार्य्यपरोक्षज्ञानानभ्युपगमादिति भावः।

✽ चन्द्रकला ✽

वद्वृत्तित्वप्रकारकज्ञानस्यानाहार्यस्यानुपगमादितियुक्तेरित्यर्थः। उक्तयुक्तेः = स्वस्मिन् स्वाऽवृत्तित्वावच्छिन्नप्रकारकज्ञानस्यानाहार्यस्याननुभविकत्वादिति युक्तेः। यथाविवक्षितेति। पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकविवक्षितानुमितेरप्रसिद्धिप्रयोजकत्वं यथा साध्याभावधर्मितावच्छेदककसाध्यप्रकारकज्ञानत्वं तथा पक्षे पक्षावृत्तित्वाद्यवच्छिन्नप्रकारकज्ञानत्वादिकमपीति विभिन्नप्रयोजकज्ञापनाय नानास्थले दीधितिकृताऽव्याप्तिः प्रदर्शितेतितात्पर्यम्।

ननु यादृशबोधत्वावच्छेदेनाहार्यत्वं तादृशबोधेच्छयोच्चरितशब्दस्यैवाऽपार्थकनिग्रहस्थानत्वेन निर्वह्निर्वह्निमानित्यादिवाक्यप्रयोक्तुर्निग्रहोपपत्तिसम्भवे हेत्वाभासरूपनिग्रहस्थानाऽसत्त्वेऽपि न क्षतिरित्यतो भावमाह तथाचेति।

तथा प्रयोक्तुः = निरुक्तवाक्यप्रयोक्तुः। दुरुपपाद इति। तथाच निर्वह्नित्वेन पर्वते वह्निसाधने धूमो दुष्ट इत्यादिव्यवहारोपपत्त्यर्थमेव तादृशस्थले धूमादेः दुष्टत्वमावश्यकमिति भावः।

तथाविवेति। वह्निव्याप्यधूमवान् वह्निमांश्च निर्वह्निपर्वत इत्याकारकानुमितेरित्यर्थः।

आहार्येति। अनुमितिशाब्दबोधादेराहार्यत्वानभ्युपगमादित्यर्थः, तेन न प्रतियोग्यप्रसिद्धिरितिध्येयम्।

अत्रवदन्तीत्यादिना दीधितिकृदभिहितलक्षणघटकोत्तरपदोत्तरद्वितीयाविभक्ति

✽ दीधितिः ✽

अत्र वदन्ति–यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरम-

✽ गादाधरी ✽

यद्विषयकनिश्चयस्येति । यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यर्थः । उत्तरपदस्य उत्तरकालीनार्थकतया तदुत्तरमितिधातूपस्थाप्यानुमितिरूपक्रिया-विशेषणमतो द्वितीया । अग्रिमकल्पे तादृशज्ञानरूपक्रियाविशेषणमतो ज्ञान-पदमपि सार्थकम् । तत्पदञ्च तादृशनिश्चयपरामर्शार्थकम् , उत्तरपदञ्चाऽ-व्यवहितोत्तरार्थकम् , कालाध्वनोरत्यन्तसंयोगे इत्यनेन द्वितीया अधिकरणे,

✽ चन्द्रकला ✽

समर्थयति उत्तरपदस्येति । लक्षणघटकस्येत्यादिः । उत्तरकालीनार्थकतयेति । तथाचोत्तरकालीनाऽभेदान्वयबोधो धात्वर्थीभूतायामनुमितौ निर्विवाद इति भावः ।

अग्रिमकल्पे = अनाहार्यमानसज्ञाने इत्यादौ । सार्थकमिति । उत्तरपदोत्तरं द्वितीयाविभक्तिसमर्थनार्थमेव ज्ञानपदमन्यथा अनाहार्यमानसे इत्युक्तावपि सामञ्जस्य-सम्भवात् ज्ञानपदं निरर्थकं स्यादिति हृदयम् । इत्यनेन = इतिसूत्रेण । उत्तरपदस्यो-त्तरकालीनार्थकत्वे अधिकरणे द्वितीया न सम्भवतीत्यत आह उत्तरपदस्येति ।

✽ कलाविलासः ✽

द्धुरिति दिक् । अत्र वदन्ति कल्पे काञ्चनमयह्रदो वह्निमान् जलादित्यत्र काञ्चनमय-त्वव्यापकीभूताभावप्रतियोगिजलादावतिव्याप्तिवारणाय तृतीयक्षणसाधारणाव्यव-हितोत्तरत्वस्य लक्षणे निवेश्यतया असाधारण्येऽव्याप्तिः, तद्विषयकनिश्चयाव्यवहि-तोत्तरानुमितौ तादृशोभयाभावाऽसत्त्वादितिचेन्न ? साध्यव्यापकीभूताभावप्रतियो-गिप्रकृतहेतुमत्पक्षज्ञानभिन्नत्व-असाधारण्यविषयितावत्त्वैतदुभयाभाववद्यद्रूपाव-च्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये तादृशोभयाभावस्य वि-वक्षितत्वात् । अव्यापकीभूतविषयिताशून्यज्ञानीयत्वञ्च यद्रूपावच्छिन्नविषयिता-यामुपलक्षणविधयैव निवेश्यम् । एवञ्च वह्निव्यापकीभूताभावप्रतियोगि जलं वह्निव्यापकीभूताभावप्रतियोगिजलवांश्च ह्रद इतिसमूहालम्बनज्ञानमादायैव असा-धारण्ये लक्षणसमन्वयसम्भवः, तज्ज्ञानीयवह्निव्यापकीभूताभावप्रतियोगिजलवद्-ध्रदविषयितायां वक्ष्यमाणविरोधिविषयितात्वस्याप्यक्षतत्वादित्यवधेयम् ।

अत्र कल्पे तृतीयक्षणसाधारणाव्यवहितोत्तरत्वञ्च स्वध्वंसाधिकरणकालध्वंसान-धिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपम्, स्वं यद्रूपावच्छिन्नविषय-कनिश्चयः। कालाध्वनोरत्यन्तेति। ननु यद्रूपावच्छिन्नविषयकनिश्चयपदेन नानाविध

* दीधितिः *

नुमितावनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यताव-च्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसा-ध्यनिरूपितव्याप्तिविशिष्टहेतुमत्तावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वम् ।

* गादाधरी *

उत्तरपदस्य उत्तरकालपरत्वादिति तु न युक्तं, व्यापकतात्मकस्यात्यन्तसंयोगस्य प्रकृतेऽविवक्षितत्वादिति । अनुमितौ=अनुमितिसामान्ये । द्वयोर्व्यतिरेकः इत्यभिसम्बन्धः । तत्त्वम्=तद्रूपावच्छिन्नत्वम् । अत्र च तज्ज्ञानानन्तरज्ञान-निष्ठतादृशोभयाभावे तज्ज्ञानीयाया एव विरोधिविषयितायाः प्रयोज-कत्वात् विरोधिविषयितायां तादृशनिश्चयीयत्वकथनं स्वरूपकीर्तनमात्रं न तु तल्लक्षणघटकम्,

* चन्द्रकला *

उत्तरपदस्योत्तरकालपरत्वं स्वीकृत्य तादृशकालत्वव्यापकताया अनुमित्यादौ विवक्षा-प्रयोजनाऽभावादाह प्रकृत इत्यादि । अनुमितिसामान्य इति । सामान्यपदोपा-दानप्रयोजनम् अग्रे प्रदर्शनीयमेवादरणीयम् ।

ननु विरोधिविषयिताप्रयुक्तत्वनिवेशेनैवोपपत्तौ यद्विषयकनिश्चयस्य विरोधि-विषयितेत्यादिना तादृशविषयितायां यद्विषयकनिश्चयीयत्वाभिधानमनर्थकमित्यत आह अत्रचेति । निरुक्तलक्षणे चेत्यर्थः । तज्ज्ञानेति । बाधादिनिश्चयोत्तरजातानु-मित्यादौ वर्त्तमाने प्रकृतपक्षादौ प्रकृतसाध्याद्यवगाहित्वघटितोभयाभावे इत्यर्थः । तज्ज्ञानीयायाः = तादृशबाधादिनिश्चयीयायाः । प्रयोजकत्वात् = प्रयोजकत्वनि-यमात् । मात्रपदव्यवच्छेद्यमाह नत्विति । लक्षणघटकमिति । तथाच केवलवि-

* कलाविलासः *

काले वर्तमानस्य नानानिश्चयस्यैव बोधात् यथोक्तनिश्चयोत्तरकालत्वस्य नानाकालेषु वर्त्तमानतया तत्र च कस्या अप्यनुमितिव्यक्तेरसत्त्वात् तादृशकालत्वव्यापकत्वस्या-नुमितौ विवक्षणेऽसम्भवसम्भवे तादृशव्यापकत्वस्याऽविवक्षितत्वाभिधानमसंगतमि-तिचेन्न ? यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टानुमितिसामान्ये विरोधिविषयिताप्रयु-क्ततादृशोभयाभावस्य विवक्षितत्वात् । वैशिष्ट्यञ्च स्वाव्यवहितोत्तरकालत्वव्यापकत्व-सम्बन्धेन । एवञ्च यत्किञ्चिन्निश्चयमादायैव लक्षणसमन्वयसम्भवात् तादृशव्याप-कत्वस्याऽविवक्षितत्वमुक्तमिति ध्येयम् । नचानुमितेरपि जन्यतया तादृशनिश्चयाव्यव-

❀ गादाधरी ❀

तथा च यद्रूपावच्छिन्ननिश्चयाऽव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं, तादृशरूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः ।

❀ चन्द्रकला ❀

रोधिविषयिताप्रयुक्तत्वमात्रमेव तादृशोभयाभावे विवक्षितं नतु तादृशनिश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि तत्र निवेश्यमिति भावः ।

समुदितलक्षणार्थमाह तथाचेति । तथाच यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये लौकिकसन्निकर्षाऽजन्यदोषविशेषाजन्यज्ञानसामान्ये वा विरोधिविषयिताप्रयुक्तः प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-तादृशविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयाभावस्तद्रूपवत्त्वं हेत्वाभासत्वमिति समुदितलक्षणार्थः पर्यवसितः ।

भवति हि ह्रदो वह्निमान् इत्यत्र वह्न्यभावविशिष्टह्रदरूपबाधे लक्षणसमन्वयः, वह्न्यभावविशिष्टह्रदत्वरूपबाधत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता घटाद्यनुमितयो वह्निव्याप्यधूमानुमितयश्च, नतु ह्रदादौ वह्न्याद्यनुमितिस्तादृशी, तादृशानुमितौ तादृशबाधनिश्चयस्य प्रतिबन्धकत्वात् निरुक्तघटाद्यनुमितिषु वह्निव्याप्यधूमाद्यनुमितिषु च प्रकृतपक्षविशेष्यतानिरूपितप्रकृतसाध्यव्याप्यहेतुप्रकारताकत्वसत्त्वेऽपि प्रकृतपक्षीभूतह्रदादिविशेष्यतानिरूपितप्रकृतसाध्यीभूतवह्निप्रकारताकत्वविरहस्य विरोधिविषयिताप्रयुक्तस्य सत्त्वेनोभयाभावस्य तत्राऽक्षतत्वात्, वह्न्यभावविशिष्टह्रदत्वरूपबाधत्वस्यैव यद्रूपान्तर्गतत्वात् ।

❀ कलाविलासः ❀

हितोत्तरकालात्मकानुमितिसामान्ये तादृशोभयाभावनिवेशेनैवोपपत्तौ तादृशनिश्चयाव्यवहितोत्तरकालवृत्तित्वार्थकतादृशकालीनत्वाभिधानमनुचितमिति वाच्यम्, तादृशकालीनत्वस्य तादृशनिश्चयाव्यवहितोत्तरकालोत्पन्नत्वार्थकत्वात्, अन्यथा यत्रापेक्षाबुद्ध्यात्मिका पक्षःसाध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारिकानुमितिः ततो लौकिकसन्निकर्षजन्यो बाधनिश्चयस्तत्र बाधेऽव्याप्त्यापत्तिः स्यात्, तादृशबाधनिश्चयाव्यवहितोत्तरकालात्मिकायां तादृशकालवृत्तित्वविशिष्टायां वा निरुक्तानुमितौ तादृशोभयाभावस्याऽसत्त्वात् । तादृशनिश्चयाव्यवहितोत्तरकालोत्पन्नानुमितिनिवेशे तु न तादृशबाधेऽव्याप्तिः, तादृशबाधनिश्चयोत्तरोत्पन्नत्वस्य तादृशापेक्षाबुद्ध्यात्मिकायामनुमितौ विरहात् तस्य घटाद्यनुमितौ सत्त्वेऽपि तत्र तादृशोभयाभावस्याक्षतत्वात् ।

❁ गादाधरी ❁

वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुत्पत्त्या घटाद्यनुमितयः एव तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतास्तासु च ह्रदत्वादिविशिष्टे यत् वह्नित्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं, वह्नित्वावच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्यावगाहित्वञ्च, तदुभयाभाववत्त्वमक्षतमेव, तत्र तादृशनिश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि, स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वात्, तत्र ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादिविशिष्टप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताया ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्नित्वावच्छिन्नाभावीयप्रकारितायास्तादृशवह्नित्वादिविशिष्टप्रकारकत्वघटितोभयाभावे तथात्वात् ।

❁ चन्द्रकला ❁

एवं ह्रदो वह्निमान् धूमादित्यादौ धूमाभावविशिष्टह्रदत्वरूपस्वरूपासिद्धित्वावच्छिन्नविषयकनिश्चयोत्तरं जायमानायां ह्रदो वह्निमान् ह्रदो घटवान्वेत्याद्याकारकानुमितौ ह्रदादिधर्मिकवह्न्यादिप्रकारकत्वसत्त्वेपि वह्निव्याप्यधूमप्रकारकत्वविरहेण तादृशोभयाभावस्य तत्र वर्त्तमानतया धूमाभावविशिष्टह्रदरूपस्वरूपासिद्धावपि लक्षणसमन्वयः ।

धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारनिश्चयोत्तरं व्यभिचारनिश्चयप्रतिबध्याया धूमव्याप्तिविषयकधूमव्याप्यवह्निमानयमित्याकारकानुमितेरनुत्पत्त्या तादृशनिश्चयोत्तरमुत्पन्नास्वन्यास्वनुमितिषु धूमव्याप्यवह्निप्रकारकत्वाभावेन तादृशोभयाभावस्यानपायात् धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽपि लक्षणसमन्वयो बोध्यः, एवमन्यत्राऽपि ।

स्वयमपि लक्षणसमन्वयमाह **वह्न्यभावेति** । तादृशबाधनिश्चयानन्तरमित्यर्थः । **कदाचिदप्यनुत्पत्त्येति** । ह्रदादिधर्मिकवह्न्याद्यभावनिश्चयस्य ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकत्वादित्याशयः । ह्रदो वह्निमानित्यत्र वह्न्यभावविशिष्टह्रदरूपबाधविषयिताया विरोधिविषयितात्वं सम्पादयति **स्वनिष्ठेति** । स्वं तादृशबाधनिश्चयः-तन्निष्ठो यो ह्रदधर्मिकवह्न्यादिप्रकारकबुद्धिनिरूपितप्रतिबन्धकतावच्छेदकविषयितात्मको धर्मस्तस्येत्यर्थः । **स्वानन्तेति** । तादृशबाधनिश्चयोत्तरोत्पन्नघटाद्यनुमितौ वर्त्तमानो यः तादृशनिश्चयप्रतिबध्यतावच्छेदकस्य ह्रदधर्मिकवह्निप्रकारताकत्वस्याऽभावस्तं प्रति

❁ गादाधरी ❁

न च तादृशविशिष्टप्रकारकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेदकम्, अपि तु तद्विशेषितानाहार्यज्ञानत्वं, तत् कथं तत्प्रकारकत्वाभावस्य तथाविधविरोधिविषयिताप्रयुक्तत्वमिति वाच्यम्,

❁ चन्द्रकला ❁

प्रयोजकत्वादित्यर्थः। तथात्वात् = प्रयोजकत्वात्। तथाच ह्रदविशेष्यकवह्निकारकबुद्धिप्रतिबन्धकतावच्छेदिकाया वह्न्यभावविशिष्टह्रदरूपबाधविषयितायाः तादृशनिश्चयोत्तरोत्पन्नघटाद्यनुमितौ वर्त्तमानो यो ह्रदविशेष्यकवह्निप्रकारकत्वरूपतादृशनिश्चयप्रतिबध्यतावच्छेदकधर्मघटितोभयाभावः तं प्रति प्रयोजकतया तादृशबाधनिश्चयीयविषयिताया विरोधिविषयि तात्वं निर्विवादमिति भावः।

ननु वह्न्यभाववान् ह्रद इत्याद्याकारकनिश्चयोत्तरं वह्निमान् ह्रदो वह्न्यभाववानित्याद्याकारकाहार्यज्ञानोपपत्तये ह्रदविशेष्यकवह्निप्रकारकत्वविशिष्टानाहार्यज्ञानत्वमेव तादृशनिश्चयप्रतिबध्यतावच्छेदकं वाच्यम्, एवञ्च कथं वह्न्यभावविशिष्टह्रदरूपबाधादौ लक्षणसमन्वयः? वह्न्यभावविशिष्टह्रदादिविषयिताया ह्रदविशेष्यकवह्निप्रकारकत्वविशिष्टानाहार्यज्ञानत्वरूपतादृशबाधनिश्चयप्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव प्रयोजकतया ह्रदविशेष्यकवह्निप्रकारकत्वघटितोभयाभावाऽप्रयोजकत्वादित्युभयाभावे विरोधिविषयिताप्रयुक्तत्वविरहादित्याशंकते नचेति। वाच्यमितिपरेणान्वयः।

तादृशेति। ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वमात्रमित्यर्थः। विपरीतेति। वह्न्यभावविशिष्टह्रदादिरूपबाधादिनिश्चयप्रतिबध्यतावच्छेदकं नेत्यर्थः। तद्विशेषितेति। ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वविशिष्टानाहार्यज्ञानत्वमित्यर्थः। तत्प्रकारकेति। ह्रदविशेष्यकवह्न्यादिप्रकारकत्वाभावस्येत्यर्थः। तथाविधेति। वह्न्यभावविशिष्टह्रदादिनिरूपितविषयितात्मकविरोधिविषियताप्रयुक्तत्वमित्यर्थः।

ह्रदादौ वह्न्याद्यभावनिश्चयप्रतिबध्यतावच्छेदकताया ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वे विरहादित्याशयः।

यो विशिष्टाभावस्य प्रयोजकःस विशेष्यवति वर्त्तमानस्य विशेषणाभावस्यापि प्रयोजको भवतीति नियमात् ह्रदविशेष्यकवह्न्यादिप्रकारकत्वविशिष्टानाहार्यज्ञानत्वाभावप्रयोजिकाया वह्न्याद्यभावविशिष्टह्रदादिविषयिताया विशेष्यीभूतानाहार्यज्ञानत्वविशिष्टायां घटाद्यनुमितौ वर्त्तमाने विशेषणीभूतह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वस्याभावेऽपि प्रयोजकताया आवश्यकतया तादृशप्रकारकत्वघटितोभयाभावे वह्न्याद्यभाव-

❀ गादाधरी ❀

विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वात् अनाहार्यज्ञानत्वाद्याश्रयानुमितिनिष्ठतादृशविशिष्टप्रकारकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वाच्चतेरिति ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्ने लक्षणसमन्वयः।

निर्वह्निः पर्वतो वह्निमानित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र प्रसिद्धपक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वघटितोभयाभाववत्त्वमक्षतमेवेति तत्र लक्षणसमन्वयः।

न चाहार्यज्ञानमात्रे प्रसिद्धस्य निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्मावच्छिन्ने वह्न्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वम-

❀ चन्द्रकला ❀

विशिष्टह्रदादिरूपबाधादिविषयिताप्रयुक्तत्वस्याऽक्षतत्वादित्येवं समाधत्ते विशिष्टेति। तादृशप्रकारकत्वविशिष्टानाहार्यज्ञानत्वाभावप्रयोजकस्येत्यर्थः।

विशेष्येति। अनाहार्यज्ञानत्ववन्निष्ठविशेषणीभूततादृशप्रकारकत्वाभावप्रयोजकत्वादित्यर्थः। अनाहार्येति। घटाद्यनुमित्यादिनिष्ठस्य ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वरूपविशेषणाभावस्येत्यर्थः। लक्षणसमन्वय इति। एवमन्यत्राऽपि अनयैव रीत्या विरोधिविषयिताप्रयुक्तत्वं तादृशोभयाभावस्य सुसम्पादनीयमिति हृदयम्।

निर्वह्निःपर्वतो वह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्धिनिश्चयाव्यवहितोत्तरं निर्वह्निःपर्वतो वह्निमान् वह्निव्याप्यधूमवानित्याद्याकारकाहार्यज्ञानात्मकानुमितेरप्रसिद्धतया उत्पादाऽसम्भवेऽपि तदुत्तरोत्पन्नघटपटाद्यनुमितिषु तादृशाहार्यज्ञाने प्रसिद्धस्य निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वस्य वह्निव्याप्यधूमप्रकारकत्वस्य चाभावसत्त्वात् तादृशाश्रयाऽसिद्धौ निरुक्तरीत्या लक्षणसमन्वयं प्रदर्श्य शंकते नचेति। वाच्यमितिपरेणान्वयः।

तथाच प्रतिबन्धकतावच्छेदकविषयिताया एव प्रतिबध्यतावच्छेदकधर्माभावप्रयोजकतया आहार्यज्ञानस्याप्रतिबध्यत्वात् तन्मात्रप्रसिद्धस्य वह्न्यभाववत्पर्वतविशेष्यकवह्निप्रकारकत्वादेःकस्याऽपि प्रतिबध्यतानवच्छेदकत्वेन वह्निमत्पर्वतविषयिताप्रयुक्तत्वस्य निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वघटितोभयाभावे विरहात् कथं तादृशाश्रयासिद्धौ लक्षणसमन्वय इति समुदितग्रन्थतात्पर्यम्।

यो व्यापकाभावस्य प्रयोजकःस व्याप्याभावस्याऽपि प्रयोजको भवतीति निय-

❀ गादाधरी ❀

प्रामाणिकमिति वाच्यम् , तादृशज्ञानत्वस्य प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्यैव वह्निविशिष्टपर्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वाभावे तादृशदोषविषयिताप्रयुक्तत्वस्यावश्यकत्वात् ।

न च विरोधिज्ञानोसत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्यानाहार्यस्यानुत्पत्त्या इच्छादिघटिततादृशाहार्य्यज्ञानसामग्र्यभावस्यैव निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयित्वस्य, क्वचिदप्यक्लृप्तत्वादिति वाच्यम् ,

❀ चन्द्रकला ❀

मात् वह्निमत्पर्वतरूपाश्रयासिद्धिनिश्चयप्रतिबध्यतावच्छेदकस्य पर्वतविशेष्यकवह्न्यभावप्रकारकत्वस्याऽभावंप्रति तादृशाश्रयाऽसिद्धिविषयितायाः प्रयोजकतया पर्वतविशेष्यकवह्न्यभावप्रकारकत्वस्य च निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वव्यापकत्वेन व्यापकाभावप्रयोजकीभूतायास्तादृशाश्रयासिद्धिविषयिताया व्याप्यीभूतस्य निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वघटिततादृशोभयस्याऽभावं प्रत्यपि प्रयोजकतायाः स्वीकरणीयतया निरुक्तोभयाभावे विरोधिविषयिताप्रयुक्तत्वस्य निर्विवादत्वात्तत्र लक्षणसमन्वयइत्याह तादृशज्ञानत्वस्येति । निर्वह्निविशेष्यकवह्निप्रकारकज्ञानत्वस्येत्यर्थः ।

प्रतिबध्यतेति । कस्यापीत्यादिः । तद्व्यापकस्य = निर्वह्निविशेष्यकवह्निप्रकारकज्ञानत्वव्यापकस्य । तादृशविशिष्टेति । निर्वह्नित्वविशिष्टपर्वतेत्यर्थकम् । तादृशेति । वह्निमत्पर्वतात्मकाश्रयासिद्धिरूपदोषविषयिताप्रयुक्तत्वस्येत्यर्थः । आवश्यकत्वादिति । तथाच क तत्राऽव्याप्तिरिति भावः ।

ननु निर्वह्निविशेष्यकवह्निप्रकारकज्ञानं जायतामित्याकारिकाया इच्छाया वह्निमान् पर्वत इत्याकारकविरोधिनिश्चयस्य च शून्यतादशायां निर्वह्निःपर्वतो वह्निमानित्याकारकाहार्यज्ञानस्यानुत्पाददर्शनात् तादृशेच्छादीनामाहार्यज्ञानसामग्रीत्वं वाच्यम्, एवञ्च सामग्र्यभावप्रयुक्त एव निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वरूपाहार्यज्ञानत्वाभावः नतु वह्निमत्पर्वतविषयितारूपविरोधिविषयिताप्रयुक्तः, तथाच निरुक्तोभयाभावे विरोधिविषयिताप्रयुक्तत्वविरहेण तादृशाश्रयाऽसिद्धावव्याप्तिरित्याशंकते नचेति । वाच्यमितिपरेणान्वयः । क्वचिदप्यक्लृप्तत्वादिति । विरोधिविषयितात्वेन प्रयोजकताया इत्यादिः । तथाच वह्निमत्पर्वतरूपाश्रयाऽसिद्धावव्याप्तिरस्त्येवेति

❀ गादाधरी ❀

अभावाधिकरणतायामेव विरोधिविषयताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतायाश्चाभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयिताया अपि प्रयोजकत्वात् ।

यद्विषयिताप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येतावन्मात्रे कृते ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभावादिविशिष्टह्रदादिविषयिताया इव तदन्तःपातिवह्न्यभावत्वादिविशिष्टविषयिताया अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया बाधाद्येकदेशे वह्न्यभावादिरूपविशिष्टेऽतिव्याप्तिरिति यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं निवेशितम् ।

❀ चन्द्रकला ❀

हृदयम् । अभावाधिकरणतायाम्=प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्व-प्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकत्वरूपोभयाभावाधिकरणतायाम् । नन्वेवमधिकरणतायां विरोधिविषयिताप्रयुक्तत्वविवक्षणेऽपि कथं तत्र नाव्याप्तिरित्यत आह अधिकरणतायाश्चेति । तादृशोभयाभावाधिकरणतायाश्चेत्यर्थः । प्रयोजकत्वादिति । तथाच वह्निमत्पर्वतनिश्चयोत्तरोत्पन्नघटाद्यनुमितिनिष्ठायां निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वघटिततादृशोभयाभावाधिकरणतायाम् पूर्वज्ञानीयाश्रयाऽसिद्धिविषयिताया अपि विनिगमनाविरहेण प्रयोजकत्वे बाधकाभावात् निरुक्तोभयाभावाधिकरणतायां विरोधिविषयिताप्रयुक्तत्वस्याक्षततया तादृशाश्रयाऽसिद्धावव्याप्तिवारणसम्भवे पूर्वोक्ताशंका न युक्तेत्याशयः ।

यद्रूपावच्छिन्नविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये इत्यनभिधाय यद्रूपावच्छिन्नविषयिताप्रयुक्तः प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्व-प्रकृतसाध्यव्याप्यहेतुप्रकारकत्वोभयाभावस्तद्रूपवत्त्वमित्युक्तौ ह्रदो वह्निमान् धूमादित्यादौ बाधाद्येकदेशे केवलवह्न्यभावादावतिव्याप्तिः, पूर्वोक्तयुक्त्या वह्न्यभावत्वावच्छिन्नविषयताया अपि ह्रदादिविशेष्यकवह्न्यादिप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकतया तत्प्रयुक्तत्वस्य ह्रदधर्मिकवह्निप्रकारकत्वाभावे आवश्यकत्वेन तादृशप्रकारकत्वघटितोभयाभावेऽपि वह्न्यभावत्वावच्छिन्नविषयिताप्रयुक्तत्वस्य निराबाधत्वात् यद्रूपपदेन केवलवह्न्यभावत्वस्यापि धर्तुं शक्यत्वात् । यद्यपि यद्रूपावच्छिन्नविषयितासामान्यप्रयुक्तस्तादृशोभयाभावस्तद्रूपवत्त्वमिति विवक्षणे न केवलवह्न्यभावादावतिव्याप्तिः, वह्न्य-

❁ गादाधरी ❁

न च यादृशविशिष्टविषयितासामान्यप्रयुक्तस्तादृशोभयाभावस्तादृशत्त्व-मित्येव सम्यक्, ह्रदत्वादिविशिष्टविषयितासामान्यान्तर्गतायां ह्रद इत्या-दिज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरनवकाशादिति वाच्यम्, पाषाणमयो न वह्निमानितिज्ञानसहितस्य पर्वतः पाषाणमय इति ज्ञानस्य पर्वतो वह्निमानितिज्ञानप्रतिबन्धकतया ज्ञानभेदेन विषयिता-भेदाभावात् पाषाणमयत्वविशिष्टपर्वतादिविषयितासामान्यस्यैव उभयाभा-वप्रयोजकत्वात् पाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तेर्दुर्वारत्वात्।

ह्रदो वह्न्यभाववानित्यादिह्रदादिविषयकनिश्चयानन्तरोत्पन्नघटाद्यनुमि-

❁ चन्द्रकला ❁

भावत्वावच्छिन्नविषयितासामान्यान्तर्गताया वह्न्यभाव इत्याकारकज्ञानीयविषयिताया ह्रदादिधर्मिकवह्न्यादिप्रकारकबुद्धिप्रतिबन्धकतानवच्छेदकतया तत्प्रयुक्तत्वस्य ह्रदवि-शेष्यकवह्निप्रकारकत्वघटिततादृशोभयाभावे विरहात् प्रतिबन्धकतावच्छेदकविषयिता-प्रयुक्तत्वस्यैव प्रतिबध्यतावच्छेदकधर्माऽभावेऽभ्युपगमात् यद्रूपपदेन वह्न्यभाव-त्वस्योपादानाऽसम्भवादित्युच्यते, तथाप्येतद्विवक्षणं न सम्भवति, पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्त्यापत्तेः, पाषाणमयो न वह्निमान् इत्या-कारकज्ञानसमानकालीनपर्वतश्च पाषाणमय इत्याकारकज्ञानीयपाषाणमयत्ववत्पर्वतवि-षयितायास्तादृशज्ञानाऽसमानकालीनज्ञानीयपाषाणमयत्ववत्पर्वतविषयिताया ऐक्येन पाषाणमयत्ववत्पर्वतविषयितासामान्यस्यैव पर्वतादिविशेष्यकवह्निप्रकारकबुद्धिप्रतिबन्ध-कतावच्छेदकत्वेन पाषाणमयत्ववत्पर्वतविषयितासामान्यप्रयुक्तत्वस्यैव पर्वतादिविशे-ष्यकववह्न्यादिप्रकारकत्वघटितोभयाभावे सत्त्वात् पाषाणमयत्ववत्पर्वतत्वस्य यद्रूपपदेन धर्तुं शक्यत्वात् इत्येवं यद्विषयिताप्रयुक्तस्तादृशोभयाभाव इत्यादिनाऽशंक्य पाषाण-मयत्वविशिष्टपर्वतादावतिव्याप्तेर्दुर्वारत्वादित्यन्तेन समाहितम्।

तथाच यद्रूपावच्छिन्नविषयकनिश्चयोत्तरमनुमितिसामान्ये इत्युक्तौ तु न बाधा-द्येकदेशेऽतिव्याप्तिर्नवा पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः,

❁ कलाविलासः ❁

पाषाणमयत्वविशिष्टपर्वतेति। अथ निरुक्तकल्पे निर्वह्निःपर्वतो वह्निमानि-त्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिर्दुर्वारैव, निर्वह्निःपर्वतो वह्निमानित्याकारक-ज्ञानस्याहार्यतयाऽनुमितित्वाऽसम्भवात्, पाषाणमयत्ववत्पर्वतनिश्चयोत्तरानुमिति-सामान्यपदेन घटाद्यनुमित्यादेरेव धर्तुं शक्यतया तत्रच निर्वह्निपर्वते वह्निवैशि-ष्ट्यावगाहित्वघटितोभयाभावस्य विरोधिविषयिताप्रयुक्तस्य सत्त्वात्, पाषाणमयो न

* गादाधरी *

तौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात् केवलह्रदादावतिव्याप्तिरतः सामान्यपदं पूरितम्। तथासति ह्रदादिनिश्चयानन्तरोत्पन्नानुमितिसामान्यान्तर्गतायां ह्रद इत्यादिनिश्चयानन्तरजात-ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ विरोधिविषयिताप्रयुक्तताद्दशोभयाभावासत्त्वान्नातिव्याप्तिः। ह्रदत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकनिश्चयानन्तरमुक्तसमूहालम्बनानुमित्युत्पत्त्या तादृशविशिष्टस्यापि दोषत्वानुपपत्तिरतो य-

* चन्द्रकला *

वह्न्यभाव इत्याकारकनिश्चयोत्तरानुमितिसामान्यान्तर्गतायां ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितौ ह्रदविशेष्यकवह्निप्रकारकत्वघटितताद्दशोभयाभावस्य पाषाणमयत्ववत्पर्वतनिश्चयोत्तरानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याद्याकारकानुमितौ च पर्वतविशेष्यकवह्निप्रकारकत्वघटितताद्दशोभयाभावस्य विरहेण वह्न्यभावत्वादेर्यद्रूपानन्तर्गतत्वादिति तु परमार्थः।

ननु यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितौ ताद्दशोभयाभावविवक्षणेनैव सामञ्जस्ये ताद्दशनिश्चयोत्तरानुमितिसामान्ये उभयाभावनिवेशो निरर्थक इत्यत आह वह्न्यभाववानिति। तथाच सामान्यपदानुपादाने ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधाद्येकदेशे वह्न्यभावादौ पुनरतिव्याप्तिःस्यात्, वह्न्यभावत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरयत्किञ्चिद्घटाद्यनुमितौ ह्रदविशेष्यकवह्निप्रकारकत्वाभावस्य वह्न्यभावविषयितारूपविरोधिविषयिताप्रयुक्तस्य सत्त्वेन ताद्दशोभयाभावस्य वर्त्तमानत्वादितिभावः। सामान्यपदोपादाने तु न तत्रातिव्याप्तिरित्याह तथा सतीति। सामान्यपदोपादाने सतीत्यर्थः। नातिव्याप्तिरिति। वह्न्यभाव

* कलाविलासः *

वह्निमान् पर्वतश्च पाषाणमय इत्याकारकज्ञानविशिष्टज्ञानस्य पर्वतादौ वह्निप्रकारकबुद्धिविरोधितया व्यापकाभावप्रयोजकस्य पाषाणमयत्ववत्पर्वतविषयित्वस्य सुतरां व्याप्याभावस्याऽपि प्रयोजकत्वादिति चेन्न? यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वस्य विरोधिविषयिताप्रयुक्तत्वस्य च ताद्दशोभयाभावाधिकरणतायामेव विवक्षितत्वात्। तथाच ज्ञानविशिष्टज्ञानाव्यवहितोत्तरोत्पन्नघटाद्यनुमितिनिष्ठोभयाभावाधिकरणतायामेव पाषाणमयत्ववत्पर्वतविषयिताप्रयोज्यत्वस्याभ्युपगम्यमानतया पाषाणमयो न वह्निमानितिज्ञानाऽसमानकालीनपाषाणमयत्ववत्पर्वतविषयकनिश्चयोत्तरजातघटाद्यनुमितिनिष्ठोभयाभावाधिकरणतायाम् पाषाणमयत्ववत्पर्वतविषयिताप्रयोज्यत्वस्याऽसत्त्वादिति ध्येयम्।

✽ गादाधरी ✽

त्पदं यद्रूपावच्छिन्नपरतयोपवर्णितम्। वह्न्यभावविशिष्टह्रदादिविषयकस्य ह्रदो वह्निमान्नवेत्यादिज्ञानस्यानन्तरं तादृशसमूहालम्बनानुमित्युत्पत्त्या तद्दोषतादवस्थ्यमतो निश्चयेति। अनाहार्य्याप्रामाण्यज्ञानानास्कन्दित-संशयान्यज्ञानपरं, तेनाहार्य्यस्याप्रामाण्यज्ञानास्कन्दितस्यापि दोषविषयकनिश्चयस्यानन्तरं तादृशानुमित्युत्पत्तावपि न क्षतिः।

✽ चन्द्रकला ✽

इत्याकारकवह्न्यभावत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतायां ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितौ ह्रदविशेष्यकवह्निप्रकारकत्व-वह्निव्याप्यधूमप्रकारकत्वयोरभावविरहान्न वह्न्यभावत्वविशिष्टेऽतिव्याप्तिरित्यर्थः। यद्विषयकनिश्चयस्येत्यत्र यत्पदस्य यद्रूपावच्छिन्नपरत्वानभिधाने ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादौ सर्वत्राऽसम्भवः स्यात्, द्रव्यत्वादिना वह्न्यभावविशिष्टह्रदादिनिश्चयस्यापि यद्विषयकनिश्चयपदेन धर्त्तुं शक्यतया तदव्यवहितोत्तरानुमितिसामान्यान्तर्गतायां ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितौ तादृशोभयाभावस्यासत्त्वात् निर्वह्निः पर्वतो वह्निमानित्यादावपि द्रव्यत्वावच्छिन्नवह्निमत्पर्वतविषयितायाः वह्न्यभावप्रकारकबुद्धौ प्रतिबन्धकतानवच्छेदकया तस्या विरोधिविषयितात्वाऽसम्भवेन तत्प्रयुक्तत्वस्य तादृशोभयाभावे विरहात् तथाविधाश्रयाऽसिद्धावपि लक्षणगमनाऽसम्भवात् इत्याह यद्रूपावच्छिन्नपरतयेति। वह्न्यभाव-ह्रदत्वादिरूपयद्रूपावच्छिन्नपरतयेत्यर्थकम्। तथाच वह्न्यभाव-ह्रदत्वादिरूपधर्मद्वयावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरं ह्रदो वह्निमानित्याद्यनुमित्यनुत्पत्त्या न कोऽपि दोष इति तात्पर्यम्। निश्चयपदं विहाय यद्रूपावच्छिन्नविषयकज्ञानस्य तदुत्तरमनुमितावित्युक्तौ ह्रदादौ वह्न्यादिसाध्यकस्थले वह्न्यभावविशिष्टह्रदादिरूपबाधादावव्याप्तिः, ह्रदो वह्निमान्नवेत्याकारकसंशयस्य वह्न्यभाववान् ह्रद इतिज्ञानमप्रमेत्याकारकाप्रामाण्यज्ञानास्कन्दितवह्न्यभाववद्ह्रदज्ञानस्य वह्निमान् ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञानस्य च वह्न्यभावविशिष्ट-ह्रदत्वरूपयद्रूपावच्छिन्नविषयकतया तादृशसंशयाव्यवहितोत्तरोत्पन्नानुमितिसामान्यान्तर्गतायां ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितौ ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वघटितोभयाभावस्यासत्त्वात्। अतः अनाहार्याऽप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानपरं यद्विषयकनिश्चयस्येत्यत्र निश्चयपदमभिहितमित्याह वह्न्यभावेति। न क्षतिरिति। नाव्याप्तिरित्यर्थः। दोषविषयकसंशयादेः सार्वत्रिकत्वे प्रमाणाभावेनाऽसम्भवासम्भवादितिध्येयम्। यद्विषयकनिश्चयाव्यवहितोत्तरत्वमनुमि-

❀ गादाधरी ❀

दोषविषयकनिश्चयनाशे सति तादृशानुमितेरुत्पत्त्या तद्दोषापत्तिरतोऽव्यवधाननिवेशः। एवं दोषविषयकलौकिकनिश्चयाव्यवहितपूर्वमनुमित्युत्पत्त्या तद्दोषः स्यादिति उत्तरेति। तत्सामानाधिकरण्यमनुमितौ निवेश्यमत एकस्य बाधनिश्चयानन्तरमन्यस्यानुमितावपि न क्षतिः।

❀ चन्द्रकला ❀

तावन्निवेश्य तादृशनिश्चयोत्तरमनुमितिसामान्ये इत्युक्तौ ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादौ सर्वत्राऽसम्भवः, तादृशनिश्चयस्य विनाशानन्तरं प्रतिबन्धकविरहेण समुत्पन्नायां ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्याद्यनुमितौ निरुक्तोभयाभावस्याऽसत्त्वात् तादृशनिश्चयाव्यवहितोत्तरमनुमितिसामान्ये इत्युक्तौ तु नासम्भवः, वह्न्यभावविशिष्टह्रदादिनिश्चयस्य ह्रदादिधर्मिकवह्न्यादिप्रकारकबुद्धिप्रतिबन्धकतया तदुत्तरं तादृशानुमितेरुत्पादाऽसम्भवादित्याह दोषविषयकेति। तादृशेति। पक्षादिविशेष्यकसाध्यादिप्रकारकानुमित्युत्पत्त्येत्यर्थः। अत्र तादृशनिश्चयाव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपमित्यन्यत्र स्फुटीभविष्यति। ननु यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितानुमितिसामान्य एवोभयाभावो निवेश्यतां व्यर्थं तादृशोत्तरपदोपादानमित्यत आह एवमिति। यादृशस्थले वह्न्यभावविशिष्टह्रदविषयको लौकिकनिश्चयो जातस्तादृशस्थले वह्न्यभावविशिष्टह्रदात्मकबाधादिदोषेऽव्याप्तिः, लौकिकनिश्चयात्मकज्ञानस्य कस्याप्यप्रतिबध्यतया ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्याकारकानुमित्यव्यवहितोत्तरमपि ह्रदो वह्न्यभाववानित्याकारकलौकिकनिश्चयसत्त्वे बाधकाभावात् तादृशलौकिकनिश्चयाव्यवहितपूर्वक्षणोत्पन्नायां तादृशह्रदादिविशेष्यकवह्न्याद्यनुमितौ तादृशोभयाभावविरहादिति भावः। तद्दोषः = निरुक्ताव्याप्तिरूपो दोषः। तदुत्तरेति। तादृशनिश्चयाव्यवहितोत्तरमिति वक्तव्यमित्यर्थः। ह्रदो वह्न्यभाववानित्याकारकलौकिकान्यनिश्चयपूर्वं ह्रदादौ वह्न्याद्यनुमित्युत्पादे तादृशबाधनिश्चय एव व्याहन्येत, निरुक्तानुमितेः निरुक्तबाधबुद्धिप्रतिबन्धकत्वात्, तथाच क्वाव्याप्तिरित्यतो निश्चये लौकिकत्वमुक्तमिति बोध्यम्। ननु चैत्रस्य वह्न्यभाववद्ध्रदादिनिश्चयदशायां मैत्रस्य ह्रदो वह्निमान् वह्निव्याप्यधूमवानित्यनुमित्युत्पत्त्या तत्र तादृशोभयाभावविरहात् बाधादाव्याप्तिरत आह तत्सामानाधीति। यद्रूपावच्छिन्नविषयकनिश्चयसामानाधिकरण्यमित्यर्थः। एकस्य=चैत्रादेः। अन्यस्य = मैत्रादेः। न क्षतिः = न बाधादावव्याप्तिः। नन्वसम्भवः, निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतरूपाश्रया-

* गादाधरी *

बाधादिनिश्चयानन्तरं पक्षतावच्छेदकावच्छिन्ने साध्यादिप्रकारकस्याहार्य्यस्य लौकिकस्य च प्रत्यक्षस्य उत्पत्त्या ज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः। यत्पक्षकयत्साध्यकयद्धेतुकस्थले यादृशदोषविषयकनिश्चयानन्तरं कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्ध्याऽव्याप्तिरतोऽनुमितिस्थलेऽनाहार्य्यदोषविशेषाजन्यज्ञानं निवेश्य कल्पान्तरमाहानाहार्य्येति। तथा च यत्र तादृशानुमित्यप्रसिद्धिस्तत्र तथाविधमानसोपनीतभानादिकमादायैव लक्षणं सङ्गमनीयमिति भावः।

बाधादिनिश्चयानन्तरं आहार्य्यसाध्यादिप्रकारकप्रत्यक्षोत्पत्त्याऽसम्भवोऽव्याप्तिर्व्वेत्यत आहानाहार्य्येति। शङ्खो न पीत इत्यादिनिश्चयानन्तरं

* चन्द्रकला *

सिद्धौ लक्षणगमनसम्भवात्, चैत्रीयाश्रयासिद्धिनिश्चयदशायां मैत्रस्यापि निर्वह्निपर्वतविशेष्यकानुमित्यप्रसिद्धेरित्युक्तत्वादिति ध्येयम्। अनुमितिमनिवेश्य यद्रूपावच्छिन्नविषयकनिश्चयोत्तरज्ञानसामान्ये इत्युक्तौ ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादावसम्भवः, बाधादिनिश्चयाव्यवहितोत्तरोत्पन्नज्ञानसामान्यान्तर्गते वह्निमान् ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञाने लौकिकनिश्चयात्मकवह्निमद्भ्रदज्ञाने वा ह्रदादिविशेष्यकवह्न्यादिप्रकारकत्वघटिताद‍ृशोभयाभावाऽसत्त्वादतस्तादृशज्ञानसामान्य इत्यनभिधाय तादृशानुमितिसामान्ये इत्युक्तमित्याह बाधादिनिश्चयेति। आदिना व्यभिचारादिपरिग्रहः। अनाहार्यमानसज्ञाने वेतिकल्पान्तरोत्थितौ बीजमाह यत्साध्यकेति। यादृशदोषेति यादृशबाधादिदोषार्थकम्। तत्र = तादृशस्थले। तादृशेति। बाधादिदोषविषयकनिश्चयानन्तरमित्यादिः। घटादिविषयार्थकम्। अव्याप्तिरिति सर्वत्रैव तादृशानुमित्यप्रसिद्धेरप्रामाणिकत्वात् यादृशस्थल इत्यादिनाऽव्याप्तिरेवाभिहितेत्यवधेयम्।

नन्वेवमनाहार्यदोषविशेषाजन्यज्ञानसामान्यनिवेशे वा कथं तादृशस्थलीयदोषे नाऽव्याप्तिरित्यतो भावमाह तथाचेति। यत्र = यादृशस्थले, तत्र = तादृशस्थले। तथाविधेति। दोषविषयकनिश्चयानन्तरम्। घटादिविषयकज्ञानलक्षणासन्निकर्षजन्यप्रत्यक्षादिकमादायैवेत्यर्थः। आदिपदात् तथाविधशाब्दबोधादेरुपग्रहः। लक्षणं संगमनीयमिति। बाधादिदोषविषयकनिश्चयाव्यवहितोत्तरोत्पन्नतादृशप्रत्यक्षादौ तथाविधोभयाभावस्याक्षतत्वादित्याशयः। मानसज्ञाने अनाहार्यत्वविशेषणोपादानप्रयोजनमाह बाधादीति। आदिना व्यभिचारिदोषान्तरपरिग्रहः। तेन नाग्रिमासम्भवइत्यस्याऽसंगतिः। सर्वत्र दोषविषयकनिश्चयानन्तरं आहार्यपक्षादिविशेष्यकसाध्यादिप्रकारकज्ञानोत्पादे प्रमाणाऽभावादाह अव्याप्तिर्वेति। तथाच यादृशदोषविषयक-

❀ गादाधरी ❀

**शङ्खादौ पीतत्वादिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शङ्खः पीतः शङ्खत्वादित्यादिस्थलीयबाधादावव्याप्तिरतो मानसेति। मानसपदं दोषविशेषाजन्यज्ञानपरं, तेन नाहं गौर इत्यादिनिश्चयानन्तरं मिथ्याज्ञानजन्यवासनादिरूपदोषविशेषजन्यात्मविशेष्यकगौरत्वादिप्रकारकमानसज्ञानस्योत्पत्तावपि अहं गौर आत्मत्वादित्यादिस्थलीयबाधादौ नाव्याप्तिः।**

**एतेन यादृशपक्षसाध्यहेतुकस्थले यद्विषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदापि न जातं तत्राव्याप्तिरित्यपि निरस्तम्। तत्राप्यनुमितिशाब्दबोधादिकमादाय लक्षणगमनसम्भवात्। पक्षतावच्छे-**

❀ चन्द्रकला ❀

निश्चयानन्तरं आहार्यपक्षादिविशेष्यकंसाध्यादिप्रकारकं साध्यव्याप्यहेत्वादिप्रकारकञ्च ज्ञानमुत्पद्यते तादृशदोषेऽव्याप्तिरिति भावः।

नन्वनाहार्यमानसज्ञानसामान्ये तादृशोभयाभावनिवेशेऽपि शंखः पीतः शंखत्वादित्यादौ पीतत्वाभाववान् शंख इत्याकारकबाधनिश्चयानन्तरं पित्तादिदोषवशात् 'शंखःपीतःपीतत्वव्याप्यशंखत्ववाँश्चे'त्याकारकप्रत्यक्षे तादृशोभयाभावविरहेण पीतत्वाभावविशिष्टशंखरूपबाधाव्याप्तेर्मानसपदेन कथञ्चिद्वारणेऽपि अहं गौर आत्मत्वादित्यादौ गौरत्वाभावविशिष्टात्मरूपबाधाऽव्याप्तिदुर्वारा स्यात्, निरुक्तबाधनिश्चयोत्तरं मिथ्याज्ञानजन्यवासनारूपदोषवशात् अहं गौरःगौरत्वव्याप्यात्मत्ववांश्चेत्याकारकानाहार्यमानसज्ञानोत्पत्तेरावश्यकतया तत्र प्रकृतपक्षविशेष्यकप्रकृतसाध्यादिप्रकारकत्वघटितोभयाभावविरहादतो मानसपदं दोषविशेषाजन्यज्ञानपरमेव वक्तव्यमित्याह शंखो न पीत इत्यादितो बाधादौ नाव्याप्तिरित्यन्तम्। एतेनेति। मानसपदस्य दोषविशेषाऽजन्यज्ञानपरत्वव्याख्याकरणेनेत्यर्थः। विरोधीति चाक्षुषादिसामग्रीवशेनेत्यर्थः। तत्र=तादृशदोषे। दोषविशेषाजन्यज्ञानविवक्षणे न तादृशदोषेऽव्याप्तिरित्याह तत्रेति। यादृशस्थले दोषविषयकज्ञानोत्तरं मानसज्ञानं न जातं तादृशस्थले इत्यर्थः।

प्रथमदलं विहाय पक्षे साध्यव्याप्यहेतुमत्त्वावगाहित्वाभावमात्रप्रवेशे बाधसत्प्रतिपक्षादावव्याप्तिः, बाधादिनिश्चयाव्यवहितोत्तरोत्पन्नायां साध्यव्याप्यहेतुमान् पक्ष इत्याकारकानुमितौ पक्षे साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावस्याऽसत्त्वात्। एवं द्वितीयदलम् परित्यज्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावमात्रनिवेशे व्यभिचारविरोधस्वरूपासिद्ध्यादावव्याप्तिः, व्यभिचारादिनिश्चयानन्तरं समुत्पन्नायां पक्षःसाध्यवानित्याकारकानुमितौ पक्षे साध्यवैशिष्ट्यावगाहित्वाभावविरहादित्याह पक्षतेति।

❀ गादाधरी ❀

दकेत्यादिदलद्वयनिवेशस्य व्यावृत्तिः पूर्वोक्तरीत्या बोध्या। विरोधिविषयिताप्रयुक्तत्वनिवेशप्रयोजनं स्वयमेवाग्रे वक्ष्यति।

यत्र विषयविशेषे समूहालम्बनज्ञानं न कस्यापि जातं तत्र पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वविशिष्टसाध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावाप्रसिद्ध्याऽव्याप्तिरतो विशिष्टाभावमुपेक्ष्योभयाभावनिवेशः कृतः। तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयकत्वव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्य

❀ चन्द्रकला ❀

पक्षतावच्छेदकसाध्यतावच्छेदकादिव्यावृत्तिरपि पूर्ववदेव बोध्या, अन्यथा ह्रदो वह्न्यभाववानित्यादिबाधनिश्चयोत्तरोत्पन्नानुमितिसामान्यान्तर्गतायां द्रव्यं वह्निमत् वह्निव्याप्यधूमवच्चेत्याकारकानुमितौ पक्षतावच्छेदकाद्यघटितवह्न्यादिप्रकारकत्वघटितोभयाभावविरहात् पूर्ववदेव बाधादावव्याप्तिप्रसंगःस्यादित्यवधेयम्। वक्ष्यतीति दीधितिकार इति शेषः। ननु यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्वविशिष्टतादृशसाध्यव्याप्यहेतुप्रकारकत्वाभावरूपविशिष्टाभाव एव विवक्ष्यतां किं तादृशोभयाभावनिवेशेन? उभयाभावस्य तादृशसाध्यप्रकारकत्वत्व–तादृशहेतुप्रकारकत्वत्वोभयत्वैतत्त्रितयनिष्ठावच्छेदकताकप्रतियोगिताकत्वेन गुरुत्वादित्यत आह यत्रेति। यादृशस्थले इत्यर्थः। विषयविशेषे = पक्षादिविषयविशेषे। विषयित्वं सप्तम्यर्थः, तस्य च समूहालम्बनज्ञानेऽन्वयः। तादृशेति पक्षःसाध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकसमूहालम्बनज्ञानमित्यर्थः। तत्र = तादृशस्थले। अव्याप्तिरिति। विशिष्टाभावघटितलक्षणाऽव्याप्तिरित्यर्थः। उभयेति। तादृशसाध्यप्रकारकत्वघटितोभयाभावो निवेशित इत्यर्थः। तथाच विशिष्टाभावस्य लघुत्वेऽपि यादृशस्थले पक्षःसाध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकं समूहालम्बनं ज्ञानं न कस्यापि पुरुषादेर्जातं तादृशस्थले पक्षविशेष्यकसाध्यप्रकारकत्वविशिष्टतादृशहेतुप्रकारकत्वाऽप्रसिद्ध्या तादृशविशिष्टाभावस्य दोषविषयकनिश्चयोत्तरमनुमितौ वक्तुमशक्यत्वादव्याप्तिरतःप्रत्येकज्ञाने प्रसिद्धस्य तादृशसाध्यादिप्रकारकत्वादेरुभयस्याऽभाव एव वक्तव्यः, लाघवन्त्वकिञ्चित्करमिति भावः। तादृशोभयेति। प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्व–प्रकृतसाध्यव्याप्यहेतुप्रकारकत्वोभयाभावप्रयोजकीभूता या विरोधिविषयिता तद्वत्त्वमित्यर्थः। यद्रूपेति।

॥ कलाविलासः ॥

तादृशोभयाभावेति। नचात्र कल्पे पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयिताव्यापकत्वस्य तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वे सत्त्वादिति तादृशातिव्याप्तिं विहाय यथासन्निवेशे न वैयर्थ्यमित्यभिधानमसंगतमिति वाच्यम्, तादृशोभयाभावप्रयोजकतावच्छेदकविषयितात्वावच्छिन्नाधिकरणत्वं यद्रूपावच्छिन्नविषयिताव्यापकमित्यस्यैव विवक्षणीयत्वात्, तादृशाधिकरणतायाःपाषाणमयो न वह्निमान् इत्याकारकज्ञानविशिष्टपर्वतश्च पाषाणमय इत्याकारकज्ञान एव वर्त्तमानतया तादृशज्ञानाऽसमानकालीनपाषाणमयःपर्वत इत्याकारकज्ञानेऽपि पाषाणमयत्ववत्पर्वतविषयितायाः सत्त्वेन तत्र तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वस्य विरहात् तादृशव्यापकत्वभंगस्यावश्यकत्वात्।

अन्ये तु तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वमित्यादिना तादृशोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं प्रविष्टं तद्रूपावच्छिन्ने तद्रूपावच्छिन्नाभाव-तद्व्याप्यान्यतरविषयितावत्त्वम् यद्रूपावच्छिन्नविषयित्वव्यापकमित्यस्य विवक्षितत्वान्न कोऽपि दोष इत्याहुः।

ननु तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपावच्छिन्नविषयित्वसमानाधिकरणं तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वे व्यापकत्वनिवेशनमफलमितिचेन्न,घटविषयकवह्न्यभाववद्ह्रदविषयकसमूहालम्बनज्ञानमादाय घटेऽतिव्याप्त्यापत्तेः, घटविषयित्वसामानाधिकरण्यस्य तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वे सत्त्वात्।

नचाव्यापकीभूतविषयिताशून्यत्वविरहादेव न तादृशसमूहालम्बनज्ञानमादाय घटेऽतिव्याप्तिरिति वाच्यम्, यादृशस्थलविशेषे वह्न्यभाववद्ध्रद इति ज्ञानं कदाचिद् घटविषयकं कदाचिच्च पटविषयकमित्यन्यतरविषयकमेव भवति, यदा न भवति तदाऽप्रामाण्यज्ञानास्कन्दितमेव भवति, तादृशस्थले अव्यापकीभूतविषयिताशून्याऽप्रामाण्यज्ञानानास्कन्दितवह्न्यभाववद्ध्रदनिश्चयाऽप्रसिद्ध्या तादृशह्रदरूपबाधेऽव्याप्तिवारणायाव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वस्यैव यद्रूपावच्छिन्नविषयितायां विवक्षणीयतया समूहालम्बनतादृशज्ञानीयघटविषयितामादाय घटेऽतिव्याप्तेरवारणात्। नच तथापि स्वविषयिताप्रयोज्येत्यादिना स्वपदेन घटस्योपादानाऽसम्भवात् कथं घटेऽतिव्याप्तिः सम्भवतीति वाच्यम्, स्वविषयिताप्रयोज्यविशिष्टान्तरविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकं यद् यत् स्वं तद्घटितत्वस्य प्रतियोगिकोटौ स्वत्वमन्तर्भाव्य निवेशनीयत्वात्। अन्यथा विरोधिविषयितापदानुपादाने वस्तुमात्रेऽतिव्याप्त्यभिधानस्याऽसंगतिः स्यादिति तु विवेचनीयम्।

* दीधितिः *

पक्षतावच्छेदकवैशिष्ट्यादिकञ्चवैज्ञानिकं न तुः वास्तविकं ग्राह्यम् ।

* गादाधरी *

सम्यक्त्वेऽपि यथासन्निवेशो न वैयर्थ्यम् ।

ननु काञ्चनमयः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टपक्षाद्यप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वाद्यप्रसिद्धिरित्याश्रयासिद्ध्यादावव्याप्तिरित्यत आह पक्षतावच्छेदकेति। आदिपदात् साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः। वैज्ञानिकमिति। तत्तत्प्रकारेण ज्ञायमानत्वरूपमित्यर्थः, तथा च पर्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञायमानत्वमादाय

* चन्द्रकला *

लक्ष्यतावच्छेदकत्वेनाभिमतधर्मार्थकम्। सम्यक्त्वेऽपीति। अव्याप्त्यादिदोषरहितत्वेनेत्यादिः। ह्रदो वह्निमानित्यदौ ह्रदविशेष्यकवह्न्यादिप्रकारकत्वघटिततादृशोभयाभावप्रयोजकवह्न्यभाववद्ह्रदादिविषयितारूपविरोधिविषयितावत्त्वस्य वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयिताव्यापकतया यद्रूपपदेन वह्न्यभावविशिष्टह्रदत्वादेरुपादानसम्भवात् तत्र तादृश यद्रूपमादाय बाधादौ लक्षणसमन्वयः। एवमन्यत्राऽपि।

केवलह्रदत्वावच्छिन्नविषयितासामानाधिकरण्यस्य पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितासामानाधिकण्यस्य च वह्न्यभाववद्ध्रदादिज्ञानान्तर्भाविन तादृशोभयाभावप्रयोजकविरोधिविषयितायां सत्त्वात् बाधाद्येकदेशे पाषाणमयत्ववत्पर्वतादौ चातिव्याप्तिरतो यद्रूपावच्छिन्नविषयितासामानाधिकरण्यमुपेक्ष्य तादृशविषयिताव्यापकत्वनिवेश इति ध्येयमधिकमन्यत्रानुसन्धेयम्।

यथासन्निवेश इति। यद्रूपावच्छिन्नविषयकनिश्चयोत्तरमनुमितिसामान्ये तादृशोभयाभावादेःसन्निवेशे इत्यर्थः। न वैयर्थ्यमिति। निरुक्तलक्षणस्य लक्षणान्तरत्वेन तादृशानुमितिसामान्ये उभया भावघटितलक्षणात्मकधर्मसामानाधिकरण्यस्य निरुक्तलक्षणात्मकधर्मे विरहात् स्वसामानाधिकरण्यघटितव्यर्थताया यथाश्रुतलक्षणस्याऽसम्भवादिति हृदयम्।

वैज्ञानिकत्वं निर्वक्ति तत्प्रकारेति। काञ्चनमयत्वादिप्रकारेणेत्यर्थः। तेन रूपेण = काञ्चनमयत्वादिना।

ननु तादृशवैज्ञानिकत्वं यदि पक्षतावच्छेदकादिप्रकारेण ज्ञानविषयत्वमात्रं तदा ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदरूपबाधादौ सर्वत्राऽसम्भवः, तादृशबाधादिनिश्चयाऽव्यवहितोत्तरोत्पन्नायां ह्रदो द्रव्यं जलमयो वह्निमान् वह्निव्याप्यधूमवां-

❀ गादाधरी ❀

लक्षणसमन्वय इति भावः। न च ह्रदो न वह्निमानित्यादिनिश्चयानन्तरं जायमाने ह्रदो द्रव्यं जलमयो वह्निमानित्याद्याकारकसमूहालम्बने ह्रदत्वादिना ज्ञायमाने वह्न्यादिवैशिष्ट्यावगाहित्वासत्त्वादसम्भव इति वाच्यम्, पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठविशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्ना साध्यप्रकारता या च साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता तत्प्रतियोगित्वयोरवगाहित्वान्तद्द्वयेन विवक्षणात्, विशिष्टविषयाप्रसिद्धावपि पर्वतांशे काञ्चनमयत्वाद्यवगाहिभ्रमविषयताया व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नायाः प्रसिद्ध्या लक्षणसमन्वयात्। व्याप्तिप्रकारतास्थले च निरूप्यनिरूपकभावापन्ना व्याप्तिघटकतत्तत्पदार्थ-

❀ चन्द्रकला ❀

श्चेत्याकारिकायां समूहालम्बनानुमितौ ह्रदत्वप्रकारेण निरुक्तसमूहालम्बनज्ञानविषये जलमये वह्निवैशिष्ट्यावगाहित्वस्य वह्निव्याप्यधूमवैशिष्ट्यावगाहित्वस्य च सत्त्वेन तादृशोभयाभावविरहात् इत्याशंकते नचेति। वाच्यमितिपरेणान्वयः। उत्तरयति पक्षतेति। पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-साध्यतावच्छेदकावच्छिन्ननिरूपितत्वसंसर्गावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारताकत्वोभयाभावस्यैव दीधितिग्रन्थेन विवक्षणीयतया नोक्ताऽसम्भवः, ह्रदो द्रव्यं जलमयो वह्निमानित्यादिसमूहालम्बनज्ञाने ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वविरहेण तत्र तादृशोभयाभावस्याक्षतत्वादिति समुदितताःपर्यम्।

ननु धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिः, वह्निव्यापकधूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्ध्या तादृशव्यभिचारनिश्चयोत्तरानुमितौ साध्यव्याप्तिघटितोभयाभावस्य वक्तुमशक्यत्वादित्यत आह व्याप्तिप्रकारतेति। व्याप्तिप्रकारताघटितोभयाभावनिवेशस्थाने इत्यर्थः। निरूप्येति। तथाच हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपिताधिकरणविशेष्यत्वावच्छिन्नप्रकारतानिरूपितवृत्तित्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितप्रतियोगित्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसाध्यता-

❀ दीधितिः ❀

व्याप्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्या,

❀ गादाधरी ❀

प्रकारता निवेशनीया। तेन धूमवान् वह्नेरित्यादौ वह्निव्यापकधूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धावपि न क्षतिः।

नन्वत्र व्याप्तिपदेनान्वयव्याप्तिश्चेद्विवद्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनि साध्यादिनिष्ठाभावाप्रतियोगित्वादिरूपानुपसंहारित्वेऽव्याप्तिस्तज्ज्ञानस्यान्वयव्याप्तिज्ञानाविरोधित्वात्, व्यतिरेकव्याप्तिविवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्व-साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादावव्याप्तिः, तज्ज्ञानस्य ग्राह्याभावाद्यनवगाहितया व्यतिरेकव्याप्तिज्ञानविरोधित्वे मानाभावादत आह व्याप्तिश्चेति। अन्वयतः =

❀ चन्द्रकला ❀

वच्छेदकनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसाध्यनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताधिकरणनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितवृत्तित्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितहेतुनिष्ठविशेष्यत्वावच्छिन्नप्रकारताकत्वघटितोभयाभावो निवेशनीयः। एवञ्च धूमवान् वह्नेरित्यादौ अखण्डतादृशव्याप्तेरप्रसिद्धावपि निरुक्तरीत्या भ्रमीयतादृशहेतुप्रकारताकत्वस्य प्रसिद्धतया तद्घटितोभयाभावस्य व्यभिचारनिश्चयोत्तरानुमितौ सुलभत्वान्न तत्स्थलीयव्यभिचारादावव्याप्तिरितिभावः। तेन = निरूप्यनिरूपकभावापन्नव्याप्तिघटकतावत्पदार्थप्रकारताविवक्षणेन। वह्निव्यापकेति। वह्निनिष्ठवह्निमद्वृत्त्यभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नसामानाधिकरण्यरूपाया व्याप्तेरित्यर्थः। न क्षतिः = न व्यभिचारादावव्याप्तिः।

नन्वत्रेति। एतल्लक्षणे इत्यर्थः। व्याप्तिपदार्थान्वयि घटकत्वं सप्तम्यर्थः। व्यतिरेकेति। हेतुनिष्ठसाध्याभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानप्रतिबन्धकज्ञानविषयीभूते इत्यर्थः। साध्यादीति। साध्याभावव्यापकाभावाप्रतियोगित्वविशिष्टहेतुरूपानुपसंहारित्वे इत्यर्थः। न तु अभावाप्रतियोगित्वविशिष्टसाध्यमप्यनुपसंहारित्वं, तस्य व्यतिरेकव्याप्तिग्रहाविरोधित्वात्, व्यतिरेकव्याप्तिग्रहे साध्याभावस्य भानेऽपि तत्र प्रतियोगित्वस्य संसर्गतयैव भानादिति ध्येयम्।

व्यतिरेकेति। व्याप्तिपदेनेत्यादिः। हेतुनिष्ठेति। साध्याभाववद्वृत्तित्वविशिष्टहेतुरूपव्यभिचारे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वविशिष्टसाध्यतावच्छेदकरूपव्यभिचारादौ अव्याप्तिरित्यर्थः। तज्ज्ञानस्य = निरुक्तव्यभिचारादिज्ञानस्य। ग्राह्येति। ग्राह्यीभूतव्यतिरेकव्याप्त्यादेरभावानवगाहितयेत्यर्थः। व्यतिरेकेति।

❀ दीधितिः ❀

**तादृशावगाहित्वप्रसिद्धिराहार्यज्ञान एवाभ्युपेतव्या, अनन्यगतिकत्वात् ।**

❀ गादाधरी ❀

अन्वयनिरूपिता, प्रकृतहेतुनिष्ठा साध्यनिरूपितेति यावत्, सा चात्यन्ताभावान्योन्याभावभेदेन भिन्ना अव्यभिचरितत्व–हेतुव्यापकसाध्यसामानाधिकरण्यरूपा नानाविधैव ग्राह्या, अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावादिगर्भव्यभिचारज्ञानस्य व्यापकत्वादिज्ञाने साध्याभाववद्वृत्तिहेत्वादिज्ञानस्य ग्राह्याभावाद्यनवगाहितया अविरोधित्वेऽपि न क्षतिः । व्यतिरेकतः=व्यतिरेकनिरूपिता, साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा, ग्राह्या=व्याप्तिपदेन विवक्षणीया, तथा च तत्तद्व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभावो निवेशनीय इति भावः ।

ननु निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वमेवाप्रसिद्धमिति तत्र कथं लक्षणसमन्वय इत्यत आह तादृशावगाहित्वप्रसिद्धिरिति ।

❀ चन्द्रकला ❀

मणिमन्त्रादिन्यायेनेत्यादिः ।इदन्तु तत्त्वम्, प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वप्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभाव इत्यादौ साध्यनिरूपिता व्याप्तिर्यदि साध्याभावव्यापकाभावप्रतियोगिहेतुरूपव्यतिरेकव्याप्तिस्वरूपा तदा सर्वमनित्यं प्रमेयत्वादित्यादौ नित्यत्वव्यापकीभूताभावाप्रतियोगित्वविशिष्टहेतुरूपानुपसंहारित्वे लक्षणसमन्वयसम्भवेऽपि धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपव्यभिचारादावव्याप्तिः, निरुक्तव्यभिचारनिश्चयस्य व्यतिरेकव्याप्तिग्रहाऽप्रतिबन्धकतया तादृशनिश्चयोत्तरजातायां अयं धूमवान् धूमव्यतिरेकव्याप्तिविशिष्टवह्निमांश्चेत्याकारकानुमितौ तादृशोभयाभावस्याऽसत्त्वात् ।

यदि च तादृशी व्याप्तिरन्वयव्याप्तिस्तदा व्यभिचारादौ लक्षणसमन्वयसम्भवेऽपि तादृशनित्यत्वव्यापकीभूताऽभावाप्रतियोगित्वविशिष्टप्रमेयत्वरूपेऽनुपसंहारित्वेऽव्याप्तिः साध्याभाववद्वृत्तित्वादिरूपान्वयव्याप्तिज्ञानं प्रति निरुक्तानुपसंहारित्वनिश्चयस्याऽप्रतिबन्धकतया तादृशनिश्चयाव्यवहितोत्तरोत्पन्नानुमितिसामान्यान्तर्गतायां सर्वमनित्यं अनित्यत्वान्वयव्याप्तिविशिष्टप्रमेयत्ववच्चेत्यनुमितौ तादृशोभयाभावविरहादिति ।

प्रकृतसाध्यनिरूपिता हेतुनिष्ठान्वयव्याप्तिस्तु हेतुव्यापकसाध्यसामानाधिकरण्यरूपा

❀ दीधितिः ❀

**एवञ्च वस्तुमात्रनिश्चयानन्तरं निर्वह्नित्वविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात् ।**

❀ गादाधरी ❀

आहार्य्यज्ञान एवेति । निर्वह्नित्वविशिष्टपर्वते वह्निप्रत्यक्षं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष एवेत्यर्थः ।

विरोधिविषयिताप्रयुक्तत्वनिवेशनप्रयोजनमाह एवञ्चेति । विरोधिविषयिताप्रयुक्तत्वनिवेशे चेत्यर्थः । न क्षतिः—न निर्वह्निः पर्वतो वह्निमानित्यादौ घटादावतिव्याप्तिः । तस्य = घटादिनिश्चयस्य, विरोध्यविषयकत्वात् = स्वानन्तरोत्पन्नानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोज-

❀ चन्द्रकला ❀

साध्याभाववद्वृत्तित्वादिरूपा साध्याभाववद्वृत्तिभिन्नत्वादिरूपा च नानाविधा । सुतरां व्यभिचारोऽपि नानाविधः, हेतुव्यापकसाध्यसामानाधिकरण्यज्ञानं प्रति साध्याभाव--वद्वृत्तित्वविशिष्टहेतुरूपव्यभिचारज्ञानस्य तादृशव्याप्तिघटकपदार्थभावानवगाहितया अप्रतिबन्धकत्वेऽपि न तत्तद्व्यभिचारेऽव्याप्तिः ।

यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्व-प्रकृतसाध्यनिरूपिततत्तद्व्याप्तिप्रकारतानिरू-रूपितप्रकृतहेतुप्रकारताकत्वकूटोभयाभावस्तद्रूपवत्त्वमित्यस्यैव लक्षणार्थतया एकविधव्यभिचारनिश्चयाव्यवहितोत्तरानुमितिसामान्ये तादृशकूटस्याऽसत्त्वेन तत्रोभयाभावस्याक्षतत्वात् इत्येवं 'अन्वयतः' इत्यादितः 'इतिभाव' इत्यन्तसमुदितग्रन्थतात्पर्यम् ।

ननु आहार्यज्ञानमात्रे निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्वादेः प्रसिद्धिसम्भवेऽपि तत्राहार्यत्वमेव कथं समर्थनीयमित्यतः आहार्यपदार्थं वक्ति निर्वह्नित्वेति । तथाच विरोधिनिश्चयकालीननिरुक्तेच्छाजन्यज्ञानत्वमेव तत्राहार्यत्वमितिभावः । तादृशोभयाभावे विरोधिविषयिताप्रयुक्तत्वदलानुपादाने निर्वह्निः पर्वतो वह्निमानित्यादौ घटेऽतिव्याप्तिः. घटत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तराहार्याकारानुमितेरप्रसिद्धतया तादृशघटपटाद्यनुमितिसामान्य एव निर्वह्निपर्वतधर्मिकवह्निप्रकारकत्वघटितोभयाभावस्य सत्त्वादित्येवं विरोधिविषयिताप्रयुक्तत्वनिवेशप्रयोजनप्रदर्शनपरम् एवञ्चेत्यादिदीधितिग्रन्थमवतारयति विरोधीति । विरोधिपदप्रयोजनन्त्वग्रे दीधितिकृतैव स्वयं प्रदर्शयिष्यते ।

स्वानन्तरेति । स्वं घटादिनिश्चयस्तदुत्तरघटपटाद्यनुमितिसामान्यनिष्ठस्य निर्व-

❀ दीधितिः ❀

**एवं साध्यनिश्चयोत्तरं तस्यानुमितावपि मानसज्ञानाविरोधित्वात् ।**

❀ गादाधरी ❀

कविरोधिविषयिताकत्वविरहात् । वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकघटादिनिश्चयानन्तरजातज्ञाननिष्ठतादृशोभयाभाववत्त्वस्य तज्ज्ञानीयविरोधिविषयिताप्रयुक्तत्वेऽपि घटादिनिश्चयाव्यवहितोत्तरानुमितेर्विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वविरहान्नातिव्याप्तिरितिभावः । प्रयोज्यप्रयोजकभावश्चानुभवसिद्धः स्वरूपसम्बन्धविशेषः । विरोधिपदप्रयोजनमाह एवमिति । अननुमितावपीति । न क्षतिः, तस्य विरोध्यविष-

❀ चन्द्रकला ❀

ह्निपर्वतधर्मिकवह्निप्रकारकत्वघटिततादृशोभयाभावस्य प्रयोजकविरोधिविषयिताकत्वविरहादित्यर्थः । प्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकतया निरुक्ताहार्यज्ञानत्वव्यापिकायाः कस्या अपि विषयिताया घटनिश्चयप्रतिबध्यतावच्छेदत्वाऽसम्भवादित्याशयः ।

यद्यपि वह्निमान् पर्वतो घटश्चेत्याकारकसमूहालम्बनवह्निमत्पर्वतविषयकघटत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितौ वर्त्तमानस्य तादृशोभयाभावस्य अनुमितिपूर्वोत्पन्नसमूहालम्बनविषयिताप्रयुक्ततया घटादावतिव्याप्तिर्दुर्वारेत्युच्यते, तथापि यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यनिष्ठोभयाभाव एव विरोधिविषयिताप्रयुक्तत्वस्य निवेशनीयतया न घटादावतिव्याप्तिः, समूहालम्बनानात्मकघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितेरपि घटत्वरूपयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गततया तन्निष्ठोभयाभावे विरोधिविषयिताप्रयुक्तत्वस्यासत्त्वादिति भावमाह वह्निमत्पर्वतेति ।

ननु घटनिश्चयाव्यवहितोत्तरानुमितिनिष्ठे निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वघटितोभयाभावे घटादिविषयितायाः प्रयोजकत्वाभावे किं मानमित्यत आह प्रयोज्येति । तथाचैतज्ज्ञाने इयं विषयिता वर्त्तते अत एवैतज्ज्ञानाव्यवहितोत्तरज्ञाने तादृशोभयाभावो निर्विवाद इत्यनुभवात् एतज्ज्ञानीयविषयिता प्रयोजिका, तादृशोभयाभावश्च प्रयोज्य इत्याकारकानुभवसिद्धमेव प्रयोजकत्वं प्रयोज्यत्वञ्चेति भावः ।

घटादिनिश्चयोत्तरजातानुमितिनिष्ठस्य निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वघटितोभयाभावस्य घटविषयिताप्रयोज्यत्वविरहेणैव घटादावतिव्याप्तिवारणसम्भवे विषयितायां विरोधित्वविशेषणं व्यर्थमित्यतो विरोधिपदव्यावृत्तिप्रदर्शनपरां दीधितिं व्याचष्टे न क्षतिरिति ।

❁ गादाधरी ❁

यकत्वादित्यनुपपद्यते । न क्षतिः = न साध्यवत्पक्षेऽतिव्याप्तिः ।

विरोधिविषयितापदेन तादृशोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नाभाव-तद्व्याप्यान्यतरविषयितायाः साध्य-

❁ चन्द्रकला ❁

अतिव्याप्तिरिति । विषयितायां विरोधित्वविशेषणानुपादाने पर्वतो वह्निमान् धूमादित्यादौ सिद्धिविषये वह्निमत्पर्वतेऽतिव्याप्तिः, वह्निमत्पर्वतनिश्चयस्य सिद्धिविधया पर्वतधर्मिकवह्निविधेयकानुमितिप्रतिबन्धकतया तादृशनिश्चयाव्यवहितोत्तरघटपटाद्यनुमितिसामान्यनिष्ठस्य पर्वतविशेष्यकवह्निप्रकारकत्वघटितोभयाभावस्य वह्निमत्पर्वतविषयिताप्रयुक्तत्वादतो विरोधित्वमवश्यं विषयितायां वक्तव्यमिति भावः ।

ननु सिद्धिविषयिताया अपि पक्षधर्मिकसाध्यानुमितिप्रतिबन्धकतावच्छेदकतया विषयितायां विरोधित्वविशेषणोपादानेऽपि न सिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिवारणं सम्भवतीत्यत आह विरोधीति । विरोधिपदोपादानबलेनेत्यर्थः ।

तादृशोभयेति । प्रकृतपक्षविशेष्यतानिरूपितप्रकृतसाध्यप्रकारकत्व-प्रकृतसाध्यव्याप्यहेतुप्रकारत्वरूपोभयाभावप्रतियोगितावच्छेदककोटावित्यर्थः । यद्रूपेति । यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारकत्वमित्यर्थः । तद्रूपेति । तद्रूपावच्छिन्नविषयितानिरूपिता या तद्रूपावच्छिन्नाभाव-तद्रूपावच्छिन्नाभावव्याप्यान्यतरविषयिता सैव विरोधिविषयिताशब्दार्थः ।

❁ कलाविलासः ❁

न साध्यवत्पक्षेऽतिव्याप्तिरिति । ननु पर्वतो वह्निमानित्याकारकसाध्यनिश्चयोत्तरं वह्निमान् पर्वतो रूपवानित्यनुमितेरुत्पादात् सिद्धिप्रतिबध्यतावच्छेदकं साध्यविधेयत्वमेव वाच्यं न तु साध्यप्रकारकत्वम्, तथाच कथं साध्यवत्पक्षेऽतिव्याप्तिः ? प्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकतया साध्यप्रकारकत्वघटितोभयाभावं प्रति साध्यवत्पक्षविषयिताया अप्रयोजकत्वादितिचेन्न, यादृशसिद्ध्युत्तरं तत्प्रकारकं ज्ञानं कदापि न जातं तादृशसिद्धिप्रतिबध्यतावच्छेदकतायाः लाघवात् तत्प्रकारताया एव स्वीकरणीयतया तादृशसिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तेरेव ग्रन्थतात्पर्यस्यावश्यकत्वात् ।

अत्र वदन्तिकल्पे यदि प्रयोजकतैक्यं स्यात् तदा वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाऽघटितत्वमपि निवेश्यमित्यप्याहुः ।

❀ गादाधरी ❀

विशिष्टपक्षविषयता—साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताबहिर्भूतविषयताया वा विवक्षितत्वादिति भावः।

न च सिषाधयिषाधीनायां साध्यनिश्चयानन्तरं समूहालम्बनानुमितौ तादृशोभयाभावासत्त्वात् सिद्धिविषयेऽतिप्रसङ्ग एव नास्ति, एवं पक्षे साध्यनिश्चयोत्तरं तदतिरिक्ताविषयकसाध्यविषयकानुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वाऽधिकावगाहिन्या अनुमितेः साध्यधर्मितावच्छेदकान्यविषे-

❀ चन्द्रकला ❀

तथाच काञ्चनमयपर्वतो वह्निमानित्यत्र काञ्चनमयत्वाभावविषयिता काञ्चनमयत्वाभावव्याप्यविषयिता च विरोधिविषयिता, ह्रदो वह्निमानित्यादौ तु ह्रदविषयितानिरूपितवह्न्यभावविषयिता तादृशवह्न्यभावव्याप्यविषयिता च विरोधिविषयितापदेनोपादेयेति भावः।

लाघवादन्यथा निर्वक्ति साध्यतेति। साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयिताभिन्नाया विषयितायाः तादृशविषयित्वावच्छिन्नभेदप्रतियोगितानवच्छेदिकाया वा विषयिताया विरोधिविषयितापदेन विवक्षितत्वादित्यर्थः। तथाच न सिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिः, वह्निमत्पर्वतविषयिताया वह्न्यभाव-तद्व्याप्यान्यतरविषयितानात्मकतया साध्यवत्पक्षविषयिताभिन्नत्वाभाववत्तया च तस्या विरोधिविषयितानात्मकत्वादित्याशयः।

ननु पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्निमानित्याकारकनिश्चयरूपसिद्धिविषये वह्निमत्पर्वतेऽतिव्याप्तिरेव न सम्भवति, पर्वते वह्न्यनुमितिर्जायतामित्याकारकसिषाधयिषाधीनायां पर्वतो वह्निमानित्यादिनिश्चयोत्तरोत्पन्नायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकसमूहालम्बनानुमितौ पर्वतादिविशेष्यकवह्निप्रकारकत्वघटितोभयाभावविरहात्। यद्यपि यादृशसिद्ध्यात्मकपरामर्शपूर्वक्षणे अव्यहितोत्तरक्षणे वा सिषाधयिषैव नोत्पन्ना तादृशसिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिरित्युच्यते, तथापि न निस्तारः, पर्वतो वह्निमानितिसिद्ध्युत्तरं पर्वतो वह्निमानित्याकारकस्वसमानविषयकानुमित्यनुत्पादेऽपि तादृशसिद्ध्युत्तरं नीलपर्वतो वह्निमान् पर्वतो नीलवह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः वह्निमान् पर्वतो रूपवानित्याकारिकायाश्चानुमितेरुत्पत्त्या तत्र तादृशोभयाभावविरहादिति विरोधिपदं व्यर्थमित्याशंकते नचेति। वाच्यमितिपरेणान्वयः।

सिषाधयिषाया अनुत्पादस्थले साध्यवत्पक्षेऽतिव्याप्तिवारणमसम्भवीत्याशंकायामाह एवमिति। तदतिरिक्तेति सिद्धिविषयातिरिक्तार्थकम्। अधिकेति। नील-

* गादाधरी *

यकानुमितेः साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्त्या तत्रोभयाभावासत्त्वादपि नातिप्रसक्तिरिति वाच्यम्, यत्र विषयविशेषे सिषाधयिषाबलात् सिद्ध्युत्तरं तादृशानुमितिः कदापि न जाता तत्रैवातिव्याप्तिसम्भवात् । द्वितीयकल्पे विषयितामात्रं निवेश्यं न तु विरोधिविषयितापर्य्यन्तमित्याशयेनाह मानसज्ञान इति । साध्यनिश्चयस्येत्यादिः । अत्र प्रमेयत्वविशिष्टव्यभिचारादिवारणाय

* चन्द्रकला *

पर्वतो वह्निमान् पर्वतो नीलवह्निमानित्याकारकानुमितेरित्यर्थः ।

पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्माद्यवच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकतापर्याप्त्यधिकरणधर्माद्यवच्छिन्नप्रकारकत्वघटितोभयाभावस्यावश्यं विवक्षणीयतया सिद्ध्युत्तरं पक्षाद्यंशेऽधिकावगाहिन्या अनुमितेरुत्पादेऽपि सिद्धिविषयेऽतिव्याप्तिवारणं न सम्भवतीत्यतः साध्यधर्मितेत्युक्तम् । वह्निमान् पर्वतो रूपवानित्यनुमितेरित्यर्थकम् । साध्यावच्छिन्नेति । अयं वह्निमत्पर्वतवानित्यनुमितेरित्यर्थः । तत्र = निरुक्तानुमितौ । नातिप्रसंगप्रसक्तिरिति । तथाच विरोधित्वं विषयिताविशेषणं निरर्थकमिति भावः ।

उत्तरयति यत्रेति । यादृशस्थलविशेषे इत्यर्थः । तादृशानुमितिः = अधिकावगाहिनी साध्यधर्मितावच्छेदककान्यविधेयिका साध्यावच्छिन्नपक्षविधेयिका चानुमितिः । तत्रैव = तादृशस्थलविशेष एव । अतिव्याप्तिसम्भवादिति । सिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिरिति तादृशातिव्याप्तिवारणायैव विरोधिपदं सार्थकमित्याशयः ।

द्वितीयकल्पे = यद्रूपावच्छिन्नविषयकनिश्चयोत्तरमनाहार्यमानसज्ञाने इत्यादिकल्पे । साध्यनिश्चयस्येत्यादिरिति । साध्यविधेयताकानुमितिं प्रत्येव साध्यनिश्चयस्य प्रतिबन्धकतया वह्निमत्पर्वतनिश्चयोत्तरोत्पन्ने पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकमानसप्रत्यक्षे तादृशोभयाभावविरहादेव साध्यवत्पक्षेऽतिव्याप्तिवारणसम्भवे द्वितीयकल्पे विषयितायां विरोधित्वविशेषणमनुपादेयमेवेति भावः ।

ननु निरुक्तात्रवदन्तिकल्पेऽपि प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकनिश्चयोत्तरानुमितेः पक्षः साध्यवानित्याकारकत्वसम्भवेऽपि व्यभिचारनिश्चयस्य व्याप्तिग्रहं प्रति प्रतिबन्धकतया साध्यव्याप्यहेतुमानित्याकारकत्वाऽसम्भवात् तादृशघटाद्यनुमितौ च यथोक्तोभयाभावस्याऽक्षतत्वादित्यत आह मेयत्वेति । मेयत्वविशिष्टव्यभिचारादीत्यत्रादिपदात् प्रमेयत्वविशिष्टबाधादिपरिग्रहः ।

❀ गादाधरी ❀

यथाश्रुतविशिष्टान्तराघटितत्वनिवेशे उपदर्शितव्यभिचारघटितबाधाद्यव्याप्तेः, विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यताद्दशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं ताद्दशविशेषणं निवेशनीयम् ।

❀ चन्द्रकला ❀

यथाश्रुतेति । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम् अथच यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरमनुमितिसामान्ये विरोधिविषयिताप्रयुक्तोभयाभावस्ताद्दशं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वं ताद्दशस्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तो निरुक्तोभयाभावस्ताद्दशस्ववत्त्वं यदि विशिष्टान्तराऽघटितत्वसहितलक्षणार्थस्तदा प्रमेयत्वविशिष्टव्यभिचारे नातिव्याप्तिः, प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् अत्रवदन्तिकल्पोक्तलक्षणाश्रयीभूतं व्यभिचारत्वं तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वेऽसत्त्वात् स्वपदेन तस्योपादातुमशक्यत्वादिति चेत् ? पूर्वोक्तरीत्या धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपव्यभिचारघटितबाधेऽव्याप्तिः स्यात्, ताद्दशबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् धूमव्यभिचारिवह्नित्वम् अथ च निरुक्तात्रवदन्तिकल्पोक्तलक्षणाश्रयीभूतं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य ताद्दशबाधत्वे विरहात् धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वस्यापि स्वपदेनोपादानाऽसम्भवादतोऽन्याद्दशमेव विशिष्टान्तराऽघटितत्वं यद्रूपविशेषणमाह विशिष्टान्तरेति । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकम् ।

वस्तुतो निरुक्तविशिष्टान्तराघटितत्वघटकं स्वपदं लक्ष्यतावच्छेदकत्वेनाभिमतधर्मपरं नतु लक्ष्यत्वेनाभिमतव्यक्तिपरम्, तथासति व्यभिचारस्य प्रमेयत्वविशिष्टव्यभिचारात्मकतया विशिष्टान्तरत्वाऽसम्भवेन विशिष्टव्यभिचारेऽतिव्याप्तिः स्यात् ।

तथाच स्वावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावतो स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमि-

❀ कलाविलासः ❀

स्वविषयिताप्रयोज्येति । पर्वतत्वसामानाधिकरण्येन धूमसाध्यकवह्निहेतुकस्थले मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, पर्वतो धूमाभाववानित्याकारकबाधभ्रमनिश्चयोत्तरानुमितिनिष्ठोभयाभावप्रयोजक-पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतां विशिष्टान्तरव्यभिचारविषयित्वाऽप्रयोज्यत्वस्य सत्त्वात् पर्वतो धूमवान्

❀ गादाधरी ❀

प्रमेयत्वविशिष्टव्यभिचारादिविषयिताप्रयो-

❀ चन्द्रकला ❀

तिसामान्ये विरोधिविषयिताप्रयुक्तो यो निरुक्तोभयाभावः तद्रूपावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववती या तादृशोभयाभावप्रयोजकाभावाधिकरणता सा यस्य स्वस्य एवम्भूतं यत् स्वं तादृशस्ववत्त्वं विशिष्टान्तराऽघटितत्वघटितसमुदितलक्षणार्थः पर्यवसितः।

प्रमेयत्वविशिष्टव्यभिचारत्वं नैतादृशं स्वं तदवच्छिन्नविषयिताप्रयोज्यायाः प्रकृतसाध्यव्याप्यहेतुप्रकारकत्वाभावाधिकरणतायाः तादृशस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकम् अथ च निरुक्तलक्षणाश्रयीभूतं यद् व्यभिचारत्वं तदवच्छिन्नविषयिताप्रयोज्यतया विशिष्टान्तरव्यभिचारविषयित्वाऽप्रयोज्यतायास्तत्र विरहात्।

धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ तु धूमाभाववद्धूमव्यभिचारिमत्त्वरूपव्यभिचारघटितबाधत्वमेव स्वपदेन धर्त्तुं शक्यम्, तादृशबाधत्वावच्छिन्नविषयिताप्रयोज्यायाः उभयाभावप्रयोजकप्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्वाभावाधिकरणतायाः तादृशबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं यत् निरुक्तलक्षणाश्रयीभूतं धूमव्यभिचारिवह्नित्वं तदवच्छिन्नविषयित्वाप्रयोज्यतायाः निराबाधत्वात् प्रकृतहेतौ प्रकृतसाध्यव्याप्यत्वावगाहित्वाभावाधिकरणताया एव धूमव्यभिचारिवह्निविषयिताप्रयोज्यत्वनियमादिति न प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिर्नवा व्यभिचारघटितबाधेऽव्याप्तिरित्याह प्रमेयत्वविशिष्टेति।

❀ कलाविलासः ❀

**वह्नेरित्यादौ बाधादिरूपविशिष्टान्तरस्य चाऽप्रसिद्धत्वात् विशिष्टान्तरविषयित्वाऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वेन स्वपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्यैवोपादातुं शक्यत्वात्, अतः स्वविषयिताप्रयोज्येति। पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाञ्च मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वविरहादुपादाने न तत्रातिव्याप्तिः। स्वविषयिताप्रयोज्यत्वमपि स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं वक्तव्यम्, अन्यथा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमव्यभिचारिवह्निमत्यतिव्याप्तिः, स्वात्मकधूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयिताप्रयोज्यायाम् पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां यत्किञ्चिद् विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नव्यभिचारविषयित्वाप्रयोज्यत्वसत्त्वेन स्वपदेन धूमव्यभिचारिवह्निमत्त्वस्यैवोपादातुं शक्यत्वात्। तन्निवेशे च न तत्रातिव्याप्तिः, बाधविषयितानन्तःपातिधूमव्यभिचारिवह्निमद्विषयितासाधारण-**

### * गादाधरी *

ज्याया उक्तोभयाभावप्रयोजकव्याप्त्याद्यवगाहित्वाभाववत्तायाः शुद्धव्यभिचारादिविषयिताप्रयोज्यत्वनियमेन प्रमेयत्वविशिष्टव्यभिचारादौ न विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमिति नातिप्रसङ्गः। उपदर्शितव्यभिचारादिघटितबाधादिविषयिताप्रयोज्यायाः पक्षे साध्यावगाहित्वाद्यभावाधिकरणतायास्तद्घटकव्यभिचारादिविषयित्वाप्रयोज्यतया तत्संग्रहः।

### * चन्द्रकला *

उक्तोभयाभावेति। प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व-प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वो भयाभावार्थकम्। शुद्धेति। विशिष्टान्तरीभूतेत्यादिः। नातिप्रसंगइति। स्वपदेन प्रमेयत्वविशिष्टव्यभिचारत्वस्योपादानाऽसम्भवादित्याशयः। तत्संग्रहः = व्यभिचारघटितबाधसंग्रहः।

### * कलाविलासः *

तादृशरूपावच्छिन्नप्रयोज्यत्वस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामसत्त्वात्।

अथ तादृशोभयाभावप्रयोजकं यत्तन्निरूपिताधिकरणतानिवेशेनैवोपपत्तौ अभावत्वेनाभावनिवेशनं निरर्थकमिति चेन्न, प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यापत्तेः, मेयत्वविशिष्टव्यभिचारविषयकस्मृतिनिष्ठाया मेयत्वविशिष्ट-व्यभिचारविषयित्वाधिकरणतायाःविरोधिविषयित्वाधिकरणत्वविधया तादृशोभयाभावप्रयोजकीभूतायाःसंस्कारीयमेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वस्य विशिष्टान्तरव्यभिचारविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्यत्वस्यापि केवलव्यभिचारविषयकसंस्कारात् मेयत्वविशिष्टव्यभिचारविषयकस्मृतेरनुत्पादेनैवावश्यकतया स्वपदेन मेयत्वविशिष्टव्यभिचारत्वस्य धर्तुं शक्यत्वादतोऽभावपदम्। तथाचाभावपदोपादानान्न तत्रातिव्याप्तिः। अभावत्वावच्छिन्नाधिकरणतात्वावच्छिन्नप्रयोजकताया एव विवक्षितत्वात् इति ध्येयम्।

नच तथापि तादृशाभावनिरूपितं यत् तत्कत्वमेव निवेशनीयमधिकरणतात्वेनाधिकरणतानिवेशनमनर्थकमिति वाच्यम्, पर्वतो वह्निमान् पक्षे साध्यवैशिष्ट्यावगाहित्वाभावादित्यादौ मेयत्वविशिष्टवह्न्यभाववद्वृत्तितादृशहेतुरूपव्यभिचारेऽतिव्याप्त्यापत्तेः, तादृशस्मृतिनिष्ठायां तादृशविषयितायां उभयाभावप्रयोजकाभावनिरूपितायां पूर्ववदेव संस्कारीयस्वविषयिताप्रयोज्यत्वस्य विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वस्य च सत्त्वात्।

❀ गादाधरी ❀

न च विशिष्टपक्षे विशिष्टसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदिकायास्तादृशबाधादिविषयतान्तःपातिव्यभिचारादिविषयिताया अपि तादृशबाधादि-

❀ चन्द्रकला ❀

ननु व्यभिचारघटितबाधे कथं लक्षणसमन्वयः प्रतिबन्धकतावच्छेदकविषयिताप्रयोज्यताया एव प्रतिबध्यतावच्छेदकधर्माभावाधिकरणतायाः स्वीकरणीयतया धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नरूपबाधनिश्चयाव्यवहितोत्तरजायमानानुमितिनिष्ठायां उभयाभावप्रयोजकपक्षधर्मिकसाध्यप्रकारकत्वाभावाधिकरणतायां धूमाभावादिविषयिताया इव धूमव्यभिचारविशिष्टवह्निविषयितारूपबाधविषयितान्तःपातिपक्षतावच्छेदककोटिप्रविष्टविषयिताया अपि प्रयोजकताया आवश्यकत्वात् पक्षधर्मिकसाध्यप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकताया धूमव्यभिचारविशिष्टवह्निविषयितायामप्यनपायात् ।

तथा चोक्तबाधत्वावच्छिन्नविषयिताप्रयोज्यत्वस्येव विशिष्टान्तरतावच्छेदकधूमव्यभिचारविशिष्टवह्नित्वावच्छिन्नविषयिताप्रयोज्यत्वस्यापि तादृशोभयाभावप्रयोजकपक्षधर्मिकसाध्यप्रकारकत्वाभावाधिकरणतायां सत्त्वेन स्वावच्छिन्नविषयिताप्रयोज्यविशिष्टान्तरतावच्छेदकरूपावच्छिन्नव्यभिचारविषयत्वाऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वस्य तादृशबाधत्वे विरहात् स्वपदेन धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपबाधत्वस्योपादानाऽसम्भवादित्याशंकते नचेति । वाच्यमिति परेणान्वयः ।

विशिष्टेति । धूमव्यभिचारिवह्निमत्त्वावच्छिन्ने पक्षे इत्यर्थः । विशिष्टसाध्येति धूमत्वविशिष्टधूमार्थकम् । तादृशबाधादीति धूमाभाववद्धूम-

❀ कलाविलासः ❀

अत्रवदन्तिकल्पेऽपि विशिष्टद्वयाऽघटितत्वनिवेशनमावश्यकमन्यथा विशिष्टान्तररूपे प्रकृतलक्षणाश्रयत्वनिवेशादेव जलवद्ध्रदविषयिताया विशिष्टान्तरविषयितात्वाभावेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः स्यात् । नचैवं जलाभाववान् ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, जलवद्ध्रदविषयिताया विशिष्टान्तरविषयितापदेन धर्तुं शक्यत्वादितिवाच्यम् , विशिष्टान्तरविषयिताप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकं यद् यत् स्वं तदघटितत्वस्यैव प्रतियोगिकोटौ स्वत्वमन्तर्भाव्य निवेशनीयत्वात्, तत्रच तादृशोभयाभावप्रयोजकाभावाधिकरणतायां तादृशासाधारण्यनिश्चयाव्यवहितोत्तरज्ञानवृत्तितत्तदधिकरणताभेदस्य विवक्षणीयतया असाधारण्येऽव्याप्तेरसम्भवात् । एवं गगनाभाववदभाववत्कालीनो घटो गगनवानित्यत्र वा-

* कलाविलासः *

धेऽव्याप्तिवारणाय तादृशोभयाभावप्रयोजकाभावाधिकरणतायां तादृशबाधनिश्चयाव्यवहितोत्तरज्ञानवृत्तितत्तदधिकरणताभेदोऽपि निवेश्यः। नच बाधसत्प्रतिपक्षोभयविषयकसमूहालम्बननिश्चयोत्तरज्ञानवृत्त्यधिकरणतायां विशिष्टान्तरविषयिताप्रयोज्यत्व-स्वविषयिताप्रयोज्यत्वोभयसत्त्वेन बाधस्यापि स्वपदार्थतया तदघटितत्वविरहात् तत्राऽव्याप्तिरिति वाच्यम्, स्वविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणतास्वव्यापकत्वविशिष्टान्तरविषयिताप्रयोज्यताकं यद् यत् स्वं तदघटितत्वस्यैव विवक्षणीयत्वात्, बाधविषयिताप्रयोज्याधिकरणतात्वव्यापकत्वस्य विशिष्टान्तरविषयिताप्रयोज्यत्वेऽसत्त्वात्, मेयत्वविशिष्टबाधत्वादेरेव स्वपदेनोपादेयतया कस्यापि दोषस्याऽसम्भवादित्यस्मद्गुरुचरणाः।

अत्र कल्पे स्वसजातीयविशिष्टान्तराघटितत्वमित्यत्र साजात्यं स्ववृत्ति-पक्षे साध्यावगाहित्वाभावाधिकरणता– हेतुधर्मिकव्याप्त्यवगाहित्वाभावाधिकरणतेत्यान्यतराधिकरणतावत्त्वरूपम्, वृत्तित्वं अधिकरणतावत्त्वञ्च स्वप्रयोजकविषयितानिरूपकतावच्छेदकत्वसम्बन्धेनेति ध्येयम्।

केचित्तु निरुक्तकल्पे विशिष्टद्वयाऽघटितत्वनिवेशो नास्ति, ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतास्थले विशिष्टद्वयविषयितायां प्रयोजकताद्वयमतो निरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां जलवद्ध्रदरूपविशिष्टान्तरविषयिताप्रयोज्यत्वान्न वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः। नचैवमसाधारण्येऽव्याप्तिः, हेतुमत्पक्षविषयिताया अपि तादृशविशिष्टान्तरविषयितात्वादिति वाच्यम्, विशिष्टान्तराऽघटितत्वपदेन तादृशव्यापकरूपानवच्छिन्नस्वविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यतावद्यथोक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वस्य निवेशनीयत्वात् अत एव ह्रदत्वावच्छेदेन वह्निसाध्यकस्थले ह्रदत्वावच्छेदेन वह्न्यभावस्य बाधत्वानुपपत्तिः, तादृशोभयाभावप्रयोजकाभावाधिकरणतायां ह्रदत्वसामानाधिकरण्येन वह्न्यभावविशिष्टह्रदरूपविशिष्टान्तरविषयिताप्रयोज्यत्वस्य सत्त्वादित्यपि परास्तम्, ह्रदत्वावच्छेदेन बाधविषयितानिष्ठप्रयोजकतायां निरुक्तविशिष्टान्तरविषयितात्वव्यापकरूपानवच्छिन्नत्वविरहादित्याहुस्तच्चिन्त्यम्।

वस्तुतो ह्रदत्वावच्छेदेन वह्निसाध्यकस्थले ह्रदत्वावच्छेदेन वह्न्यभावस्याऽलक्ष्यत्वमेव। तत्र ह्रदत्वसामानाधिकरण्येन वह्न्यभावस्यैव बाधत्वमभ्युपगन्तव्यम्, तत एव बाधेन दुष्ट इतिव्यवहारस्याऽप्युपपत्तेः। तथाच क्व विशिष्टान्तरघटितत्वशंकाऽपि ?

* गादाधरी *

विषयिताप्रयोज्यायां विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्याद्यवगाहित्वाभावाधिकरणतायां प्रयोजकतया तादृशबाधादेर्दुःसंग्रह इति वाच्यम्, यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यतानिवेशेन तत्संग्रहसम्भवात्, व्यभिचारादिविषयिताया बाधविषयतान्तःपातिविषयितामात्रवृत्तिरूपेणैव उपदर्शितसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकतया तेनैव

* चन्द्रकला *

व्यभिचारिवह्निमत्त्वरूपबाधाद्यर्थकम्। समाधत्ते यत्किञ्चिदिति। तथा च स्वावच्छिन्नविषयिताप्रयोज्या या स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदक-निरुक्तलक्षणाश्रयीभूतो यत्किञ्चिद्विशिष्टान्तरतावच्छेदकधर्मः तदवच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नाऽप्रयोज्या तादृशोभयाभावप्रयोजिकाभावाधिकरणता सा यस्य स्वस्य एवम्भूतं यत् स्वं तादृशस्ववत्त्वमेव लक्षणार्थो वक्तव्यः।

तथा च न व्यभिचारघटितबाधेऽव्याप्तिः धूमाभाववद्धूमव्यभिचारिवह्निमत्त्वरूपतादृशबाधत्वावच्छिन्नविषयिताप्रयोज्यायास्तादृशोभयाभावप्रयोजकपक्षविशेष्यकसाध्यप्रकारकत्वाभावाधिकरणताया बाधविषयितान्तःपातिव्यभिचारविषयिताप्रयोज्यत्वेऽपि तादृशबाधत्वरूपस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकयत्किञ्चिद्व्यभिचारत्वरूपविशिष्टान्तरतावच्छेदकधर्मावच्छिन्नविषयितात्वव्यापकं यत् निरुक्तबाधविषयितानन्तःपातिव्यभिचारविषयितासाधारणं सामान्यतो व्यभिचारविषयि-

* कलाविलासः *

एतेन केषाञ्चिन्मैथिलानां ह्रदत्वावच्छेदेन वह्निसाध्यकस्थले तदवच्छेदेन वह्न्यभाववद्ह्रदस्य दोषत्वसम्पादनाय विशिष्टान्तरतावच्छेदकघटकीभूतायां प्रतिबन्धकतायां स्वावच्छिन्नविषयिताव्यापकत्व–स्वावच्छिन्नविषयिताव्यापिका या सामानाधिकरण्यमात्रेणानुमितिप्रतिबन्धकता तदन्यत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपविशेषणदानं प्रतिबन्धकताघटितलक्षणेऽप्यनादेयम्, तस्यालक्ष्यतया तत्संग्राहकविशेषणदानस्याऽनौचित्यादिति ध्येयम्।

यत्किञ्चिद्विशिष्टान्तरेति। ननु व्यभिचारविषयितानिष्ठप्रयोजकतावच्छेदकीभूतनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकतादृशविषयितात्वस्य जातिमान् धूमव्यभिचारीत्यादिज्ञानीयविषयितासाधारण्यभिचारादिरूपविशिष्टान्तरविषयितात्वाऽव्यापकतया मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः। अतः तद्वारणाय यत्किञ्चिद्विशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयविषयितात्वव्यापकत्वमेव विवक्ष-

❀ गादाधरी ❀

रूपेण तादृशसाध्यावगाहितविरहवत्त्वाप्रयोजकत्वात्तादृशस्य च रूपस्य बाधादिविषयतानन्तःपातिव्यभिचारादिविषयतासाधारण्यभिचारादिरूपविशिष्टविषयतात्वाव्यापकत्वात्तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्य उक्तबाधादिविषयिताप्रयुक्तसाध्यावगाहित्वाभाववत्तायामक्षतत्वात् ।

मेयत्वविशिष्टव्यभिचारादिविषयिताया येन रूपेण व्याप्त्यादिग्रहप्रतिबन्धकतावच्छेदकता तद्रूपेण निरुक्तविषयतात्वव्यापकेन मेयत्वविशिष्टव्य-

❀ चन्द्रकला ❀

तात्वं तदवच्छिन्नप्रयोज्यत्वविरहादेव स्वपदेन तादृशबाधत्वस्योपादानसम्भवादित्याह बाधादीति । बाधघटकव्यभिचारविषयितामात्रवृत्तितद्व्यभिचारविषयितात्वेन रूपेणेत्यर्थः ।

तादृशस्य च = यत्किञ्चिद्व्यभिचारविषयितात्वव्यापकस्य च । अक्षतत्वादिति । उक्तविवक्षया न व्यभिचारघटितबाधे अव्याप्तिशंकाऽपि सम्भवतीति हृदयम् ।

प्रमेयत्वविशिष्टव्यभिचारत्वन्तु नैतादृशं स्वम्, प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरजायमानानुमितिनिष्ठायाः तादृशोभयाभावप्रयोजकप्रकृतसाध्यव्याप्तिघटिततादृशव्याप्तिविशिष्टहेतुप्रकारकत्वाभावाधिकरणताया व्याप्तिग्रहप्रतिबन्धकतावच्छेदकव्यभिचारविषयितावृत्तिप्रमेयत्वविशिष्टव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यतया यत्किञ्चिद्विशिष्टान्तरशुद्धव्यभिचारविषयितात्वव्यापकतादृशव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यत्वस्याप्यावश्यकत्वादित्याह प्रमेयत्वविशिष्टेति । येन रूपेण = व्यभिचारविषयितात्वेन रूपेण ।

❀ कलाविलासः ❀

णीयम् । तथाच तादृशविशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयविषयित्वाऽप्रयोज्यत्वस्य निवेशनेनैव बाधविषयितान्तःपातिव्यभिचारविषयितामादायव्यभिचारघटितबाधेऽव्याप्तिवारणसम्भवे तादृशविशिष्टान्तरविषयितात्वव्यापकत्वनिवेशो व्यर्थं इति चेन्न, जलवज्जलं जलाभाववत् अवृत्तिजलवज्जलादित्यत्र जलवज्जलवज्जलरूपबाधेऽव्याप्त्यापत्तेः । तत्र जलत्वरूपपक्षतावच्छेदकेन घटावगाहिजलवज्जलवज्जलमितिबाधज्ञानीयविषयिताया जलवज्जलत्वद्रूपविशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयतया तद्वृत्तिबाधविषयितात्वावच्छिन्नप्रयोज्यत्वस्य स्वविषयिताप्रयोज्यत्वस्य च द्वयोःसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सत्त्वादतो व्यापकत्वपर्यन्तानुसरणमिति ध्येयम् ।

❀ गादाधरी ❀

भिचारादिविषयताप्रयोज्यव्याप्त्याद्यवगाहित्वाभाववत्तायां नियमतः प्रयोजकत्वान्नातिप्रसङ्गावकाशः ।

बाधसत्प्रतिपक्षादिविषयकज्ञानस्य नानाविधबाधविषयकज्ञानस्य वाऽनन्तरं जायमानायामनुमितौ या बाधादिविषयताप्रयोज्याऽभावाधिकरणता तस्या विशिष्टान्तरविषयिताप्रयोज्यत्वेऽपि स्वपूर्ववर्त्तिज्ञानीयविरोधिविषयताया एव स्वनिष्ठप्रतिबध्यतावच्छेदकधर्म्माभावाधि-

❀ चन्द्रकला ❀

व्याप्त्येति । साध्यव्याप्तिघटिततादृशव्याप्तिविशिष्टहेतुमत्तावगाहित्वाभावाधिकरणतायामित्यर्थः । नातिप्रसंगेति । व्यभिचारविषयितात्वेन व्याप्तिग्रहप्रतिबन्धकतावच्छेदकतया तेनैव रूपेण यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकेन प्रतिबध्यतावच्छेदकव्याप्त्यवगाहित्वाभावाधिकरणताप्रयोजकत्वं निर्विवादमिति नातिप्रसंग इत्यर्थः ।

सामान्यतो विशिष्टान्तरविषयितात्वव्यापकं रूपमप्रसिद्धं स्यात्, निरुक्तव्यभिचारघटितबाधादिविशिष्टान्तरव्यभिचारसत्प्रतिपक्षादिविषयितात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्यैव व्यभिचारादिविषयितात्वे सत्त्वत्, एकमात्रदोषस्थलेऽपि विपरीतदोषतद्द्वयादिविषयितासाधारणविशिष्टान्तरविषयितात्वव्यापकतायाः कुत्राप्यभावादतो यत्किञ्चित्त्वं विशिष्टान्तरविशेषणमितिध्येयम् ।

ननु ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादावव्याप्तिः वह्न्यभाववान् ह्रदो वह्न्यभावव्याप्यवांश्चेत्याकारकबाधसत्प्रतिपक्षविषयकसमूहालम्बननिश्चयाव्यवहितोत्तरजायमानायां ह्रदो वह्न्यभाववान् ह्रदवृत्तितावांश्च वह्न्यभाव इत्याकारकनानाविधबाधविषयकनिश्चयाव्यवहितोत्तरजायमानायाञ्च घटाद्यनुमितौ वर्त्तमाना या तादृशोभयाभावप्रयोजकह्रदविशेष्यकवह्निप्रकारकत्वाभावाधिकरणता तत्र तादृशविशिष्टान्तरवह्न्यभावव्याप्यवत्सत्प्रतिपक्षविषयिताप्रयोज्यत्वस्यैव सत्त्वेन स्वावच्छिन्नविषयिताप्रयोज्यस्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकनिरुक्तलक्षणाश्रयीभूतयथोक्तसत्प्रतिपक्षतावच्छेदकरूपाद्यवच्छिन्नविषयिताप्रयोज्यताया अक्षततया स्वपदेन तादृशबाधत्वादेरुपादानाऽसम्भवादित्याह बाधेति । तस्याः = पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाः ।

नेयमव्याप्तिरित्याह स्वपूर्ववर्त्तीति । स्वं वह्न्याद्यभावविशिष्टह्रदादिरूपैकविधबाधादिमात्रविषयकनिश्चयाव्यवहितोत्तरजायमानघटाद्यनुमितिः, तत्पूर्ववर्त्तितादृशबाधज्ञानीयविरोधिविषयिताया एवेत्यर्थः । स्वनिष्ठेति । घटाद्यनुमितिनिष्ठायाः

❀ गादाधरी ❀

करणताप्रयोजकत्वात्तत्रैकैकविधबाधादिज्ञानानन्तरं जातज्ञाने या तत्तद्बाधादिविषयिताप्रयोज्या पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता तस्या विशिष्टान्तरविषयित्वाप्रयोज्यतया बाधादौ लक्षणसमन्वयः।

व्यभिचारघटितबाधादिविषयिताप्रयोज्याया दीधितिकारोक्तोभयाभावाधिकरणताया व्याप्त्याद्यवगाहिताविरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नबाधादिविषयतानन्तःपातिव्यभिचारादिविषयिताप्रयोज्यत्वनियमात्तत्संग्रहाय तादृशोभयाभावप्रयोजकाभा-

❀ चन्द्रकला ❀

तादृशबाधनिश्चयप्रतिबध्यतावच्छेदकस्य ह्रदविशेष्यकवह्निप्रकारकत्वस्य अभावाधिकरणतायाः प्रयोजकत्वादित्यर्थः।

एकैकविधेति। तथाच ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपैकविधबाधादौ नाव्याप्तिः, तादृशैकविधबाधमात्रविषयकनिश्चयाव्यवहितोत्तरानुमित्यादौ वर्त्तमानाया ह्रदधर्मिकवह्न्यादिप्रकारकत्वाभावाधिकरणतायाः तादृशबाधविषयितामात्रप्रयोज्यतया विशिष्टान्तरसत्प्रतिपक्षविषयिताप्रयोज्यत्वविरहात्, तादृशैकविधबाधादिमात्रविषयकनिश्चयमादायैव सर्वत्र लक्षणसमन्वयसम्भवादिति भावः। तस्याः = तत्तद्बाधादिविषयिताप्रयोज्यायास्तादृशावगाहित्वाभावाधिकरणतायाः। बाधादाविति। आदिना सत्प्रतिपक्षादिपरिग्रहः। लक्षणसमन्वय इति। उक्तविवक्षयेत्यादिः।

ननु स्वविषयिताप्रयोज्यत्वस्य विशिष्टान्तरविषयित्वाऽप्रयोज्यत्वस्य च तादृशोभयाभावाधिकरणतायां निवेशेनैवोपपत्तौ तादृशोभयाभावप्रयोजकाभावाधिकरणतायां तन्निवेशनमनर्थकमित्यत आह व्यभिचारेति। धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधादिविषयिताप्रयोज्याया इत्यर्थः।

दीधितीति। प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व-प्रकृतसाध्यव्याप्यप्रकृतहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणताया इत्यर्थः। व्याप्त्यवगाहितेति। निरुक्तबाधस्य व्यभिचारघटिततया व्यभिचारनिश्चयप्रतिबध्यतावच्छेदकतायाश्च व्याप्त्यवगाहितायां वर्त्तमानतया तादृशाधिकरणताया व्याप्त्यवगाहित्वाभावप्रयोज्यत्वस्यावश्यकत्वेनेत्यर्थः। बाधविषयितान्तःपातिव्यभिचारविषयितात्वरूपयत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यत्वं सुतरामेव तादृशोभयाभावाधिकरणतायामित्याह यत् किञ्चिदिति। तत्संग्रहाय = व्यभिचारघटितबाधादिसंग्रहाय।

* गादाधरी *

वाधिकरणतापर्य्यन्तनिवेशः । तथासति दर्शितोभयाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वप्रयोज्यत्वनियमेऽपि तादृशोभयाभावप्रयोजकसाध्यादिमत्तावगाहित्वाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयत्वाप्रयोज्यत्वेन तादृशबाधादेः संग्रहः ।

बाधादिविषयिताप्रयोज्यस्य साध्यादिमत्तावगाहिताविरहस्य सत्प्रतिपक्षादिरूपविशिष्टान्तरविषयताप्रयोज्यत्वनियमादसम्भवः स्यादित्युभयाभावप्रयोजकाभावे विशिष्टान्तरविषयत्वाप्रयोज्यत्वमनिवेश्य तादृशाभावाधिकरणतायां तन्निवेशः । तथा सति अधिकरणताया अधिकरणभेदेन

* चन्द्रकला *

तन्निवेशे तु न तादृशबाधादेरसंग्रह इत्याह तथासतीति । उभयाभावप्रयोजकाभावाधिकरणतायां तादृशप्रयोज्यत्वाऽप्रयोज्यत्वयोर्निवेशे सतीत्यर्थः । दर्शितोभयेति । पक्षे साध्यवैशिष्ट्यावगाहित्व-साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणताया इत्यर्थः । तादृशेति । निरुक्तोभयाभावप्रयोजकपक्षधर्मिकसाध्यप्रकारकत्वाभावाधिकरणताया इत्यर्थः । उक्तरूपेति । यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकव्यभिचारविषयितात्वावच्छिन्नाऽप्रयोज्यत्वेनेत्यर्थः।

तादृशबाधादेः संग्रहः = व्यभिचारघटितबाधादेः संग्रहः । निरुक्तोभयाभावस्य पक्षधर्मिकसाध्यप्रकारकत्व-साध्यव्याप्यहेतुप्रकारकत्वोभयाभावात्मकतया तदधिकरणतायां विशिष्टान्तरव्यभिचारविषयितात्वेन व्यभिचारविषयिताप्रयोज्यत्वस्य सत्त्वेऽपि धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधनिश्चयाव्यवहितोत्तरजातायां घटाद्यनुमितौ तादृशोभयाभावप्रयोजकपक्षधर्मिकधूमरूपसाध्यप्रकारकत्वाभावाधिकरणतायां यत्किञ्चिद्विशिष्टान्तरव्यभिचारविषयितात्वव्यापकव्यभिचारविषयितात्वावच्छिन्नप्रयोज्यताविरहेण स्वपदेन निरुक्तबाधत्वस्यैवं धर्तुं शक्यतया व्यभिचारघटितबाधादावव्याप्तिवारणार्थमेवोभयाभावाधिकरणतायां तादृशप्रयोज्यत्वाऽप्रयोज्यत्वमनिवेश्य तादृशोभयाभावप्रयोजकाभावाधिकरणतायामेव तन्निवेश इत्याशयः ।,

नच स्वविषयिताप्रयोज्योभयाभावाधिकरणताकत्वेऽसति तादृशविशिष्टान्तरविषयित्वाऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वविवक्षणे न कोऽपि दोष इति वाच्यम्, एकत्र तादृशप्रयोज्यत्वाऽप्रयोज्यत्वविवक्षणे अनुगमे लाघवसम्भवादितिध्येयमधिकमन्यत्रानुसन्धेयम् ।

*** गादाधरी ***

भिन्नतया पूर्ववर्त्तिनिष्ठप्रतिबन्धकतावच्छेदकधर्म्मस्यैव तदुत्तरोत्पन्ननिष्ठप्रतिबध्यतावच्छेदकधर्म्माभावाधिकरणताप्रयोजकत्वेन बाधादिनिश्चयानन्तरोत्पन्नानुमितिनिष्ठसाध्यादिमत्त्वावगाहित्वाभावाधिकरणतायां सत्प्रतिपक्षान्यादृशबाधादिविषयताया अप्रयोजकत्वेन सामञ्जस्यात्।

*** चन्द्रकला ***

इदमत्रावधेयम्। यथोक्तविशिष्टान्तराऽघटितत्वविवक्षणे विरोधिविषयिताप्रयुक्तत्वदलव्यावृत्तिर्न संगच्छते, निर्वह्निःपर्वतो वह्निमानित्यत्र घटादावतिव्याप्तिवारणायैव विरोधिविषयिताप्रयुक्तत्वदलस्य निवेशिततया घटादिविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणत्वाऽप्रसिद्धया स्वपदेन घटादेरुपादातुमशक्यत्वात्। अतः प्रतियोगिकोटौ स्वत्वमन्तर्भाव्य स्वावच्छिन्नविषयिताप्रयोज्यविशिष्टान्तरतावच्छेदकरूपावच्छिन्नविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकं यत् यत् स्वं तत्तदवच्छिन्नविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तनिरुक्तोभयाभावस्तद्रूपवत्त्वं लक्षणार्थो वक्तव्यः, स्वं लक्ष्यतानवच्छेदकत्वेनाभिमतप्रमेयत्वविशिष्टव्यभिचारत्वादिकम्, एवञ्च घटत्वादेस्तादृशयद्रूपपदेनोपादानसम्भवात् तत्रातिव्याप्तिवारणार्थमेव विरोधिविषयिताप्रयुक्तत्वदलमिति।

यथाविवक्षितयथोक्तलक्षणादरे निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्धिनिश्चयाव्यवहितोत्तरोत्पन्नघटाद्यनुमितिनिष्ठाया निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वव्यापकस्य पर्वतविशेष्यकवह्न्यभावप्रकारकत्वस्याऽभावाधिकरणतायाः तादृशाश्रयासिद्धिविषयिताप्रयोज्यत्वेन व्याप्यीभूतस्य तादृशोनुमितिनिष्ठाया निर्वह्निपर्वतविशेष्यकवह्निप्रकारकत्वाभावाधिकरणताया अपि तादृशाश्रयासिद्धिविषयिताप्रयोज्यत्वस्यावश्यकतया वह्निमत्पर्वतरूपाश्रयाऽसिद्धौ लक्षणसमन्वयसम्भवेऽपि निर्वह्निर्वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधे निरुक्तलक्षणस्याऽव्याप्तिर्दुर्वारा स्यात्। तादृशबाधनिश्चयस्य कुत्राऽपि बुद्धावप्रतिबन्धकतया तन्निष्ठविषयिताप्रयोज्यत्वस्योभयाभावे तदधिकरणतायां वा विरहात् निर्वह्निविशेष्यकवह्निप्रकारकत्वस्य चाहार्यं ज्ञानमात्रनिष्ठतया कस्याऽपि प्रतिबध्यतानवच्छेदकत्वेन तदभावाधिकरणताया निरुक्त बाधविषयित्वाऽप्रयोज्यत्वात् प्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकत्वाभ्युपगमादित्याशंकते

### * गादाधरी *

अथैतादृशोभयाभाववत्त्वघटितलक्षणकरणेऽपि केवलनिर्व्वह्नित्वादिपक्षतावच्छेदककवह्न्यादिसाध्यकस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादिरूपदोषेऽव्याप्तिस्तादृशबाधादिरूपदोषज्ञानस्याप्रतिबन्धकतया तदीयविषयतायाः प्रतिबन्धकतानवच्छेदकतया तथाविधोभयाभवाप्रयोजकत्वात्, तस्य दोषत्वानुपगमे तत्र हेतोर्दुष्टत्वव्यवहारानुपपत्तेः, इष्टापत्तौ तु निर्व्वह्निः पर्व्वतो वह्निमानित्यादावपि तत्सम्भवेन एतादृशप्रयासवैकल्यात्।

न च तत्र अभाववान् वह्निमानित्यनाहार्य्यज्ञानस्य प्रसिद्ध्या तत्प्रतिबन्धकीभूताभाववान् निर्व्वह्निरित्यादिज्ञानविषय एव दोष इति वाच्यम्,

### * चन्द्रकला *

अथैतादृशेति। विशिष्टान्तराऽघटितत्वघटितैतादृशार्थकम्।

केवलेति। वह्न्यभाववन्मात्रपक्षकवह्न्यादिसाध्यकस्थलीये वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधादिदोषेऽव्याप्तिरित्यर्थः। आदिना सत्प्रतिपक्षपरिग्रहः। तदीयेति बाधनिश्चयीयार्थकम्। तस्य = बाधादेः। तादृशहेतौ = वह्न्यभाववत्पक्षकवह्निसाध्यकस्थलीयधूमादिहेतौ।

दुष्टत्वेति। निर्वह्नौ वह्निसाधने धूमो दुष्ट इतिव्यवहारानुपपत्तेरित्यर्थः। ननु तादृशव्यवहारस्तु नेष्यत एवेत्यत आह इष्टापत्तौ चेति। तथाच निर्वह्निः पर्वतो वह्निमान् धूमादित्यादावपि हेतौ दुष्टत्वव्यवहारस्यावश्यमनभ्युपगम्यमानतया अत्र वदन्तीत्यादिना गुरुतरलक्षणानुसरणं निरर्थकमिति भावः।

ननु निर्वह्निर्वह्निमानित्यादौ वह्न्यभावविशिष्टवह्न्यभाववतो न बाधदोषत्वमपितु वह्न्यभावविशिष्टाभाववत एव तथात्वं वक्तव्यम्, तादृशबाधनिश्चयोत्तरजातघटाद्यनुमितिनिष्ठाया निर्वह्निविशेष्यकवह्निप्रकारकत्वव्यापकस्याऽभाववद्विशेष्यकवह्निप्रकारकत्वस्याभावाधिकरणतायाः तादृशबाधनिश्चयप्रतिबध्यतावच्छेदकस्य अभाववद्विशेष्यकवह्निप्रकारकत्वस्याभावाधिकरणतात्मकतया तस्या अभाववन्निष्ठवह्न्यभावविषयिताप्रयोज्यत्वेन तादृशानुमितिनिष्ठाया व्याप्यीभूतस्य निर्वह्निविशेष्यकवह्निप्रकारकत्वस्य भावाधिकरणताया अपि वह्न्यभावविशिष्टाभाववद्रूपबाधविषयिताप्रयोज्यत्वस्यावश्यकत्वादिति तटस्थः शंकते नचेति। वाच्यमितिपरेणान्वयः।

तत्र = निर्वह्निर्वह्निमानित्यादिस्थले। विषय एवेति। वह्न्यभावविशिष्टाभाववत एवेत्यर्थः।

❀ गादाधरी ❀

अभाववत्त्वसामानाधिकरण्येन निर्वह्नित्वग्रहस्य तादृशवह्निमत्त्वग्रहाविरोधित्वात्, अभाववत्त्वावच्छेदेन वह्न्यादिमत्ताग्रहविरोधित्वेऽपि तादृशवह्न्यादिमत्तावगाहित्वस्य वह्न्यभावादिमत्त्वरूपपक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वाव्यापकतया तदवच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदक-

❀ चन्द्रकला ❀

अभाववत्त्वसामानाधिकरण्येन वह्न्यभावविशिष्टाभाववत एव दोषत्वं स्वीकरणीयम् अभाववत्त्वस्य पर्वतादावपि सत्त्वेन तत्र वह्न्यभावस्य विरहात् अभाववत्त्वावच्छेदेन वह्न्यभाववैशिष्ट्याऽप्रसिद्ध्या तदवच्छेदेन वह्न्यभावस्य दोषत्वाऽसम्भवादेवञ्चाऽभाववत्त्वसामानाधिकरण्यावगाहिवह्न्यभावनिश्चयप्रतिबध्यतावच्छेदकमभाववत्त्वावच्छेदेन वह्न्यभावप्रकारकत्वमेव, तदभावं प्रत्येव तादृशबाधनिश्चयविषयितायाः प्रयोजकतया निर्वह्निविशेष्यकवह्निप्रकारकत्वाभावाधिकरणतायास्तादृशबाधनिश्चयविषयित्वाऽप्रयोज्यत्वात् अभाववत्त्वावच्छेदेन वह्निप्रकारकत्वस्य निर्वह्नौ वह्न्यवगाहित्वाऽव्यापकत्वात् ।

अभाववत्त्वसामानाधिकरण्येन वह्न्यवगाहित्वस्य निर्वह्निधर्मिकवह्निप्रकारकत्वव्यापकत्वेऽपि तस्याऽभाववत्त्वसामानाधिकरण्येन वह्न्यभावरूपभवदभिमतबाधनिश्चयप्रतिबध्यतानवच्छेदकतया तदभावाधिकरणताया निरुक्तबाधनिश्चयविषयिताप्रयोज्यत्वाऽसम्भवादित्यकामेनाऽपि वह्न्यभावविशिष्टवह्न्यभाववत एव दोषत्वस्यावश्यकतया भवति तत्राऽव्याप्तिरित्येवं समाधत्ते अभाववत्त्वेति । शुद्धस्वरूपेणाभाववति वह्न्यभावप्रकारकनिश्चयस्येत्यर्थः ।

तादृशेति । अभाववत्त्वसामानाधिकरण्येन अभाववति शुद्धसंयोगेन वह्निप्रकारकत्वस्य निर्वह्निविशेष्यकवह्निप्रकारकत्वव्यापकत्वेऽपि तदभावाधिकरणताया अभाववत्त्वसामानाधिकरण्येन वह्न्यभावप्रकारकनिश्चयीयविषयिताप्रयोज्यत्वविरहान्नाभाववत्त्वसामानाधिकरण्येन वह्न्यभावादेर्दोषत्वमपि वक्तुं शक्यमितिभावः ।

अभाववत्त्वावच्छेदेनेति । अभाववत्त्वव्यापकवह्निप्रतियोगिकसंयोगेनाभाववान् वह्निमान् इत्याकारकग्रहप्रतिबन्धकत्वेऽपीत्यर्थः । अभाववत्त्वसामानाधिकरण्येन निर्वह्नित्वग्रहस्येति पूर्वेण सम्बन्धः । तादृशेति अभाववत्त्वावच्छेदेन वह्न्यादिमत्तावगाहित्वस्येत्यर्थः । पक्षतेति । निर्वह्नित्वविशिष्टे वह्न्यवगाहित्वाऽव्यापकतयेत्यर्थः । तदवच्छिन्नेति । अभाववत्त्वावच्छेदेन वह्निप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकाभाववत्त्वसामानाधिकरण्यावगाहिवह्न्यभावनिश्चयीयविषयिताया इत्यर्थः ।

❁ गादाधरी ❁

विषयितायास्तथाविधोभयाभावाप्रयोजकत्वात् तद्विषयस्य दोषत्वानुपपत्तेः, अभाववत्त्वावच्छेदेन निर्वह्नित्वग्रहस्य भ्रमरूपतया तद्विषयविशिष्टस्याप्रसिद्धेः। एवं वह्निमान्निर्वह्निरित्यादिस्थलीयदोषे नितरामव्याप्तिर्वह्निमन्निष्ठवह्निमत्त्वादेरेव तत्र दोषत्वसम्भवात्, तद्विषयकस्य ज्ञानस्य क्वचिदपि प्रतिबन्धकत्वायोगात्। एवं यत्र निर्वह्निः पर्वतो वह्निमानित्यादौ पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वस्य पक्षतावच्छेदकघटकता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्याादिमत्त्वं न दोषः, विशिष्टपक्षग्रहाद्यविरोधित्वेनाश्रयासिद्ध्यादिरूपत्वानुपपत्तेः, उक्तरीत्यैतल्लक्षणानाक्रान्तत्वाच्च।

❁ चन्द्रकला ❁

तथाविधेति। निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावाप्रयोजकत्वादित्यर्थः। व्यापकाभावप्रयोजकस्यैव व्याप्याभावप्रयोजकतया अभाववत्त्वावच्छेदेन वह्न्यवगाहित्वस्य निर्वह्नौ वह्न्यवगाहित्वाव्यापकतया पक्षे साध्यवैशिष्ट्यावगाहित्वघटितोभयाभावप्रयोजकत्वम् अभावत्वसामानाधिकरण्येन वह्न्यभावविषयितायां न सम्भवतीति हृदयम्।

नन्वेवमभाववत्त्वावच्छेदेनैव वह्न्यभावविशिष्टाभाववतो दोषत्वमस्त्वित्यत आह अभाववत्त्वेति। अभावत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपेण अभाववान् वह्न्यभाववानित्याकारकग्रहस्येत्यर्थः। तद्विषयेति भ्रमविषयेत्यर्थकम्। अप्रसिद्धेरिति। तथाच निर्वह्निर्वह्निमानित्यत्र वह्न्यभावविशिष्टवह्न्यभाववत एव दोषतया निरुक्तलक्षणस्य तत्राऽव्याप्तिर्दुर्वारैवेति भावः।

निरुक्तलक्षणे दोषान्तरमप्याह एवमिति। तथाच वह्निमान् वह्न्यभाववानित्यत्र वह्निविशिष्टवह्निमद्रूपबाधेऽप्युक्तलक्षणस्याव्याप्तिः, वह्निमान् वह्निमानित्याकारकबाधनिश्चयस्य कुत्रचिदपि ज्ञानेऽप्रतिबन्धकतया तत्प्रतिबध्यतावच्छेदकधर्मस्याप्रसिद्धत्वात् प्रतिबध्यतावच्छेदकधर्माभावं प्रत्येव प्रतिबन्धकतावच्छेदकविषयितायाः प्रयोजकत्वस्य पूर्वमुक्तत्वादित्याशयः।

दोषान्तरमप्याह एवमिति। यत्र=यादृशस्थले। पर्वतत्वादीति। शुद्धस्वरूपेण वह्न्यभावादिमत्त्वस्येत्यर्थः। तत्र=तादृशस्थले। पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिमत्त्वरूपविशिष्टपक्षग्रहप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेणेत्यर्थः। आश्रयाऽसिद्धिरूपतानुपपत्तेरिति। विशिष्टपक्षग्रहविरोधिन एवाश्रयाऽसिद्धिरूपत्वादिति भावः।

उक्तरीत्या=निर्वह्निर्वह्निमानित्यादौ बाधादावव्याप्तिदानरीत्या। एतल्लक्षणेति। अत्र वदन्तीत्यादिनाऽभिहितलक्षणानाक्रान्तत्वादित्यर्थः।

❀ गादाधरी ❀

पर्व्वतत्वाद्यवच्छेदेन वह्न्यादिमत्त्वस्याप्रसिद्धम्, वह्निशून्यपर्व्वतादेरपि सत्त्वात्। नापि पर्व्वतत्वादिसामानाधिकरण्येन, निर्व्वह्निपर्व्वतत्वाद्यवच्छेदेन वा वह्न्यभावादिमत्त्वरूपबाधादिदोषः। तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वव्यापकविषयताघटितधर्म्मावच्छिन्नाप्रतिबन्धकतया तत्र लक्षणगमनायोगात्। नापि पर्व्वतत्वावच्छेदेन वह्न्यभावादिमत्त्वम्, अप्रसिद्धत्वादिति न कोऽपि दोषः स्यात्।

❀ चन्द्रकला ❀

ननु तादृशस्थले पर्वतत्वावच्छेदेन वह्निमत्त्वस्यैवाश्रयासिद्धित्वं वक्तव्यम्, तस्य च पर्वतत्वसामानाधिकरण्येन वह्न्यभावरूपपक्षतावच्छेदकविशिष्टपक्षग्रहविरोधित्वेनाश्रयासिद्धिरूपतया निरुक्तलक्षणाक्रान्तत्वस्यापि सम्भवादित्यत आह पर्वतत्वाद्येति। पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्निमत्त्वस्येत्यर्थः।

अप्रसिद्धमिति। पर्वतत्वस्य वह्न्यभाववति पर्वतेऽपि वर्त्तमानतया तत्र वह्निमत्त्वज्ञानस्य भ्रमरूपतया तद्विषयविशिष्टस्याऽप्रसिद्धत्वान्न तद्विषयस्यापि दोषत्वं सम्भवतीतिहृदयम्। पर्वतत्वावच्छेदेन वह्न्यादिमत्त्वस्याऽप्रसिद्धौ हेतुमाह वह्निशून्येति। वह्न्यभाववदर्थकम्।

ननु पर्वतत्वसामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकतास्थले आश्रयासिद्धेर्दोषत्वाऽसम्भवेऽपि तादृशपर्वते वह्निसाध्यकस्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिमत्पर्वतादेः वह्न्यभावविशिष्टपर्वतत्वावच्छेदेन वह्न्यभावविशिष्टवह्निशून्यपर्वतादेरेव वा तत्र बाधत्वं स्वीकरणीयमितिदोषसम्भवादेव हेतौ दुष्टत्वव्यवहारोऽपि निर्विवाद एवेत्यत आह नापीति।

निषेधे हेतुमाह तज्ज्ञानस्येति। तादृशबाधादिनिश्चयस्येत्यर्थः। पक्षतेति। वह्न्यभावविशिष्टे पर्वते वह्निवैशिष्ट्यावगाहित्वव्यापकविषयिताघटितं यत् पर्वतत्वसामानाधिकरण्येन वह्न्यवगाहिबुद्धित्वं तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यत्वेनेत्यर्थः।

लक्षणगमनायोगादिति। व्यापकाभावप्रयोजकस्यैव व्याप्याभावप्रयोजकतया निर्वह्निपर्वते वह्निवैशिष्ट्यावगाहित्वव्यापकस्य पर्वतत्वसामानाधिकरण्येन पर्वतधर्मिकवह्निप्रकारकत्वस्य पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिमत्पर्वतादिरूपतादृशबाधादिनिश्चयप्रतिबध्यतानवच्छेदकत्वेन बाधविषयितायास्तादृशव्यापकाभावाऽप्रयोजकत्वेन व्याप्यीभूतस्य पक्षे साध्यवैशिष्ट्यावगाहित्वादेरभावं प्रत्यप्रयोजकत्वात्तादृशस्थले न कस्यापि दोषत्वं सम्भवतीति तात्पर्यम्।

ननूक्तस्थले पर्वतत्वावच्छेदेन वह्न्यभाववत्त्वस्यैव बाधत्वमस्त्वित्यत आह नापीति।

* गादाधरी *

यत्तु प्रयुक्तत्वं व्यापकत्वम्, यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभयाभावव्याप्यत्वञ्च स्वाश्रयतादृशनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन, तादृशसम्बन्धलाभायैव तदुत्तरमनुमितावित्युक्तम्। एवञ्च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभावस्तत्त्वम् इति पर्य्यवसितम्। एवञ्च निर्वह्निर्वह्निमानित्यादिस्थलीयबाधादिस्थलीयबाधादिविषयितायां स्वरूपसम्बन्धरूपोभयाभावप्रयोजक-

* चन्द्रकला *

निषेधे हेतुमाहाऽप्रसिद्धत्वादिति। वह्निविशिष्टपर्वतादेरपि सत्त्वादिति हृदयम्। तत्र = पर्वतत्वसामानाधिकरण्येन वह्न्यभावपक्षतावच्छेदककवह्निसाध्यकस्थले। न कोऽपि दोषः स्यादिति। तथाचोक्तलक्षणाभिधानमप्यनुचितमिति भावः।

निर्वह्निर्वह्निमानित्यादौ बाधादावव्याप्तिवारणाय प्रकारान्तरेण विरोधिविषयिताप्रयुक्तत्वं व्याचक्षाणानां मतं दूषयितुमुपन्यस्यति यत्त्विति। तादृशोभयाभावे यद्रूपावच्छिन्नविषयकनिश्चयनिष्ठविरोधिविषयिताव्यापकत्वं यदि विरोधिविषयिताप्रयुक्तत्वं तदा तादृशविषयितायां तादृशोभयाभावव्याप्यत्वस्यावश्यकत्वादाहोभयेति। तादृशोभयवदवृत्तित्वरूपव्याप्यत्वघटकवृत्तित्वञ्चेत्यर्थः। स्वाश्रयेति। स्वं विरोधिविषयिता।

तथा च हृदो वह्निमानित्यादौ हृदविशेष्यकवह्निप्रकारकत्व-वह्निव्याप्यधूमप्रकारकत्वोभयवति हृदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकज्ञाने वह्न्यभाववद्धृदविषयितात्मकविरोधिविषयितायाः स्वाश्रयवह्न्यभावविशिष्टहृदनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेनावर्त्तमानतया तस्यास्तादृशोभयाभावव्याप्यत्वं निर्विवादमिति भावः।

एवञ्चेति। विरोधिविषयिताप्रयुक्तत्वस्य तादृशविषयिताव्यापकत्वार्थकत्वे चेत्यर्थः। विरोधीति। विरोधिविषयकयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व-प्रकृतसाध्यव्याप्यप्रकृतहेतुवैशिष्ट्यावगाहित्वोभयाभावस्तद्रूपवत्त्वं हेत्वाभासत्वमिति पर्यवसितमित्यर्थः।

निर्वह्निर्वह्निमानित्यादौ वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधे पर्यवसितलक्षणसंगतिमाह एवञ्चेति। निरुक्तस्य लक्षणार्थतायाः पर्यवसितत्वे चेत्यर्थः। निर्वह्निरिति। वह्न्यभाववन्निष्ठवह्न्यभावादिरूपबाधादेर्विषयितायामित्यर्थः। स्वरूपेति। अनुभवसाक्षिकेत्यादिः।

❁ गादाधरी ❁

त्वासम्भवेऽपि उभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारकत्वं निविष्टं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नाभाव-तद्व्याप्यान्यतरप्रकारकत्वस्यैव विरोधिविषयत्वार्थकतया तत्र लक्षणं सुसमन्वेयमेव तादृशप्रयोजकत्वस्यानिवेशात् ।

नचैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव, तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनरूपघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया अक्षतत्वादिति वाच्यम्, विरोधिविषयितानतिरिक्तवृत्तिर्य-

❁ चन्द्रकला ❁

सुसमन्वेयमेवेति । निर्वह्निर्वह्निमानित्यादिस्थलीयवह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधादिविषयिताया अपि निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वघटितोभयाभावप्रतियोगितावच्छेदककोटिप्रविष्टत्वस्य तादृशावगाहित्वनिष्ठतया तादृशवह्न्यभावावच्छिन्ने वह्न्यभावविषयितात्वेन विरोधिविषयितात्मकतया तादृशबाधविषयिताशालिनिश्चयाव्यवहितोत्तरघटाद्यनुमितित्वव्यापकत्वस्य यथोक्तोभयाभावे सत्त्वात् वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधादौ लक्षणं सुसमन्वेयमित्यर्थः । तादृशेति स्वरूपसम्बन्धरूपार्थकम् ।

नन्वेवं निर्वह्निर्वह्निमानित्यादौ घटादावुदासीनेऽतिव्याप्तिः वह्न्यभावविशिष्टवह्न्यभाववद्विषयकघटादिविषयकसमूहालम्बननिश्चयाव्यवहितोत्तरानुमितित्वव्यापकत्वस्य निर्वह्निविशेष्यकवह्निप्रकारकत्वघटितोभयाभावे वर्त्तमानत्वादित्याशंकते नचैवमिति । एवम् = निरुक्तरीत्या विरोधिविषयिताप्रयुक्तत्वविवक्षणे ।

अक्षतत्वादिति । तादृशसमूहालम्बननिश्चयाव्यवहितोत्तरं वह्न्यभाववान् वह्निमानित्याकारकाहार्यानुमितेरप्रसिद्धतया तादृशघटाद्यनुमितौ च यथोक्तोभयाभाववत्त्वसत्त्वे बाधकाभावादित्याशयः ।

उत्तरयति विरोधिविषयितेति । स्वव्यापकयथाविवक्षितविरोधिविषयिताकयद्रूपावच्छिन्नविषयिताशालिनिश्चयस्येत्यर्थः । स्वं लक्ष्यतावच्छेदकत्वेनाभिमतयद्रूपावच्छिन्नविषयित्वम् । विरोधिविषयित्वाभाववदवृत्ति यद्रूपावच्छिन्नविषयित्वमिति तु नार्थः, विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमादसम्भवापत्तिरित्यस्य पूर्वं स्वयमुक्तत्वादितिध्येयम् ।

एवञ्च निर्वह्निर्वह्निमानित्यत्र न घटादावतिव्याप्तिः घटत्वावच्छिन्नविषयिताया वह्न्यभावविशिष्टवह्न्यभाववदविषयकसमूहालम्बनात्मकेऽपि घटज्ञाने वर्त्तमान-

❀ गादाधरी ❀

द्विषयिता तच्छालिनिश्चयस्य निश्चयान्तेन विवक्षणाद् घटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वविरहात् ।

नचैवं विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविषयिता तत्त्वमित्येतावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यम्,

❀ चन्द्रकला ❀

तया तत्र तादृशवह्न्यभावादिविषयितात्मकविरोधिविषयिताविरहेण घटविषयिताव्यापकत्वस्य विरोधिविषयितायामसत्त्वात् स्वपदेन घटविषयिताया उपादानाऽसम्भवादित्याह घटादिविषयिताया इति । तत्र = निर्वह्निर्वह्निमानित्यत्र ।

ननु यद्रूपावच्छिन्नविषयिताव्यापकं तादृशविरोधिविषयित्वं तद्रूपवत्त्वं हेत्वाभासत्वमित्युक्तावेव घटादावतिव्याप्तिवारणसम्भवे तादृशयद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकतादृशोभयाभावपर्यन्तनिवेशनं निरर्थकमित्याशंकते नचैवमिति । एवम् = विरोधिविषयितानतिरिक्तवृत्तित्वस्य यद्रूपावच्छिन्नविषयितायां विवक्षणे ।

शेषेति तादृशविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभावपर्यन्तस्य वैयर्थ्यमित्यर्थः । यद्यपि व्यापकताघटकाभावभेदेन वैयर्थ्यं न सम्भवतीत्युच्यते तथापि अनुचितगौरवग्रस्तं लक्षणं न युक्तमित्याशयेन वैयर्थ्याभिधानमिति ध्येयम् ।

यद्रूपावच्छिन्नविषयिताव्यापकविरोधिविषयिताकत्वार्थकविरोधिविषयितानतिरिक्तवृत्तित्वविशिष्टा यद्रूपावच्छिन्नविषयिता भवति तद्रूपवत्त्वमेतावन्मात्रस्य लक्षणार्थत्वे पर्वतत्वसामानाधिकरण्येन वह्निसाध्यकधूमरूपसद्धेतौ पर्वतत्वसामानाधिकरण्येन पर्वतनिष्ठवह्न्यभावादेर्दोषत्वापत्तिः स्यात् ।

निरुक्तवह्न्यभावविषयितायास्तादृशोभयाभावप्रतियोगितावच्छेदककोटिप्रविष्टावगाहिताकस्य पर्वतत्वावच्छिन्ने वह्न्यादेरभावविषयितात्मकतया विरोधिविषयितापदेन धर्तुं शक्यतया तस्याश्च पर्वतत्वसामानाधिकरण्येन पर्वतादिनिष्ठवह्न्यभावत्वाद्यवच्छिन्नविषयिताव्यापकत्वस्यानपायात् यद्रूपपदेन तादृशवह्न्यभावत्वादेरुपादानसम्भवात् ।

विरोधिविषयितानतिरिक्तवृत्तियद्रूपावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभावपर्यन्तनिवेशे तु न तत्र पर्वतत्वसामानाधिकरण्येन पर्वतनिष्ठवह्न्यभावादावतिव्याप्तिः, विरोधिविषयितानतिरिक्तवृत्तिनिरुक्तवह्न्य-

### ❀ गादाधरी ❀

यत्र पर्व्वतत्वादिसामानाधिकरण्येन वह्न्यादेः साध्यता तत्र पर्व्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वविषयिताया निरुक्तविरोधिविषयिताऽनतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसार्थक्यात्। तदुपादाने तादृशवह्न्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्व्वतत्वादिसामानाधिकरण्येन वह्न्याद्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति, तत्तुच्छम्,

निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ यत्र पर्व्वतत्वादिसामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकता तत्र पर्व्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वादाश्रयासिद्ध्यनात्मकहेत्वाभा-

### ❀ चन्द्रकला ❀

भावत्वावच्छिन्नविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वस्य पर्वतत्वसामानाधिकरण्येन पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितावपि सत्त्वेन तत्र पर्वतधर्मिकवह्निप्रकारकत्वघटितोभयाभावविरहेण तादृशानुमितित्वव्यापकत्वस्य तादृशोभयाभावेऽभावादित्येवं समापत्तेः यत्रेत्यादि। यादृशस्थले इत्यर्थः।

पर्वतत्वादीति संयोगत्वमात्रावच्छिन्नसंयोगसम्बन्धेनेत्यर्थः। तत्रातीति। पर्वतत्वसामानाधिकरण्येन पर्वतनिष्ठवह्न्यभावादावतिव्याप्तिवारकतयेत्यर्थः। शेषसार्थक्यात् = तादृशानुमितित्वव्यापकोभयाभावपर्यन्तस्य सार्थक्यसम्भवात्।

शेषोपादाने तु कथं तत्र नातिव्याप्तिरित्यत आह तदुपादाने इति। शेषोपादाने इत्यर्थः। पर्वतत्वादीति पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिनिश्चयस्य पर्वतत्वादिसामानाधिकरण्येन वह्न्याद्यनुमितिप्रतिबन्धकत्वं न सम्भवतीति हृदयम्।

तथाविधोभयेति पर्वतविशेष्यकवह्निप्रकारकत्वघटितोभयसत्त्वेनेत्यर्थः।

निरुक्तं मतं दूषयति तत्तुच्छमिति। यत्र = यादृशस्थले। पर्वतत्वेति शुद्धस्वरूपेणेत्यर्थः। विशिष्टपक्षेति। पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतग्रहप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेणेत्यर्थः। पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्त्वस्याश्रयासिद्धिभिन्नत्वस्यावश्यकतया हेत्वाभासान्तरत्वस्य चासम्भवान्न तस्य लक्ष्यत्वमपि सम्भवतीत्याह हेत्वाभासेति। पञ्चहेत्वाभासातिरिक्ते हेत्वाभासत्वापत्तिभयेनेत्यर्थः। तेन हेत्वाभासान्तरत्वस्याप्रसिद्धावपि न क्षतिरिति ध्येयम्।

॥ गादाधरी ॥

सान्तरताभयेनासम्भवल्लक्ष्यभावस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्ति-विषयिताकतयाऽतिव्याप्तेः । तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं नि-विष्टं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वाव-च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य वि-

॥ चन्द्रकला ॥

यतो न तस्य हेत्वाभासान्तरत्वमत एवासम्भवल्लक्ष्यभावस्येत्याह असम्भवेति। तादृशवह्निमत्पर्वतस्य हेत्वाभासत्वस्येष्टत्वसम्भव एव तस्य लक्ष्यत्वमविवादमिति भावः ।

निरुक्तेति । उभयाभावप्रतियोगितावच्छेदककोटावित्यादिनाऽभिहितविरोधि-विषयितानतिरिक्तवृत्तिविषयिताकतयेत्यर्थः । पर्वतत्वसामानाधिकरण्येन वह्निमत्त्व-स्येति पूर्वेण सम्बन्धः ।

अतिव्याप्तेरिति । पर्वतत्वसामानाधिकरण्येन वह्निमत्त्वावच्छिन्नविषयक-निश्चयोत्तरं निर्वह्निः पर्वतो वह्निमानित्याकारकाहार्यानुमितेरप्रसिद्धतया तादृशघटा-द्यनुमितौ च यथोक्तोभयाभावस्याक्षतत्वात् भवति पर्वतत्वसामानाधिकरण्येन वह्न्य-भावादेः पक्षतावच्छेदकस्थले पर्वतत्वसामानाधिकरण्येन वह्निमत्पर्वतादावतिव्याप्तिरतो नैतन्मतं युक्तमित्याशयः ।

अन्यादृशविरोधिविषयिताविवक्षणे न निरुक्तातिव्याप्तिरित्याह तादृशेति । तथा च प्रकृतपक्षविशेष्यकतत्तद्विशेष्यतानिरूपितप्रकारतावच्छेदकसंसर्गावच्छिन्न-प्रकृतसाध्यादिप्रकारकप्रकृतसाध्यव्याप्यहेतुप्रकारकानुमितित्वावच्छिन्नप्रतिबध्यतानि-रूपितप्रतिबन्धकतावच्छेदकविषयितैव विरोधिविषयिता, एवञ्च पर्वतत्वसामाना-धिकरण्येन वह्न्यभावस्य पक्षतावच्छेदकत्वेऽपि न पर्वतत्वसामानाधिकरण्येन वह्निमत्त्वस्य दोषत्वम्, पर्वतत्वसामानाधिकरण्यावगाहिवह्न्यभावप्रकारकानुमिति-प्रतिबन्धकतावच्छेदकतायाः पर्वतत्वसामानाधिकरण्येन वह्निमत्त्वावच्छिन्नविषयिताया-मभावादित्युक्तावपि न निस्तारः ।

पर्वतत्वसामानाधिकरण्येन वह्निसाध्यकधूमादिसद्धेतुस्थले पर्वतत्वसामाना-धिकरण्येन वह्न्यभावादेर्दोषतावारणायैव शेषसार्थक्यस्य पूर्वमभिहिततया निरुक्तरीत्या विरोधिविषयितानिर्वचने तत्सार्थक्यानुपपत्तेः पर्वतत्वसामानाधिकर-ण्येन वह्न्यभावत्वावच्छिन्नविषयितायाः पर्वतत्वसामानाधिकरण्यावगाहिवह्न्य-

* गादाधरी *

षयितायां निवेशे तु शेषवैयर्थ्यम्, उक्तरीत्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिश्च ।

यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः । तथाच यन्निरूपिततादृशविषयि-

* चन्द्रकला *

नुमितिप्रतिबन्धकतानवच्छेदकत्वादिति यद्रूपावच्छिन्नविषयिताव्यापकं निरुक्तविरोधिविषयित्वं तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वे तादृशविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभावात्मकशेषवैयर्थ्यस्य ध्रौव्यादित्त तु शेषवैयर्थ्यादित्यन्तसमस्तग्रन्थतात्पर्यम् ।

नन्वेवं पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयत्ववत्पर्वतादावतिव्याप्तिः, पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितासामान्यस्यैव पूर्वोक्तयुक्त्या पर्वतादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतावच्छेदकतया पाषाणमयत्ववत्पर्वतादेर्विरोधिविषयितानतिरिक्तविषयिताकत्वादतः शेषोपादानमावश्यकम्, तथाच नातिव्याप्तिः, पाषाणमयत्ववत्पर्वतनिश्चयोत्तरानुमितित्वस्य, पर्वतो वह्निमानित्याद्यनुमितावपि सत्त्वेन तत्र तादृशोभयाभावविरहादित्यतो दोषान्तरमाह उक्तरीत्येति ।

अव्याप्तिरिति । तथाचोक्तरीत्या विरोधिविषयितानिर्वचने निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निष्ठवह्न्यभावरूपबाधेऽव्याप्तिः, निरुक्तबाधविषयितायाः कस्या अप्यनुमित्यादेः प्रतिबन्धकतानवच्छेदकतया तस्या विरोधिविषयितापदेनोपादातुमशक्यत्वादिति भावः ।

मतान्तरमपि दूषयितुमुपन्यस्यति यत्त्विति । विरोधिविषयितापदार्थं निर्वक्ति पक्षतेति । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यप्रकारताकप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकनिश्चयनिरूपितवृत्तित्वाभाववती या विषयिता सैवेत्यर्थः ।

समुदितलक्षणार्थमाह तथाचेति । निरुक्तरीत्या विरोधिविषयिताविवक्षणे चेत्यर्थः । यन्निरूपितेति । अत्र यत्पदं यद्रूपपरम्, अग्रेऽपि तत्त्वमित्यस्य तद्रूपवत्त्वमर्थः । तेन यत्पदस्य अखण्डव्यक्तिपरत्वेऽपि न दोषैकदेशे केवलह्रदादावतिव्याप्तिरिति ध्येयम् ।

एवञ्च यद्रूपावच्छिन्ननिरूपितनिरुक्तपक्षे साध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकत्व-प्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकत्वोभयाभावः तद्रूपवत्त्वं हेत्वा-

* गादाधरी *

षयिताशालिनिश्चयोत्तरानुमितित्वव्यापक उभयाभावस्तत्त्वमिति समुदितार्थः। निश्चयत्वं च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वम्। कोटिद्वये विशेषणविशे-

* चन्द्रकला *

भासत्वमिति समुदितलक्षणार्थः।

भवति हि ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपबाधादौ लक्षणसमन्वयः, बाधादिरूपतदभावनिश्चयस्य कार्यकालवृत्तितयाऽपि तत्प्रकारकबुद्धिप्रतिबन्धकतया ह्रदो वह्न्यभाववान् ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकसमूहालम्बनज्ञानानुत्पत्त्या वह्न्यभावविशिष्टह्रदत्वावच्छिन्ननिरूपितविषयिताया ह्रदधर्मिकवह्न्यादिप्रकारकनिश्चयाऽवृत्तित्वेन तस्या विरोधिविषयितात्मकतया तच्छालिनिश्चयाव्यवहितोत्तरघटाद्यनुमितित्वव्यापकत्वस्य ह्रदादिधर्मिकवह्न्यादिप्रकारकत्वघटितोभयाभावे सत्त्वात्।

निश्चयत्वस्याहार्यज्ञानसाधारण्ये निर्वह्निः पर्वतो वह्निमानित्यादौ दोषे लक्षणसमन्वयो न सम्भवतीत्यत आह निश्चयत्वञ्चेति। तादृशेत्यादिः। विशेषणेति। विशेषणत्व-विशेष्यतावच्छेदकत्वशून्यं यत् विरोधिकोटिद्वयं तत्प्रकारकैकधर्मिकं यज्ज्ञानं तदन्यज्ञानत्वं निश्चयत्वमित्यर्थः। एतेन संशयान्यज्ञानत्वमेव तादृशनिश्चयत्वमिति फलितम्।

ननु कोटिद्वये विशेषणत्व-विशेष्यतावच्छेदकत्वशून्यत्वविशेषणमुपेक्ष्य विरोधिकोटिद्वयप्रकारकैकधर्मिकज्ञानान्यज्ञानत्वमात्रमेव निश्चयत्वं लाघवात् वक्तव्यमित्यत आह कोटिद्वये इति।

* कलाविलासः *

तथाच तादृशोभयाभावप्रतियोगितावच्छेदकविशेष्यताविशिष्टप्रकारतावत्त्वं विरोधिविषयित्वम्, वैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व-स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकधर्मवत्त्वोभयसम्बन्धेन। धर्मवत्त्वञ्च स्वावच्छिन्नत्व-स्वावच्छिन्नव्याप्यत्वावच्छिन्नत्वान्यतरसम्बन्धेनेति वदन्ति।

निश्चयत्वञ्चेति। प्रकारताविशिष्टप्रकारताशालिज्ञानभिन्नज्ञानत्वं निश्चयत्वम्, वैशिष्ट्यं स्वनिरूपकज्ञानीयत्व–स्वावच्छेदकधर्मावच्छिन्नविरोधितावच्छेदकधर्मावच्छिन्नत्व–स्वनिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेनेतिभावः।

* गादाधरी *

ष्यतावच्छेदकभावानापन्नत्वनिवेशात् निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यादिवैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाऽप्रसिद्धिः।

यदीयविषयता तादृशनिश्चयाऽवृत्तिस्तत्त्वमित्येतावति कृते ह्रदो वह्निव्याप्यधूमवानित्यादौ ह्रदादिनिष्ठवह्न्यभावादिमत्त्वेऽतिव्याप्तिः, वह्न्यादिव्याप्यवत्तानिश्चयस्यापि वह्न्यादिनिश्चयवत्कार्यसहभावेन वह्न्यभावादिग्रहविरोधित्वाद्वह्न्यभावादिमत्त्वविषयतायास्तादृशनिश्चयावृत्तित्वादिति न शेषवैयर्थ्यमिति।

* चन्द्रकला *

तथाच कोटिद्वये विशेषणत्व-विशेष्यतावच्छेदकत्वशून्यत्वविशेषणपरित्यागे निर्वह्निपर्वतो वह्निमान् धूमादित्यादौ वह्निमत्पर्वतरूपाश्रयाऽसिद्धावव्याप्तिः, निर्वह्निपर्वतो वह्निमानित्याकारकस्य पक्षे साध्यादिवैशिष्ट्यावगाहिज्ञानस्यापि विरोधिवह्न्यभाववह्निप्रकारकज्ञानस्वरूपतया तदन्यत्वस्य तत्र विरहेण पक्षे साध्यादिवैशिष्ट्यावगाहिनिश्चयस्यैवाऽप्रसिद्धेरित्याह निर्वह्निरिति।

न तादृशेति। निर्वह्निपर्वतो वह्निमानितिज्ञानस्य वह्न्यभावनिष्ठविशेष्यतावच्छेदकताकत्वेन वह्निनिष्ठविशेषणताकत्वेन च तादृशविशेष्यतावच्छेदकत्वादिशून्यं यत् अयं वह्निमान्नवेत्याकारकं कोटिद्वयावगाहिसंशयात्मकं ज्ञानं तदन्यत्वस्य निर्वह्निपर्वतो वह्निमानित्यादिज्ञाने सत्त्वेन तस्य तादृशनिश्चयत्वोपपत्तिरिति भावः।

नन्वेवं यद्रूपावच्छिन्ननिरूपिता विषयिता पक्षे साध्य-साध्यव्याप्यहेतुवैशिष्ट्यावगाहितादृशनिश्चयनिरूपितवृत्तित्वाभाववती तद्रूपवत्त्वमित्यस्यैव निर्दोषत्वसम्भवे तादृशनिश्चयावृत्तिविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकतादृशोभयाभावपर्यन्तनिवेशनं निरर्थकमित्याह यदीयेति।

न शेषवैयर्थ्यमिति। तथाच यथोक्तोभयाभावपर्यन्ताऽनिवेशे ह्रदो वह्निव्याप्यधूमवानित्यादौ वह्न्यभावविशिष्टह्रदादावतिव्याप्तिः, तदभावनिश्चयवत् तदभावव्याप्यप्रकारकनिश्चयस्यापि कार्यकालवृत्तितया तत्प्रकारकबुद्धिप्रतिबन्धकतया ह्रदो वह्न्यभाववान् वह्निव्याप्यधूमवानित्याकारकस्य पक्षे साध्यवैशिष्ट्यावगाहिसमूहालम्बनज्ञानस्योत्पादाऽसम्भवात् वह्निव्याप्यप्रकारकज्ञानस्य वह्न्यभावबुद्धिप्रतिबन्धकत्वात् वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयितायाः तादृशनिश्चयावृत्तित्वेन यद्रूपपदेन तादृशह्रदत्वस्यैवोपादानसम्भवात्।

* गादाधरी *

तदपि न, वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववा-नित्येतादृशाहार्य्यज्ञानोपगमेन वह्न्यभावादिमत्त्वविषयिताया वह्निव्या-प्यादिमत्त्वनिश्चयवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपप-त्तेः। वह्निमान्वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्य्यसाध्या-

* चन्द्रकला *

तादृशनिश्चयावृत्तिविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकोभयाभावरूपशेषो-पादाने तु न तत्रातिव्याप्तिः, वह्न्यभाववद्ह्रदत्वावच्छिन्नतादृशविषयिताशालितथा-विधनिश्चयाव्यवहितोत्तरानुमितित्वस्य ह्रदो वह्निव्याप्यधूमवान् तादृशधूमव्याप्य-तद्व्यक्तित्ववांश्चेत्याकारकानुमितावपि वर्त्तमानतया तत्र तादृशोभयाभावविरहात् वह्न्यभावनिश्चयस्य वह्निव्याप्यप्रकारकबुद्धावप्रतिबन्धकत्वादिति तु समुदितग्रन्थ-तात्पर्यम्।

निरुक्तमपि मतं दूषयति तदपि नेति। यद्यपि निर्वह्निर्वह्निमानित्यादौ वह्न्य-भावविशिष्टवह्न्यभाववद्रूपबाधे लक्षणसमन्वयमनुक्त्वा निरुक्तमते दूषणाभिधानमयुक्तं तथापि वक्ष्यमाणरीत्या तत्राप्यव्याप्तेरावश्यकत्वात्तत्र लक्षणसमन्वयो नाभिहितः इति ध्येयम्।

निरुक्तमतस्याऽसमीचीनत्वे हेतुमाह वह्निव्याप्यवानिति। ह्रदो वह्निव्याप्य-धूमवानित्यत्र वह्न्यभाववद्ह्रदेऽतिव्याप्तिवारणायैव शेषसार्थक्यस्याभिधानमसंगतं स्यात्, शेषानुपादानेऽपि तत्रातिव्याप्तेरसम्भवात् वह्निव्याप्यधूमवान् तादृशधूमव्याप्य-वांश्च ह्रदो वह्न्यभाववानित्याकारकस्य पक्षे साध्यादिवैशिष्ट्यावगाह्याहार्यज्ञानस्यापि तादृशकोटिद्वयावगाहिसंशयान्यनिश्चयात्मकतया तत्र वह्न्यभावविशिष्टह्रदादिविषयि-ताया वर्त्तमानतयैव तादृशविरोधिविषयिताभिन्नतया तामादाय तत्रातिव्याप्तिवारण-सम्भवे तादृशविरोधिविषयिताशालिनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकोभयाभाव-रूपशेषोपादानस्य निरर्थकत्वापत्तेरिति तात्पर्यम्।

नन्वेवं शेषोपादानमेव माऽस्तु यद्रूपावच्छिन्ननिरूपितविषयिता पक्षे साध्यादि-वैशिष्ट्यावगाहितादृशनिश्चयनिरूपितवृत्तित्वाभाववती तद्रूपवत्त्वमात्रस्यैव लक्षणार्थ-तायाः सर्वसामञ्जस्यादित्यत आह वह्निमानिति।

तथाचोक्तविवक्षयापि न निस्तारः, ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ह्रदादिरूप-बाधादौ सर्वत्राऽसम्भवापत्तेः, वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याकार-काहार्यज्ञानस्यापि कोटिद्वयावगाहिसंशयान्यतादृशनिश्चयत्वेन धर्त्तुं शक्यतया तत्र

❀ गादाधरी ❀

दिवैशिष्ट्यनिश्चये ह्रदो वह्निमानित्यादिस्थलीयबाधादिविषयितायाः सत्त्वेनासम्भवप्रसङ्गाच्च । वह्न्यादिरूपधर्म्मितावच्छेदकानवच्छिन्नवह्न्यभावादिविशेषितह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपिताया अपि दोषविशेषावच्छिन्नाया विषयितायाः साध्यादिनिश्चयावृत्तितया घटादावुदासीनेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्ति तादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतया अप्रतीकारात् ।

❀ चन्द्रकला ❀

वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयिताया वृत्तेः वह्न्यभावादिविशिष्टह्रदादिविषयितायां यथोक्तविरोधिविषयितात्वविरहादिति भावः ।

यदिच यत्किञ्चिद्वह्निरूपधर्मानवच्छिन्नवह्न्यभावविशिष्टह्रदविषयिताया वह्निमान्वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याहार्यवह्निधर्मितावच्छेदकतादृशनिश्चयावृत्तितया नोक्ताऽसम्भवः सम्भवति तदा निरुक्तरीत्या ह्रदो वह्निमानित्यादौ घटादावुदासीनेऽतिव्याप्तिः, वह्न्यभावादिविशिष्टह्रदादिविषयकघटादिविषयकसमूहालम्बनज्ञानीयत्वविशिष्टयत्किञ्चिद्घटादिविषयिताया वह्न्यभाववद्ह्रदविषयित्वावच्छिन्नाया ह्रदादिधर्मिकवह्न्यादिप्रकारकतादृशनिश्चयावृत्तित्वादित्यतो यद्रूपावच्छिन्ननिरूपितविषयितासामान्यं प्रकृतपक्षे साध्यादिवैशिष्ट्यावगाहियथोक्तनिश्चयावृत्तीत्यस्य विवक्षणान्नोक्तातिव्याप्तिः, घटविषयितायाः पक्षे साध्यवैशिष्ट्यावगाहिघटविषयकसमूहालम्बनतादृशनिश्चयवृत्तित्वेन तस्या विरोधिविषयितानात्मकत्वात् ।

एवञ्चासम्भववारणमशक्यं वह्न्यभावविशिष्टह्रदविषयितासामान्यान्तर्गताया वह्न्यादिरूपधर्मितावच्छेदकाद्यवच्छिन्नवह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्याकारकाहार्यज्ञानीयवह्न्याद्यभावविशिष्टह्रदादिविषयिताया निरुक्ताहार्यज्ञानात्मके पक्षे साध्यादिवैशिष्ट्यावगाहितादृशनिश्चये वर्त्तमानत्वादित्याह वह्न्यादीति । आदिना व्याप्त्यादेः परिग्रहः ।

यादृशेति यद्रूपावच्छिन्ननिरूपितविषयितात्वव्यापकं तादृशनिश्चयावृत्तित्वमित्यर्थः, सामान्यपदस्य व्यापकत्वार्थकत्वात् । अप्रतीकारादिति पूर्वोक्ताऽसम्भवस्य वारयितुमशक्यत्वादित्यर्थः ।

ननु अमान्यवृत्तियद्रूपावच्छिन्ननिरूपितविषयितात्वव्यापकं तादृशनिश्चयाऽवृत्तित्वं तद्रूपावच्छिन्नविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतया न कोऽपि

❀ गादाधरी ❀

भ्रमान्यवृत्तियदीयविषयितासामान्यं तादृशनिश्चयावृत्ति तदीयविषयिता-विवक्षणेन निर्वाहेऽपि विरोधियद्विषयिताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिवक्राभिधानस्य ग्रन्थकारीयरीतिविरुद्धत्वात् ।

एतेन विषयिताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगि-तावच्छेदकं यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहि-त्वघटितं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशे-षितेनानुमितित्वेनानाहार्य्यलौकिकसन्निकर्षाद्यजन्यज्ञानत्वेन वा अवच्छि-न्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वम् ।

❀ चन्द्रकला ❀

दोषः, आहार्यज्ञानस्य भ्रमात्मकतया तदन्यवृत्तिवह्न्यभावविशिष्टह्रदादि-विषयिताया एव तादृशविषयितासामान्यान्तर्गततया तस्याश्च निरुक्तपक्षधर्मिक-साध्यादिप्रकारकाहार्यज्ञानेऽसत्त्वान्नाऽसम्भवः, व्यापकत्वार्थकसामान्यपदोपादानेन न घटादावुदासीनेऽतिव्याप्तिरिति भ्रमान्येत्यादिनाऽशंक्य समाधानमाह विरोधीति । तादृशेत्यादिः । ग्रन्थकाररीतिविरुद्धत्वादिति । तथाच यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तेत्यादिदीधितिकारोक्तलक्षणस्य निरुक्तार्थकत्वाभिधानं न समीचीनमिति भावः ।

एतेनेति । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिभयेनेत्यर्थः । समुदि-तार्थमाह एवञ्चेति । तथाच यद्रूपावच्छिन्ननिरूपितविषयिता निरुक्तोभयाभाव-प्रतियोगितावच्छेदकं यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यघटितं तद्रूपाव-च्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकलौकिकसन्निकर्षदोषविशेषाजन्यबुद्धित्वावच्छि-

❀ कलाविलासः ❀

भ्रमान्यवृत्तीति । ननु निर्वह्निःपर्वतो वह्निमानित्यादौ यत्र पर्वतत्व-सामानाधिकरण्येन वह्न्यभावस्य पक्षतावच्छेदकता तत्र पर्वतत्वसामाना-धिकरण्येन वह्निमत्पर्वतस्य दोषत्वापत्तिः, भ्रमान्यवृत्तिनिरुक्तविशिष्टविष-यितासामान्यस्यैव यथोक्तनिश्चयाऽवृत्तित्वात् , तादृशविशिष्टविषयकनिश्चयोत्तर-घटाद्यनुमितिसामान्ये तादृशोभयाभावस्यापि सत्त्वादिति चेदत्र केचित्—सम्बन्धप्र-कारकसाधारणभ्रमत्वस्यानुगततया वक्तुमशक्यत्वात् तत्तद्भ्रमभिन्नत्वमेव निवेशनी-यम्, तथाच पर्वतत्वसामानाधिकरण्येन वह्न्यभावावगाहितादृशभ्रमभेदस्याऽनिवे-शात् भ्रमान्यवृत्तितादृशविशिष्टविषयितायाःपूर्वोक्तनिश्चयवृत्तित्वं निराबाधमिति तत्रातिव्याप्तेरसम्भवादित्याहुः ।

॥ गादाधरी ॥

एवञ्च यादृशविशिष्टविषयिता निरुक्ततथाविधोभयाभावप्रयोजकताश्रयस्ता-दृशत्वमेव लक्षणम्। विषयितादौ विरोधित्वादिकथनन्तु स्वरूपाख्यान-मात्रमेव इति प्रलपितमप्यनादेयमेव। निर्वह्निर्वह्निमानित्यादिस्थलीय-दोषस्य उक्तयुक्त्या दुःसङ्ग्रहात्।

अत्र केचित् कश्चिदित्यन्ताग्रिमकल्प इवात्रापि कल्पे न दीधितिकृतो निर्भरः, निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासङ्ग्रहेणास्वरसस्याग्रिमकल्पे कश्चिदित्यनेनेवात्रापि कल्पे वदन्तीत्यनेन सूचितत्वात्। निर्भरस्तु केचि-दित्यादिकल्पे एव। अत एव तत्र प्रकर्षबोधनाय प्राहुरित्युक्तमिति।

॥ चन्द्रकला ॥

न्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता सती निरुक्तोभयाभावप्रयोजकता-श्रयस्तद्रूपवत्त्वं हेत्वाभासत्वमिति समुदितलक्षणार्थः पर्यवसितः।

नन्वेवं विषयितायां विरोधित्वाभिधानं निरर्थकमित्यत आह विषयिता-दाविति। स्वरूपाख्यानमिति। निरुक्तप्रतिबन्धकतावच्छेदकताया विषयितायां विवक्षणादित्याशयः।

प्रलपितमप्यनादेयमिति। तथा च पूर्वोक्तस्य लक्षणार्थत्वे अन्यत्र लक्षण-समन्वयसम्भवेऽपि निर्वह्निर्वह्निमानित्यादौ वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधेऽ-व्याप्तिः, तादृशोभयाभावप्रतियोगितावच्छेदकस्य वह्न्यभाववतिव ह्निवैशिष्ट्यावगाहि-त्वघटिततया वह्न्यभाववद्विशेष्यकवह्निप्रकारकानुमितेस्तादृशदोषाद्यजन्यज्ञानस्य चाऽप्रसिद्धेरितिभावः।

यद्विषयकनिश्चयस्येत्यादिकल्पोत्तरकल्पस्यान्ते कश्चिदित्युक्तम्, यद्विषयकेत्यादि-कल्पे च अत्रवदन्तीत्युक्तं दीधितिकृता, सुतरामुभयकल्पे एव निर्वह्निर्वह्निमानित्यत्र वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधेऽव्याप्तिरित्यस्वरसः निरुक्तोभयकल्पे दीधिति-कृतैव सूचित इति केचिद्वदन्ति, तन्मतमुपन्यस्यति अत्रकेचिदिति। अध्याहृताहु-रित्यनेनान्वयि इति बोध्यम्।

सूचितत्वादिति। दीधितिकृतेतिशेषः। ननु तर्हि किं हेत्वाभासस्य लक्षणमेव न सम्भवतीत्यत आह निर्भरस्त्विति। केचिदित्यादीति। यादृशपक्षेत्यादि-कल्प एवेत्यर्थः। तत्र = यादृशपक्षेत्यादिकल्पे। इत्युक्तमितीति। आहुरितिशेषः। निरुक्ताऽस्वरसस्य दीधितिकाराभिप्रेतत्वे मानाभावात् केचिदित्युक्तमिति ध्येय-मिति दिक्।

❀ गादाधरी ❀

परे तु घटाभावादिधर्म्मितावच्छेदककवह्न्यादिमत्त्वज्ञानम्प्रति तद्धर्मि-

❀ चन्द्रकला ❀

घटाभावादिधर्मितावच्छेदककानाहार्यवह्न्यादिप्रकारकबुद्धौ घटाभावादि-धर्मितावच्छेदककवह्न्याद्यभावादिप्रकारकतादृशनिश्चयस्य प्रतिबन्धकत्वाभ्युपगमे घटाभावपटाभावादिरूपधर्मितावच्छेदकभेदेन ह्रदत्वजलत्वादिरूपधर्मितावच्छेदक-भेदेन चानन्तप्रतिबध्यप्रतिबन्धकभावस्य कल्पनीयतया महागौरवं स्यादतो धर्मिता-वच्छेदकमनिवेश्य धर्मितावच्छेदकतासम्बन्धेन अनाहार्यवह्निप्रकारकबुद्धित्वाव-च्छिन्नं प्रति धर्मितावच्छेदकतासम्बन्धेन तादृशवह्न्यभावादिप्रकारकनिश्चयत्वेन लाघवात् प्रतिबन्धकत्वं कल्पनीयम्, तत एव घटाभाववान् वह्न्याद्यभाववान् इति निश्चयकाले घटाभाववान् वह्निमानित्यनाहार्यबुद्धिप्रतिबन्धोपपत्तिः, धर्मितावच्छेद-कतासम्बन्धेन वह्न्यभावनिश्चयस्य घटाभावादौ सत्त्वात्।

नचैवं चैत्रस्य घटाभाववान् वह्न्यभाववानितिनिश्चयदशायां मैत्रस्य धर्मिताव-च्छेदकतासम्बन्धेन घटाभावादौ वह्न्यादिप्रकारकज्ञानानुत्पादवारणाय धर्मितावच्छे-दकतासम्बन्धेन तत्पुरुषीयतादृशवह्न्यादिप्रकारकबुद्धित्व-तत्पुरुषीयतादृशवह्न्यभावा-दिप्रकारकनिश्चयत्वाभ्यामेव प्रतिबध्यप्रतिबन्धकभावस्यावश्यं कल्पनीयतया पुरुष-भेदेन भवन्मते प्रतिबध्यप्रतिबन्धकभावस्यानन्त्यापत्तिरिति वाच्यम्, तत्पुरुषस्य धर्मितावच्छेदकस्थले तत्पुरुषत्वावच्छिन्नविशेष्यकतादृशवह्न्यादिप्रकारकबुद्धित्वादिना प्रतिबध्यप्रतिबन्धकभावस्य भवताऽपि कल्पनीयतया तत्पुरुषनिवेशस्योभयमत-सिद्धत्वादिति ध्येयम्।

एवञ्च न निर्वह्निर्वह्निमानित्यादौ वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधादावव्या-प्तिः, वह्न्यभाववान् वह्न्यभाववानित्याकारकबाधनिश्चयोत्तरमनाहार्यघटाभाववान् वह्निमानितिज्ञानस्यैवोत्पत्त्या तादृशज्ञाने वह्न्यभावादिधर्मितावच्छेदककत्वाभावं प्रति तत्पूर्वोत्पन्नवह्न्यभाववान् वह्न्यभाववानित्याकारकज्ञानीयवह्न्यभावनिष्ठधर्मिता-वच्छेदकत्वाख्यसांसर्गिकविषयताया एव प्रयोजकतायाः स्वीकरणीयतया वह्न्य-भावधर्मितावच्छेदककत्वस्य च निर्वह्निविशेष्यकवह्निप्रकारकत्वव्यापकतया व्यापका-भावप्रयोजकीभूतायास्तादृशधर्मितावच्छेदकत्वाख्यविषयताया व्याप्यीभूतनिर्वह्नि-विशेष्यकवह्निप्रकारकत्वघटितोभयाभावप्रयोजकताया निर्विवादत्वादिति केषाञ्चिन्मतं प्रदर्शयति परेत्विति।

❀ कलाविलासः ❀

परेत्विति। अत्र कल्पे चैत्रीयवह्न्यभावविशिष्टह्रदनिश्चयोत्तरं मैत्रीयवह्निप्रका-

॥ गादाधरी ॥

तावच्छेदकवह्न्यभावादिमत्त्वज्ञानप्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तदकल्पनप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकमनिवेश्यानाहार्यवह्न्यादिविशिष्टबुद्धित्व-वह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः कल्प्यते। एवञ्च तद्देशनिष्ठस्य स्वपूर्ववर्त्तिप्रतिबन्धकज्ञाननिरूपितप्रतिबन्धकतावच्छेदकसम्बन्ध-

॥ चन्द्रकला ॥

धर्मितावच्छेदकेति। घटाभावपटाभावादिरूपधर्मितावच्छेदकभेदेनेत्यर्थः। प्रतिबध्येति। प्रतिबध्यत्वं प्रतिबन्धकत्वञ्चेत्यर्थः। कल्प्यत इति। अनाहार्यवह्निप्रकारकबुद्धित्वेन प्रतिबध्यत्वं तादृशवह्न्यभावप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वं तयोरवच्छेदकसम्बन्धस्तु धर्मितावच्छेदकत्वाख्य इति कल्प्यते इत्यर्थः।

निर्वह्निर्वह्निमानित्यत्र बाधेऽव्याप्तिं वारयति एवञ्चेति। निरुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पने चेत्यर्थः। तद्देशेति। घटाभावादिनिष्ठस्येत्यर्थः। पूर्ववर्त्तीति। पूर्वोत्पन्नज्ञानात्मकघटाभावादिधर्मितावच्छेदकतत्प्रकारकबुद्धिप्रति-

॥ कलाविलासः ॥

रकह्रदविशेष्यकबुद्ध्युत्पादात् तत्पुरुषीयतादृशवह्निप्रकारकबुद्धौ धर्मितावच्छेदकतासम्बन्धेन तत्पुरुषीयवह्न्यभावप्रकारकनिश्चयस्य प्रतिबन्धकत्वं वक्तव्यम्। एवं जातिमान् वह्न्यभाववानितिनिश्चयोत्तरं कालिकेन ह्रदत्वविशिष्टे वह्न्यभावनिश्चयोत्तरमपि समवायादिना ह्रदत्वविशिष्टे वह्निप्रकारकज्ञानोत्पादात् स्वीयप्रकारतानिरूपितधर्मितावच्छेदकताघटकसम्बन्धावच्छिन्ननिरवच्छिन्नधर्मितावच्छेदकतासम्बन्धेन वह्न्यादिप्रकारकबुद्धौ तादृशधर्मितावच्छेदकतासम्बन्धेन वह्न्याद्यभावनिश्चयस्य प्रतिबन्धकत्वं विवक्षणीयम्, जातिमान् वह्न्यभाववानितिनिश्चयस्य जातिमान् वह्निमानितिज्ञानप्रतिबन्धकत्वानुरोधात् धर्मितावच्छेदकतायां निरवच्छिन्नत्वमनिवेश्य पृथगेव प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः। अन्यत् स्वयमूहनीयम्।

अवच्छेदावच्छेदेन वह्न्यादिप्रकारकबुद्धिं प्रत्येतन्मते प्रतिबन्धकत्वकल्पनं न सम्भवतीति तु नाशंकनीयम्? वह्निप्रकारकबुद्धेः स्वीयप्रकारतावच्छेदकसंसर्गतानिरूपितसंयोगत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिकत्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठावच्छेदकतानिरूपितव्यापकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वसमानाधिकरणधर्मितावच्छेदकत्वसम्बन्धेन प्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुं शक्यत्वादिति ध्येयम्।

❀ गादाधरी ❀

स्य उत्तरवर्त्तिज्ञाननिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयोजकतया वह्न्यभावादिनिष्ठवह्न्यभावादिप्रकारकज्ञानीयधर्म्मितावच्छेदकताख्यविषयतायास्तदुत्तरोत्पन्नानाहार्य्यवह्न्यादिप्रकारकज्ञानस्य वह्न्यभावादिधर्म्मितावच्छेदककत्वविरहप्रयोजकत्वाद्वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य वह्न्यभावादिधर्म्मितावच्छेदकताकवह्न्यभावादिप्रकारकनिश्चयविषयिताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोषत्वमव्याहतमेव।

❀ चन्द्रकला ❀

बन्धकनिरूपितप्रतिबन्धकतावच्छेदकधर्मितावच्छेदकत्वादिसम्बन्धस्येत्यर्थः। उत्तरवर्त्तीति। प्रतिबन्धकीभूतज्ञानाव्यवहितोत्तरजायमानाऽप्रतिबध्यज्ञाननिष्ठमित्यर्थः। प्रतिबध्यतेति। धर्मितावच्छेदकत्वादिसम्बन्धेनेत्यर्थः। तद्देशाऽसम्बन्धित्वम् = घटाभावादाववर्त्तमानत्वम्। प्रकृतस्थले लक्षणसमन्वयमाह वह्न्यभावादीति।

नन्वेवं घटाभाववान् वह्न्यभाववानित्याकारकज्ञाने वह्न्यभाववान् वह्न्यभाववानितिनिश्चयोत्तरोत्पन्ने वह्न्यभावधर्मितावच्छेदककत्वाभावप्रयोजकताया धर्मितावच्छेदकत्वाख्यसांसर्गिकविषयतायां सत्त्वेऽपि पक्षे साध्यादिवैशिष्ट्यावगाहित्वघटिततादृशोभयाभावप्रयोजकतायास्तत्र विरहात् कथं तत्र बाधे लक्षणसमन्वय इत्यत आह वह्न्यभावादीति। तथा च वह्न्यभावधर्मितावच्छेदककत्वस्य निर्वह्निविशेष्यकवह्निप्रकारकत्वव्यापकतया व्यापकाभावप्रयोजकीभूतायास्तादृशविषयितायास्तादृशव्याप्याभावस्यापि प्रयोजकताया निर्विवादतया तत्र लक्षणसमन्वयो निराबाध इति भावः।

वह्न्यभावादीति। वह्न्यभावप्रकारकत्व-वह्निव्याप्यधूमप्रकारकत्वोभयाभावस्येत्यर्थः। तादृशेति वह्न्यभाववान् वह्न्यभाववानित्याकारकनिश्चयविषयस्येत्यर्थः।

ननूक्तरीत्या अनाहार्यवह्न्यादिप्रकारकबुद्धौ तादृशवह्न्यभावादिप्रकारकनिश्चयस्य प्रतिबन्धकत्वाभ्युपगमे यादृशस्थले प्रथमं घटाभाववान् वह्न्यभाववानितिनिश्चयस्ततो निर्वह्निनिष्ठविशेष्यताकवह्निप्रकारकज्ञानं जायतामितीच्छा ततो घटाभाववद्विशेष्यकवह्निप्रकारकज्ञानेच्छायामसत्यामपि पूर्वोक्तेच्छाबलात् निर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याकारकसमूहालम्बनज्ञानापत्तिः, घटाभाववान् वह्न्यभाववानित्याकारकनिश्चयस्य धर्मितावच्छेदकतासम्बन्धेन

❀ गादाधरी ❀

नच धर्म्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानस्य प्रतिबन्धकत्वे निर्व्वह्निविशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छाजन्यनिर्व्वह्निर्व्वह्निमान् घटाभाववांश्च वह्निमानित्याद्यांशिकाहार्य्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रान्ततया घटाभाववान् वह्न्यभाववानित्यादिनिश्चयकाले तथाविधेच्छासत्त्वे घटाभावविशिष्टविशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम्, यतः सामान्यतो वह्न्या-

❀ चन्द्रकला ❀

घटाभावादौ सत्त्वेऽपि तस्य तादृशसम्बन्धेन अनाहार्यवह्निप्रकारकबुद्धावेव प्रतिबन्धकतया निरुक्तसमूहालम्बनज्ञानस्याहार्यत्वेन तत्प्रतिबन्धकतायास्तत्र विरहात् तदानीं तादृशसमूहालम्बनज्ञानोत्पत्तौ बाधकान्तरस्य वक्तुमशक्यत्वादित्याशंकते नचेति। वाच्यमितिपरेणान्वयः।

धर्मितेति। धर्मितावच्छेदकतासम्बन्धेनेत्यर्थः। विपरीतज्ञानस्य = तदभावप्रकारकनिश्चयस्य। प्रतिबन्धकत्व इति। अनाहार्यतत्प्रकारबुद्धीत्यादिः। वह्न्यभाववद्विशेष्यकत्वावच्छेदेनाहार्यत्वं घटाभाववद्विशेष्यकत्वावच्छेदेन चानाहार्यत्वमित्यांशिकसमूहालम्बनज्ञानोत्पादापत्तिं प्रदर्शयति निर्वह्नीति।

तथाविधेति। वह्न्यभाववन्निष्ठविशेष्यताकवह्निप्रकारकज्ञानं जायतामित्याकारकेच्छासत्त्वे इत्यर्थः। घटाभाववद्विशेष्यकवह्निप्रकारकज्ञानं जायतामित्याकारकेच्छासत्त्वे तादृशसमूहालम्बनज्ञानोत्पादस्येष्टत्वादाह घटाभावेति। तादृशेति। निर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याकारकज्ञानोत्पादापत्तिरित्यर्थः।

अत्राऽनाहार्यत्वं न आहार्यज्ञानभिन्नत्वम् वह्न्यादिज्ञानेच्छाविशिष्टं यत् तदन्यत्वं वा येनतादृशज्ञानोत्पादापत्तिः स्यात्, अपि तु स्वनिरूपितज्ञाननिष्ठविषयतानिरूपिता या निरूपकत्वसम्बन्धावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकता तन्निरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभावस्य या तादृशेच्छारूपस्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्मितावच्छेदकतासम्बन्धेन वह्न्यादिप्रकारकबुद्धिं प्रति तादृशधर्मितावच्छेदकतासम्बन्धेन वह्न्याद्यभावप्रकारकनिश्चयत्वेनैव प्रतिबन्धकतायाः कल्पनीयतया न तादृशज्ञानोत्पादापत्तिः।

निर्वह्निनिष्ठविशेष्यताकवह्निप्रकारकज्ञानं जायतामितीच्छाया यत् ज्ञाननिष्ठं स्वविषयत्वं तन्निरूपितनिर्वह्निनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धा-

✽ गादाधरी ✽

दिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्य्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, किन्त्वाहार्य्यज्ञानोत्पत्त्यर्थं विशेष्यतानिष्ठं यत्स्वविषयतावच्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यादिज्ञानेच्छाविरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्म्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते,

✽ चन्द्रकला ✽

वच्छिन्नवह्न्यभाववन्निष्ठावच्छेदकतानिरूपितवह्न्यभावनिष्ठावच्छेदकत्वसम्बन्धेन तादृशेच्छाया वह्न्यभावे वर्त्तमानतया तेन सम्बन्धेन तदभावस्य घटाभावादौ सत्त्वेन तादृशेच्छाव्यवहितप्राक्क्षणावच्छिन्नतादृशाभावाधिकरणताविशिष्टधर्मितावच्छेदकतासम्बन्धेन वह्न्यभावनिश्चयस्य घटाभावे सत्त्वान्न तत्र तेन सम्बन्धेन वह्निप्रकारकज्ञानोत्पादःकथमपि सम्भवतीति समाधत्ते यत इत्यादि।

किन्त्वाहार्येति। विरोधिज्ञानदशायामित्यादिः। स्वविषयतेति। स्वमिच्छा तन्निरूपिता या विषयता तदवच्छेदकत्वमित्यर्थः। स्वाऽव्यवहितेति इच्छाव्यवहितार्थकम्।

निर्वह्निनिष्ठविशेष्यताकवह्निज्ञानं जायतामित्याकारकेच्छाव्यवहितोत्तरं स्वसामग्रीसमावेशादाहार्यवह्निज्ञानोत्पादस्यावश्यकतया तदानीं घटाभाववान् वह्न्यभाववानिति ज्ञानोत्पत्तिरेव न सम्भवतीत्यतः स्वाऽव्यवहितप्राक्क्षणेति। स्वपूर्वप्रहरकालीनतादृशवह्न्यभावनिश्चयस्य वह्निज्ञानाऽप्रतिबन्धकतया तदानीं तत्सत्त्वे तादृशवह्न्यादिसमूहालम्बनज्ञानोत्पादस्येष्टत्वात् स्वाऽव्यवहितपर्य्यन्तानुसरणमिति ध्येयम्।

उपेयत इति। प्रतिबन्धकतावच्छेदकसम्बन्धत्वमपि तस्यैवेत्यवधेयम्।

ननु तादृशेच्छाविरहस्य स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणताविशिष्टधर्मितावच्छेदकत्वसम्बन्धस्य प्रतिबध्यतावच्छेदकत्वसम्बन्धत्वोपगमेऽपि यादृशस्थलविशेषे प्रथममेव निर्वह्निनिष्ठविशेष्यताकवह्निज्ञानं जायतामितीच्छा ततः क्षणमात्रं कुतश्चित्प्रतिबन्धकादिवशात् निर्वह्निर्वह्निमानित्याकारकाहार्यज्ञानस्य नोत्पादः अपितु तादृशेच्छाद्वितीयक्षणे घटाभाववान् वह्न्यभाववानिति ज्ञानोत्पत्तिस्तदनन्तरं निर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानितिज्ञानोत्पादापत्तिर्दुर्वारा स्यात्।

निरुक्तेच्छाभावस्य तादृशेच्छाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणताया घटाभावे विरहेण तद्विशिष्टधर्मितावच्छेदकताया अपि तत्र विरहात् तादृशविशिष्टधर्मितावच्छेदकतासम्बन्धेन घटाभावादौ वह्न्यभावनिश्चयस्याऽसत्त्वात् तादृशकिञ्चिदंशे

* गादाधरी *

तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणताविशेषधर्म्मितावच्छेदकतासम्बन्धघटितसामानाधिकरण्यसम्बन्धेनोपगन्तव्यम्, उक्तस्थले च घटाभावादौ तादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिरधिकमन्यत्रानुसन्धेयमिति वदन्ति ।

* चन्द्रकला *

आहार्यात्मकघटाभावावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानोत्पत्तौ बाधकाभावादित्यतः कल्पान्तरमाह तादृशेच्छेति । स्वविषयतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभावस्येत्यर्थः ।

प्रतिबन्धकेति तदभावादिनिश्चयविशेषणत्वमेवेत्यर्थः । एवकारात् तादृशाधिकरणताविशिष्टधर्मितावच्छेदकतायाः प्रतिबध्यतावच्छेदकसंसर्गत्वव्यवच्छेदः ।

तथा च धर्मितावच्छेदकत्वसम्बन्धेन वह्न्यादिप्रकारकबुद्धित्वावच्छिन्नं प्रति स्वनिरूपितविषयतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकेच्छाभावविशिष्टवह्न्याद्यभावनिश्चयस्य धर्मितावच्छेदकतासम्बन्धेन प्रतिबन्धकत्वं कल्पनीयम्, तादृशाभाववैशिष्ट्यं वह्न्याद्यभावनिश्चये च स्वरूपसम्बन्धेन यत् स्वाधिकरणं तन्निरूपितधर्मितावच्छेदकत्वसम्बन्धावच्छिन्नवृत्तित्वसम्बन्धेन तादृशवृत्तित्वस्यैव सामानाधिकरण्यसम्बन्धरूपत्वमित्याशयः ।

विशेषणतेति । स्वरूपधर्मितावच्छेदकत्वघटितस्वाधिकरणवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेनोपगन्तव्यमित्यर्थः ।

नोक्तापत्तिरिति । तथाच निर्वह्निविशेष्यकवह्निज्ञानं जायतामित्याकारकेच्छायाः पूर्वं परतो वा यदि घटाभाववान् वह्न्यभाववानिति निश्चयो जायते तदापि तादृशनिश्चयसत्त्वदशायां निर्वह्निर्वह्निमान् घटाभाववांश्च वह्निमानित्याकारकांशिकाहार्यात्मकसमूहालम्बनस्यापि नापत्तिः, निरुक्तेच्छायाः तादृशसम्बन्धेन वह्न्यभाव एव सत्त्वेन तादृशसम्बन्धेन तदभावस्य स्वरूपसम्बन्धेन घटाभावादौ धर्मितावच्छेदकतासम्बन्धेन वह्न्यभावनिश्चयस्य च तत्र वर्त्तमानतया सामानाधिकरण्यसम्बन्धेन तादृशेच्छाभावविशिष्टवह्न्यभावनिश्चयस्य धर्मितावच्छेदकतासम्बन्धेन घटाभावादौ सत्त्वात् घटाभावादौ वह्निज्ञानप्रतिबन्धकसद्भावस्यावश्यकतया न तत्र कथमपि वह्निज्ञानापत्तिः सम्भवतीति भावः ।

अन्यत्र — प्रतिबन्धकतावादादिग्रन्थे । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगिता-

* चिन्तामणिः *

**ज्ञायमानं सदनुमितिप्रतिबन्धकं यत् तत्त्वं वा ।**

* दीधितिः *

**तादृशपक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वम् ,**

* गादाधरी *

निर्व्वह्निः पर्व्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण लक्षणं वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष इति । पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः । तादृशसाध्येति । साध्यतावच्छेदकविशिष्टसाध्येत्यर्थः । तादृशहेत्विति । हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः, ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना । ज्ञानम्=ज्ञानसामान्यम् , तेन घटादिविषयकस्य यस्य कस्यचित् समूहालम्बनज्ञानस्य तादृशज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिप्रसङ्गः ।

* चन्द्रकला *

नवच्छेदकत्वे वृत्तिताघटकसम्बन्धत्वाभावे च नोक्तरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनमसम्भवीत्याशयेन वदन्तीत्युक्तमितिध्येयम् । अधिकमन्यत्रानुसन्धेयमित्यास्तां विस्तरः ।

**निर्वह्निरिति** । निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषादौ ह्रदो वह्निमान् इत्यादिस्थलीयदोषादौ च वर्त्तमानत्वसम्पादनायेत्यर्थः । लक्षणम्=मूलोक्तद्वितीयलक्षणम् । पक्षे साध्यवैशिष्ट्यावगाहि–साध्यव्याप्यहेतुवैशिष्ट्यावगाहिज्ञानस्य विरोधिविषयकं यद्विषयकज्ञानसामान्यं तत्त्वमित्यत्र सामान्यपदव्यावृत्तिमाह तेनेति । सामान्यपदोपादानेनेत्यर्थः ।

तथा च सामान्यपदानुपादाने ह्रदो वह्निमानित्यादौ घटादावतिव्याप्तिः वह्न्यभाववान् ह्रदो घटश्चेत्याकारकसमूहालम्बनघटादिविषयकयत्किञ्चिज्ज्ञानस्यापि ह्रदे वह्न्यादिवैशिष्ट्यावगाहिज्ञानस्य विरोधिविषयकत्वात् यत्पदेन घटादेरप्युपादानसम्भवादिति भावः ।

**तादृशज्ञानेति** प्रकृतपक्षे प्रकृतसाध्यादिवैशिष्ट्यावगाहिज्ञानेत्यर्थकम् । **नातिप्रसंग इति** घटादावित्यादिः ।

**ननु** सामान्यपदोपादानेऽपि कथं घटादौ नातिव्याप्तिरित्यत आह

❀ गादाधरी ❀

स्वावच्छिन्नविषयकत्वव्यापकताद्दशज्ञानविरोधिविषयिताकधर्म्मवत्त्वमिति तु फलितार्थः। अत्र च विषयितानिष्ठं स्वरूपसम्बन्धात्मकताद्दशज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकतात्मकताद्दशज्ञानविरोधित्वमेव निवेशनीयम्, न तु विषयनिष्ठं निर्वाच्यताद्दशज्ञानविरोधित्वम्, तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात्। अत्र च विषयनिष्ठस्य निर्वाच्यताद्दशज्ञानविरोधित्वस्यैव तदपेक्षया लघुतया

❀ चन्द्रकला ❀

**स्वावच्छिन्नेति**। स्वं दोषतावच्छेदकत्वेनाभिमतो धर्मः। तथाच ताद्दशस्वावच्छिन्नविषयकत्वव्यापकं यत् प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतहेतुवैशिष्ट्यावगाहिज्ञानविरोधिविषयित्वं तद् यस्य एवम्भूतं यत् स्वं ताद्दशस्ववत्त्वं हेत्वाभासत्वमिति मूलोक्तद्वितीयलक्षणस्य फलितार्थःपर्यवसितः।

तथाच न घटेऽतिव्याप्तिः, घटत्वावच्छिन्नविषयकत्वस्य घट इत्याकारकाऽसमूहालम्बनज्ञानेऽपि सत्त्वात् तत्र च ह्रदादौ वह्न्यादिवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहविरोधिविषयिताविरहेण घटत्वावच्छिन्नविषयकत्वव्यापकतायाः ताद्दशज्ञानविरोधिविषयितायामभावात् स्वपदेन घटत्वस्योपादातुमशक्यत्वादिति तु परमार्थः।

**अत्र चेति** निरुक्तलक्षणे चेत्यर्थः। घटकत्वं सप्तम्यर्थः, अस्य च ताद्दशज्ञानविरोधित्वमित्यनेनान्वयः। स्वावच्छिन्नविषयकत्वव्यापकत्वविवक्षणादेव दोषैकदेशेऽतिव्याप्तिवारणसम्भवे विषयितानिष्ठानतिरिक्तवृत्तित्वरूपप्रतिबन्धकतावच्छेकत्वनिवेशस्य प्रयोजनाभावादाह **स्वरूपेति**। **ताद्दशेति** पक्षे साध्यादिवैशिष्ट्यावगाहिज्ञानेत्यर्थकम्। विषयनिष्ठम् = दोषादिविषये वर्त्तमानम्। ताद्दशज्ञानविरोधित्वम् = पक्षे साध्यादिवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकविषयिताकत्वरूपं विरोधित्वम्। तस्यैव = निरुक्तविरोधित्वस्यैव।

**शेषवैयर्थ्यप्रसंगादिति**। पक्षे साध्यवैशिष्ट्यावगाहिसाध्यव्याप्यहेतुवैशिष्ट्यावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकत्वादिरूपं विषयनिष्ठज्ञानविरोधित्वं हेत्वाभासत्वमित्युक्तावेव सर्वसामञ्जस्ये ताद्दशज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकमितिशेषोपादानं निरर्थकं स्यादित्याशयः।

विषयनिष्ठमेव ताद्दशज्ञानविरोधित्वं लाघवात् वक्तव्यमित्याह **अत्र चेति**। निरुक्तलक्षणे चेत्यर्थः। **लघुतयेति**। स्वावच्छिन्नविषयकत्वादिव्यापकतयाः

❁ दीधितिः ❁

ताहशज्ञानविरोधित्वं वा हेतुदोषत्वम् । ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् ।

❁ गादाधरी ❁

तदेवाह ताहशज्ञानविरोधित्वं वेति । ताहशज्ञानविरोधित्वं यदि ताहज्ञानप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मवत्त्वं तदा पूर्वनिरुक्तयथाश्रुतमूलार्थ एव पर्य्यवसानात् निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषाव्याप्तितादवस्थ्यमिति तन्निर्वक्ति ज्ञानविरोधित्वञ्चेति । तद्विषयविषयकेति । तथाच निर्वह्निः पर्वतो वह्निमानित्यादौ ताहशज्ञानविरोधिज्ञानाप्रसिद्ध्यापि

❁ चन्द्रकला ❁

विरोधिविषयितायां निवेशापेक्षया विरोधित्वघटकप्रतिबन्धकतायां तन्निवेशस्यैव लघुत्वात् ।

एवञ्च सति स्वावच्छिन्नविषयकत्वव्यापकीभूतं यत् ताहशज्ञानविषयविषयकग्रहप्रतिबन्धकत्वं तदवच्छेदकविषयितानिरूपकतावच्छेदकत्ववत्त्वं समुदितलक्षणार्थ इति भावः ।

ज्ञानविरोधित्वञ्चेत्यादिदीधितिमवतारयति ताहशज्ञानेति । पक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानविरोधित्वं यदीत्यर्थः । ताहशेति । यद्रूपावच्छिन्नविषयकत्वव्यापकं पक्षे साध्यवैशिष्ट्यावगाहि-साध्यव्याप्यहेतुवैशिष्ट्यावगाहिज्ञानप्रतिबन्धकत्वं तद्रूपवत्त्वमित्यर्थः । पूर्वनिरुक्तेति । पूर्वोक्तमूललक्षणार्थस्यैव पर्यवसितत्वे ।

निर्वह्निरिति । ताहशस्थले पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहिज्ञानस्याहार्यत्वेन ताहशज्ञानप्रतिबन्धकत्वस्यैवाऽप्रसिद्धेः, तत्स्थलीयवह्निमत्पर्वतरूपाश्रयासिद्धिरूपदोषेऽव्याप्तिवारणमशक्यं स्यादित्यर्थः । तन्निर्वक्ति = ताहशज्ञानविरोधित्वं निर्वक्ति, दीधितिकार इति शेषः ।

प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकज्ञानविषयविषयकग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वरूपलक्षणार्थविवक्षणे तु न निर्वह्निःपर्वतो वह्निमान् इत्यत्र वह्निमत्पर्वतरूपाश्रयासिद्धावव्याप्तिः, ताहशपक्षे साध्यादिवैशिष्ट्यावगाहिज्ञानविषयीभूतवह्न्यभाववत्पर्वतविषयकः यः पर्वतो वह्न्यभाववानित्याकारकग्रहस्तत्प्रतिबन्धकतानतिरिक्तवृत्तिवह्निमत्पर्वतविषयितानिरूपकतावच्छेदकताहशपर्वतत्वस्य वह्निमत्पर्वते सत्त्वादित्याह तथाचेति । निरुक्तरीत्या ताहशज्ञानविरोधित्वस्य विवक्षणे चेत्यर्थः ।

❀ दीधितिः ❀

एवंविधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित् ।

❀ गादाधरी ❀

तद्विषयविषयकस्य निर्वह्निः पर्वत इति ज्ञानस्य प्रतिबन्धकं यद्वह्निमान् पर्वत इति ज्ञानं तद्विषयतामादायैव वह्निमत्पर्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणसमन्वयः ।

अथ घटवद्भूतलादिरूपोदासीनपदार्थविषयकसमूहालम्बनात्मकपक्ष-

❀ चन्द्रकला ❀

तद्विषयेति । निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकज्ञानविषयविषयकस्येत्यर्थः । लक्षणसमन्वय इति । तथाचोक्तरीत्या विरोधित्वनिर्वचनेन कोऽपि दोष इति भावः ।

यद्यप्युक्तरीत्या लक्षणार्थस्य निर्वचनेऽपि पर्वतो वह्निमान् ह्रदो वह्निमान् वेत्यादौ सर्वत्र घटाभाववद्भूतलादावुदासीनेऽतिव्याप्तिः ह्रदो वह्निमान् वह्निव्याप्यधूमवान् घटवच्च भूतलमित्याकारकसमूहालम्बनज्ञानविषयविषयको यो घटवद् भूतलमिति-ग्रहस्तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकघटाभाववद्भूतलत्वस्य तादृशभूतले सत्त्वात्

प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकप्रकृतसाध्यव्याप्यहेतुप्रकारकग्रहत्वव्यापक-विषयिताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्मवत्त्वविवक्षणे घटवद्भूतलादिविषयिताया ह्रदादिविशेष्यकवह्न्यादिप्रकारकग्रहत्वस्य घटवद्भूतलाद्यविषयकासमूहालम्बनज्ञाननिष्ठस्याव्यापकतया तस्यास्तादृशग्रहत्वव्यापकविषयितापदेन धर्त्तुमशक्यत्वेन घटाभाववद्भूतलादावतिव्याप्तिवारणसम्भवेऽपि निर्वह्निः पर्वतो वह्निमान् इत्यादौ वह्निमत्पर्वतरूपाश्रयाऽसिद्धावव्याप्तिः, आहार्यज्ञानसामग्रीप्रयोज्याया एव वह्न्यभाववत्पर्वतविषयिताया निर्वह्निपर्वतविशेष्यकवह्निप्रकारकग्रहत्वव्यापकतया तस्याश्चाहार्यज्ञानमात्रनिष्ठत्वेन तदवच्छिन्नप्रतिबध्यत्वाऽप्रसिद्धत्वात्

अनाहार्यज्ञानीयवह्न्यभाववत्पर्वतविषयिताया वह्निमत्पर्वतनिश्चयप्रतिबध्यतावच्छेदकत्वेऽपि तस्यास्तादृशपक्षविशेष्यकसाध्यादिप्रकारकग्रहत्वाव्यापकतया तत्र तत्प्रतिबध्यतावच्छेदकताया अकिञ्चित्करत्वादित्याशंकते अथेति ।

**॥ गादाधरी ॥**

तावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्य- तद्व्याप्यहे - तुप्रकारकज्ञानविषयविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटा - भाववद्भूतलादावतिव्याप्तिः । न च पक्षतावच्छेदकावच्छिन्नविशेष्यकसा- ध्यतावच्छेदकविशिष्टसाध्यतन्निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न- प्रकारकग्रहत्वव्यापकविषयितावघटितधर्म्मावच्छिन्नप्रतिबध्यतानिरूपितप्रति- बन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वनिवेशान्न दोषः, घट- वद्भूतलादिविषयितायास्तादृशग्रहत्वाव्यापकत्वादिति वाच्यम्, यतः प- र्व्वताद्यंशे वह्निमत्ताद्यनवगाहिनो निर्व्वह्निः पर्व्वत इति ज्ञानस्य या वह्निप्र- कारकत्वाद्यनिरूपिता निर्व्वह्नित्वादिप्रकारितानिरूपितपर्व्वतादिविषयिता सैवानाहार्य्यत्वविशिष्टतया वह्निमान् पर्वत इत्यादिज्ञानप्रतिबध्यतावच्छे- दिका, तस्याश्च निर्वह्निः पर्वतो वह्निमानित्याहार्य्यज्ञानसाधारण्ये माना- भावात् आहार्य्यज्ञानसामग्र्यास्तादृशविषयिताप्रयोजकत्वासिद्धेः ।

विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजकानाहार्य्यज्ञानसा - मग्र्याश्चाहार्य्यज्ञानाजनकत्वात्, तादृशग्रहत्वव्यापिका च वह्निमत्त्वा- दिप्रकारितानिरूपिता तादृशपर्वतादिविषयिता, सा च न प्रतिबध्य- तावच्छेदिकेति निर्वह्नित्वादिप्रकारितानिरूपितपर्वतादिविषयितात्वेन नि-

**॥ चन्द्रकला ॥**

घटाभाववद्भूतलेऽतिव्याप्तिवारणाय नचेत्यादिनाऽभिहितायाः शंकायाः समाधानमाह यत इत्यादि । सैव = वह्निप्रकारित्वाद्यनिरूपिता वह्न्यभावप्रकारिता- निरूपितपर्वतत्वावच्छिन्नविषयितैव । तस्याः = वह्निप्रकारित्वाद्यनिरूपितायास्तादृश- पर्वतविषयितायाः । मानाभावे हेतुमाह आहार्येति । विपरीतेति तदभावनिश्चया- भावघटिताया वह्निप्रकारित्वाद्यनिरूपितानाहार्यज्ञानीयवह्न्यभाववत्पर्वतविषयिताप्रयो- जकसामग्र्याः आहार्यज्ञानीयविषयितां प्रत्यप्रयोजकत्वादित्यर्थः ।

सा च = वह्न्यादिप्रकारितानिरूपितवह्न्यभाववत्पर्वतविषयिता च ।

ननु निर्वह्निः पर्वतो वह्निमानित्याकारकग्रहे सामान्यतो वह्न्यभाववत्पर्वतविषयि- तात्वावच्छिन्नाभावस्याऽसत्त्वात् तादृशविषयितात्वेन आनाहार्यज्ञानीयवह्न्यभाव- वत्पर्वतविषयिताऽपि तादृशग्रहत्वव्यापिकेति तादृशविषयित्वावच्छिन्नप्रतिबध्यतामादा- यैव वह्निमत्पर्वतरूपाश्रयाऽसिद्धौ नाऽव्याप्तिरित्याह निर्वह्नित्वेति । वह्न्यभावादी- त्यर्थकम् ।

**❁ गादाधरी ❁**

वह्निः पर्वत इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्वव्यापिकेति चेत् ? तर्हि विषयितात्वादिना घटवद्भूतलादिविषयितानामपि तद्व्यापकतया उदासीनपदार्थवारणमशक्यमिति चेत् ? मैवम्, यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वत्वावच्छिन्नं तादृशग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यक—तद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मवत्त्वस्य विवक्षणीयतया सर्वसामञ्जस्यादिति दिक्।

**❁ चन्द्रकला ❁**

विषयितात्वेति । तथा च वह्न्यभावादिप्रकारितानिरूपितपर्वतत्वाद्यवच्छिन्नविषयितात्वेन निर्वह्निपर्वतादिविशेष्यकवह्निप्रकारकग्रहत्वव्यापकताया अनाहार्यज्ञानीयवह्न्यभाववत्पर्वतविषयितायामप्यभ्युपगमे ह्रदो वह्निमानित्यादौ घटाभाववद्भूतलेऽतिव्याप्तितादवस्थ्यं स्यात्, विषयितात्वेन घटवद्भूतलविषयिताया अपि ह्रदादिविशेष्यकवह्न्यादिप्रकारकग्रहत्वव्यापकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकघटाभाववद्भूतलादिमत्त्वस्य घटाभाववद्भूतलादौ सत्त्वादित्युच्यते तदा अथेत्यादिशंकायाः समाधानमाह मैवमिति । यद्रूपावच्छिन्न इत्यादि । यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकत्वत्वावच्छिन्नं प्रकृतपक्षे प्रकृतसाध्यप्रकारकप्रकृतसाध्यव्याप्यहेतुप्रकारकग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यताकतद्रूपावच्छिन्नप्रकारताकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्मवत्त्वं हेत्वाभासत्वमिति विवक्षणीयतयेत्यर्थः।

सर्वसामञ्जस्यादिति । निरुक्तविवक्षया ह्रदो वह्निमानित्यादौ न घटाभाववद्भूतलादावतिव्याप्तिः ह्रदविशेष्यकवह्न्यादिप्रकारकग्रहत्वस्य घटवद्भूतलाद्यविषयकाऽसमूहालम्बनेऽपि ह्रदो वह्निमानित्याकारकज्ञाने वर्त्तमानतया तत्र भूतलत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकत्वस्य विरहेण तादृशप्रकारकत्वत्वावच्छिन्नस्य पक्षविशेष्यकसाध्यादिग्रहत्वाऽव्यापकत्वात् भूतलत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारताकग्रहत्वावच्छिन्नप्रतिबध्यताया लक्षणाऽघटकत्वात्।

नवा निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतरूपाश्रयाऽसिद्धावव्याप्तिः, निर्वह्निः पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकग्रहे पर्वतविशेष्यकवह्न्यभावप्रकारकत्वत्वावच्छिन्नस्याभावविरहेण तस्य तादृशवह्निग्रहत्वव्यापकत्वस्य

❀ दीधितिः ❀

केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः

❀ गादाधरी ❀

अत्र चास्वरससूचनाय केचिदिति। स च उक्तयुक्त्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहेण। न च धर्म्मितावच्छेदकत्वप्रत्यासत्त्या वह्निप्रकारज्ञानं प्रति वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकतामते निर्वह्निर्वह्निमानित्येतादृशज्ञानसमानविषयकानाहार्य्यवह्निमानित्याकारकज्ञानप्रतिबन्धकतामादाय लक्षणसमन्वयस्तत्रापि सम्भवतीति वाच्यम्, तादृशमताश्रयणे पर्वतो वह्निमानित्यादौ वह्न्यभाववद्ह्रदादेर्दोषताप्रसङ्गात्। यादृशेति सर्वत्र यद्रूपावच्छिन्नार्थकम्।

❀ चन्द्रकला ❀

निर्विवादतया तादृशवह्न्यभावप्रकारकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताकत्वस्य वह्निमत्पर्वतेऽनपायात्।

ह्रदादौ वह्न्यादिसाध्यकस्थले तु ह्रदविशेष्यकवह्न्यादिप्रकारकत्वत्वावच्छिन्नस्यैव तादृशसाध्यग्रहत्वव्यापकतया तदवच्छिन्नप्रतिबध्यतामादायैव वह्न्यभावविशिष्टह्रदादिरूपबाधादौ लक्षणसमन्वय इति तु तत्त्वम्,

अत्र च तादृशप्रकारकग्रहत्वावच्छिन्नत्वं प्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वं तेन काञ्चनमयह्रदो वह्निमान् इत्यादौ वह्न्यभाववद्ह्रदरूपबाधनिश्चयप्रतिबध्यतावच्छेदककोटौ काञ्चनमयत्वावच्छिन्नह्रदविशेष्यकवह्निप्रकारकग्रहत्वस्याऽप्रवेशेऽपि न क्षतिरिति ध्येयमितिदिक्।

निरुक्तमतेऽस्वरसं प्रदर्शयति अत्रचेति। निरुक्तमते चेत्यर्थः। तथा च निरुक्तस्य लक्षणार्थताभ्युपगमेऽपि निर्वह्निर्वह्निमानित्यादौ वह्न्यभावविशिष्टवह्न्यभाववद्रूपबाधेऽव्याप्तिः, निर्वह्निविशेष्यकवह्निप्रकारकग्रहत्वव्यापकं यत् वह्न्यभावावच्छिन्ने वह्निप्रकारकत्वं तदवच्छिन्नप्रतिबध्यत्वाप्रसिद्धेः तस्याहार्यज्ञानमात्रनिष्ठत्वादित्याह स चोक्तेति। अस्वरसश्चोक्तयुक्त्येत्यर्थः।

शंकते नचेति। वाच्यमितिपरेणान्वयः। धर्मितावच्छेदकतासम्बन्धेन वह्निप्रकारकज्ञानं प्रति तेन सम्बन्धेन वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकत्वे न वह्न्यभावविशिष्टवह्न्यभाववत्यव्याप्तिः, निर्वह्निर्वह्निमानित्याकारकज्ञानविषयविषयकग्रहपदेन पर्वतविशेष्यकवह्निप्रकारकग्रहस्याप्युपादानसम्भवात् तत्प्रतिबन्धकतावच्छेदकवह्न्यभावविषयिताकत्वस्य तादृशबाधे सत्त्वादितिभावः।

**॥ दीधितिः ॥**

## सम्भवन्ति तावदन्यान्यत्वम्,

**॥ गादाधरी ॥**

तावदन्यान्यत्वमिति। यत्रच यादृशपक्षसाध्यहेतुकस्थले यादृशदोषज्ञानस्य प्रतिवध्यज्ञानं प्रसिद्ध्यति, यथा निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निविशिष्टपर्वतादिरूपाश्रयासिद्धि-धूमाभावविशिष्टनिर्वह्निपर्वतादिरूपस्वरूपासिद्ध्यादीनां ज्ञानस्य, तत्र तादृशदोषाणां ग्राह्याभाव-तद्व्याप्यरूपतद्घटकभेदेन विशेषणविशेष्यभावभेदेन च भिन्नानामनुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिनैव तावदन्यान्यत्वघटकभेदप्रतियोगिवि-

**॥ चन्द्रकला ॥**

धर्मितावच्छेदकतासम्बन्धेन निरुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पने पर्वतो वह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदादावतिव्याप्तिः, पर्वतविशेष्यकवह्निप्रकारकज्ञानसमानाकारकस्य ह्रदो वह्निमानित्यादिग्रहस्य प्रतिबन्धकतावच्छेदकविषयिताकत्वस्य तत्र सत्त्वादिति समाधत्ते तादृशेति। निरुक्तरीत्या प्रतिबध्य प्रतिबन्धकभावमभ्युपगच्छतां मताश्रयणे इत्यर्थं इति दिक्।

काञ्चनमयपर्वतपक्षकस्थले पर्वतादिपक्षादौ दोषस्याऽप्रसिद्धत्वात् यादृशेत्यादिकं यद्रूपावच्छिन्नार्थकतया व्याचष्टे सर्वत्रेति। तथा च पक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यकहेतुतावच्छेदकावच्छिन्नहेतावित्यर्थकरणान्न कुत्राऽपि दोषाणामप्रसिद्धिरिति भावः।

लाघवमभिप्रेत्याह अत्र चेति। निरुक्तलक्षणे चेत्यर्थः। प्रतिबध्यज्ञानस्य प्रसिद्धिं दर्शयति यथेति। ग्राह्याभावेति। प्रतिवध्यत्वेनाभिमतज्ञानीयप्रकारीभूतस्य वस्तुनो योऽभावस्तद्व्याप्यभेदेनेत्यर्थः। विशेष्येति। विशेष्यत्वविशेषणत्वभेदेन चेत्यर्थः। प्रकृते च वह्निमत्पर्वत-वह्निव्याप्यवत्पर्वत-धूमाभावविशिष्टनिर्वह्नि-धूमाभावव्याप्यविशिष्टनिर्वह्निपर्वतवृत्तिवह्न्यादि-निर्वह्निवृत्तिधूमाभावादयो दोषाः ग्राह्याभावतद्व्याप्यादिभेदेन बोध्याः।

विशिष्टपक्ष इत्यादि। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्मरूपाऽसिद्धित्वादिनैवेत्यर्थः। तावदन्येति। तावद्भिन्नभिन्नत्वघटकप्रथमभेदप्रतियोगिविधयेत्यर्थः।

❀ गादाधरी ❀

धया निवेशो, न तु वह्निविशिष्टपर्वतत्व—निर्धूमत्वविशिष्टनिर्वह्नित्वादिना, प्रयोजनविरहात्, यत्स्थलीययादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानमप्रसिद्धम्, यथा निर्वह्निर्वह्निमानित्यदिस्थलीयस्य च बाधादेर्ज्ञानस्य, तत्स्थलीयतादृशदोषाणामगत्या वह्न्यभावविशिष्टनिर्वह्नित्व—वह्न्यभावव्याप्यविशिष्टनिर्वह्नित्व – निर्वह्निनिष्ठवह्न्यभावत्व— निर्वह्निनिष्ठवह्न्यभावव्याप्यत्वादिना चाननुगतरूपेणैव निवेशः। अत्र च विशिष्टभिन्नभिन्नत्वस्य शुद्धविशिष्टसाधारणतया सर्वमाकाशवदित्यादावाकाशाभावविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्टनि-

❀ चन्द्रकला ❀

निवेश इति। तथाच निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ निर्वह्निः पर्वतो धूमवानित्याकारकग्रहविरोधितादृशाऽसिद्धित्वावच्छिन्नभिन्नभिन्नत्वमेव लक्षणमित्याशयः।

तादृशस्थले अननुगतग्राह्याभाव-तद्व्याप्यादिभिन्नभिन्नत्वनिवेशस्तु प्रयोजनाभावाद् गौरवाच्च न कर्त्तव्य इत्याह नत्विति।

नन्वेवं तत्तद्दोषभिन्नभिन्नत्वं कुत्र वक्तव्यमित्याकांक्षायामाह यादृशेति। यद्रूपावच्छिन्नपक्षसाध्यकहेतावित्यर्थः। दोषविषयकेति। बाधादिदोषविषयकनिश्चयस्येत्यर्थः। यत्स्थलीयेति = निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयेति। बाधादेर्ज्ञानस्य = वह्न्यभावविशिष्टवह्न्यभावादिमत्पर्वतादिरूपबाधादिनिश्चयस्य।

अगत्येति। निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्याहार्यतया तद्विरोधित्वस्याप्रसिद्ध्या तादृशबाधादावनुगतधर्मस्याऽसम्भवेनोपायान्तराऽभावादिति भावः।

निवेश इति। तावद्भिन्नभिन्नत्वघटकप्रथमभेदप्रतियोगिविधयेत्यादिः। तथा च तत्तद्दोषभिन्नभिन्नत्वमेव तादृशस्थले लक्षणमित्याशयः।

ननु यदि तावद्दोषभिन्नभिन्नत्वं लक्षणं तदा ह्रदो वह्निमानित्यादौ बाधाद्येकदेशे केवलह्रदादावतिव्याप्तिः, वह्न्यभावविशिष्टह्रदादेः शुद्धह्रदाद्यभिन्नतया तादृशविशिष्टह्रदादिरूपदोषभिन्नत्वस्य शुद्धह्रदे विरहात् तादृशदोषादिभिन्नघटादिभिन्नत्वस्यैव केवलह्रदादौ सत्त्वात्।

केवलह्रदादौ वह्न्यभावविशिष्टह्रदादिभिन्नत्वाभ्युपगमे तत्रातिव्याप्तिवारणेऽपि सर्वमाकाशवदित्यत्राकाशाभाववत्सर्वरूपबाधेऽव्याप्तिः, आकाशाभाववत्सर्वभिन्नत्वस्याप्रसिद्ध्या तावद्भिन्नभिन्नत्वस्य तत्र वक्तुमशक्यत्वात् आकाशाभावविशिष्टसर्वत्वस्य सर्वत्र विद्यमानतया केवलान्वयित्वादित्याह अत्रचेति। निरुक्तलक्षणे चेत्यर्थः।

निरुक्तातिव्याप्त्यव्याप्ती वारयति तत्तद्विशिष्टेति। तथा च दोषादौ न

❀ गादाधरी ❀

रूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमेवाभिमतम् ।

अयञ्च प्रकारो यादृशपक्षसाध्यहेतुकस्थले उक्तसमूहालम्बनानुमितेरप्रसिद्धिस्तत्रैवादरणीयः । यत्र तु तत्प्रसिद्धिस्तत्र लाघवाद्यथाश्रुतमूललक्षणमेव साधीयः । शब्दाभेदस्याकिञ्चित्करतायाः स्वयमेव वक्ष्यमाणत्वादित्यवधेयम् ।

❀ चन्द्रकला ❀

तत्तद्दोषभिन्नभिन्नत्वं किन्तु दोषादिनिरूपितविषयितायामेव तत्तद्विशिष्टनिरूपितविषयिताभिन्नभिन्नत्वं वक्तव्यम् ।

तथासति तादृशविशिष्टदोषादिनिरूपिततावद्विषयिताभिन्नभिन्नविषयितानिरूपकतावच्छेदकधर्मवत्त्वमित्यस्यैव लक्षणार्थतया न बाधैकदेशे केवलह्रदादावतिव्याप्तिः, वह्न्यभावविशिष्टह्रदादिनिरूपितविषयिताभिन्नभिन्नविषयितानिरूपकतावच्छेदकत्वस्य वह्न्यभावविशिष्टह्रदत्वादावेव वर्त्तमानत्वात् केवलह्रदत्वाद्यवच्छिन्नविषयिताया वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयितातो भिन्नत्वात् ।

न वा आकाशाभाववत्सर्वरूपबाधेऽव्याप्तिः, आकाशाभाववत्सर्वत्वावच्छिन्ननिरूपितविषयिताभिन्नत्वस्य घटत्वावच्छिन्नविषयितायां सत्त्वेन तद्भिन्नत्वस्य च तादृशसर्वत्वावच्छिन्नविषयितायामनपायादिति तात्पर्यम् ।

अयञ्च प्रकारः = निरुक्ततावदन्यान्यत्वादिरूपलक्षणात्मकप्रकारः । उक्तसमूहेति । पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारिकाया अनुमितेरित्यर्थः । तत्र = निर्वह्निः पर्वतो वह्निमान् निर्वह्निर्वह्निमानित्यादिस्थले । आदरणीय इति । उपायान्तराभावादित्यादिः ।

यत्र तु = ह्रदो वह्निमानित्यादिस्थले तु । तत्प्रसिद्धिः = निरुक्तसमूहालम्बनानुमितिप्रसिद्धिः । लाघवादिति । तावदन्यान्यत्वस्य भेदद्वयगर्भत्वेन तदपेक्षया ह्रदो वह्निमानित्यादौ यद्रूपावच्छिन्नविषयकत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वार्थकमेव पूर्वोक्तं मूललक्षणमादरणीयमित्यर्थः ।

नन्वेवं लक्षणस्य नानात्वं दुर्वारमित्यत आह शब्दाभेदेति । लक्ष्यभेदेन लक्षणनानात्वस्य दीधितिकृतैवाग्रे वक्ष्यमाणतया लक्षणस्य लक्ष्यभेदेन नानात्वमिष्टमेव सुतरां लक्षणात्मकशब्दाभेदोऽकिञ्चित्कर इति भावः ।

महानसत्ववान् पर्वतो वह्निमान् धूमादित्यादौ महानसत्वाभावविशिष्टपर्वतादेरिव पर्वतवृत्तिमहानसत्वाभावादेर्महानसत्वाभावव्याप्यविशिष्टपर्वतादेरपि आश्रयासिद्धित्वेन

❀ दीधितिः ❀

एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम् ।

❀ गादाधरी ❀

यत्राश्रयासिद्ध्यादिरेकविध एव दोषः प्रतिबध्यज्ञानञ्च प्रसिद्धं महानसत्ववान् पर्वतो वह्निमान्धूमादित्यादौ तत्र विशिष्टपक्षग्रहविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणत्वमुचितं न तु महानसत्वाद्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नतादृशाभावव्याप्यविशिष्टपर्वतत्वाद्यवच्छिन्नभिन्नभिन्नत्वस्य निरुक्तसमूहालम्बनानुमितिविरोधित्वस्य च गौरवादित्याशयेनाह एकमात्रदोषस्थल इति । एकविध एव यत्र दोषस्तद्विषयकज्ञानप्रतिबध्यज्ञानञ्च प्रसिद्धं, तादृशस्थल इत्यर्थः । तेन ग्राह्याभाव–तद्व्याप्यभेदेन विशेषण–विशेष्यभावभेदेन च सर्वत्र दोषाणां नानात्वसम्भवादेकमात्रदोषस्थलस्याप्रसिद्धत्वेऽपि पर्वतान्यः पर्वतो वह्निमान् धूमादित्यादावेकविधमात्रदोषस्थले ग्राह्याभाव-तद्व्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामनुगमकरूपाभावेनान्यतमत्वस्य लक्षणताया आवश्यकत्वेऽपि न क्षतिः । तत्त्वम् = तादृशत्वं निरुक्ताश्रयासिद्धित्वादिकमिति यावत् ।

❀ चन्द्रकला ❀

तत्तदनन्तदोषभिन्नभिन्नत्वस्य पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य च लक्षणार्थत्वे गौरवं स्यादतस्तादृशस्थले पक्षतावच्छेदकविशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वमेव लक्षणार्थं इत्याशयवतां दीधितिकृतामेकमात्रेत्यादिग्रन्थं व्याचष्टे एकविध एवेति । दोषतावच्छेदकैकमात्रधर्मविशिष्ट एवेत्यर्थः ।

यत्र = यादृशस्थले । तद्विषयकेति । एकविधदोषविषयकनिश्चयस्य प्रतिबध्यज्ञानमित्यर्थः । तेनेति । यत्र एकविध एव दोष इत्याद्यर्थकरणेनेत्यर्थः । तथाच महानसत्ववान् पर्वतो वह्निमान् धूमादित्यादावपि महानसत्वाभावव्याप्यविशिष्टपर्वत-पर्वतवृत्तिमहानसत्वाभावादिभेदेन दोषाणामानन्त्यादेकमात्रदोषस्थले इत्यभिधानं दीधितिकारस्यासंगतं स्यादतः एकमात्रदोषतावच्छेदकधर्मावच्छिन्नदोषस्थले इत्यर्थकरणेऽपि न निस्तारः, पर्वतान्यः पर्वतो वह्निमान् धूमादित्यादौ पर्वतान्यत्वाभाव-तद्व्याप्यादिविशिष्टपर्वतादेःआश्रयासिद्धित्वरूपैकमात्रधर्मावच्छिन्नस्यैव दोषतया

### ❀ गादाधरी ❀

इदमुपलक्षणम् । यत्र परामर्शविरोधिनो व्यभिचार-विरोधासिद्धय-स्त्रयो दोषा न तु बाध-प्रतिरोधौ पर्वतो वह्निमान् ह्रदत्वादित्यादौ परामर्शविरोधित्वमेव सामान्यलक्षणम्, यत्र च बाध-प्रतिरोधासिद्धयो दोषाः न तु व्यभिचारविरोधौ ह्रदो वह्निमान् धूमात् काञ्चनमयह्रदो वह्निमान् धूमात् ह्रदः काञ्चनमयवह्निमान् धूमात् ह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ च तत्र विशिष्टपक्षे विशिष्टसाध्य-विशिष्टसाधनयोर्वैशिष्ट्यावगाहि यज् ज्ञानं तद्विरोधित्वमेव तथा ।

### ❀ चन्द्रकला ❀

तत्र पर्वतान्यत्वाभावविशिष्टपर्वत - तादृशाभावव्याप्यविशिष्टपर्वतादिभिन्नभिन्नत्वस्यैव लक्षणार्थताया आवश्यकत्वात् पर्वतान्यत्वविशिष्टपर्वतज्ञानस्याहार्यतया तद्विरोधित्वेन समुदायाश्रयासिद्धेरुपादानाऽसम्भवादतो दोषविषयकज्ञानस्य यत्र प्रतिबध्यज्ञानं प्रसिद्धं तत्रैव विशिष्टपक्षग्रहविरोधित्वरूपं तत्त्वं लक्षणमितिव्याख्यातमिति भावः ।

लाघवादाह इदमुपलक्षणमिति । यत्र = यादृशस्थले । नतु बाधप्रतिरोधौ = न तु बाधसत्प्रतिपक्षौ । पर्वत इति । अत्र वह्न्यभाववद्वृत्ति ह्रदत्वं व्यभिचारः । वह्न्यधिकरणवृत्तित्वाभावविशिष्टं वह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टं वा ह्रदत्वं विरोधः । ह्रदत्वाभाववत्पर्वतः स्वरूपासिद्धिरितिबोध्यम् ।

परामर्शविरोधित्वमेवेति । साध्यनिरूपिततत्तद्व्याप्त्यवच्छिन्नप्रकृतहेतुप्रकारकप्रकृतपक्षविशेष्यकलौकिकसन्निकर्षाद्यजन्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं तद्रूपवत्त्वमेव हेत्वाभासत्वमित्यर्थः ।

बाधप्रतिरोधेति । बाधसत्प्रतिपक्षेत्यर्थकम् । ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभावविशिष्टह्रदो बाधः, वह्न्यभावव्याप्यविशिष्टह्रदः सत्प्रतिपक्षः धूमाभावविशिष्टह्रदश्च स्वरूपाऽसिद्धिः । काञ्चनमयह्रदो वह्निमान् धूमादित्यादौ काञ्चनमयत्वाद्यभावविशिष्टह्रदादिकमाश्रयासिद्धिः । ह्रदः काञ्चनमयवह्निमान् धूमादित्यादौ काञ्चनमयत्वाद्यभावविशिष्टवह्न्यादिकम् साध्याऽप्रसिद्धिः । ह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्धूमादिकं साधनाऽप्रसिद्धिरित्यवगन्तव्यम् ।

विशिष्टपक्ष इति । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वे सति हेतुतावच्छेदकावच्छिन्नप्रकारताकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वमेव तथा = सामान्यलक्षणम् ।

❀ दीधितिः ❀

**स चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम्**

❀ गादाधरी ❀

एवं यत्र व्यभिचारासिद्धी एव दोषौ काञ्चनमयः पर्वतो धूमवान् वह्नेरित्यादौ तत्र विशिष्टपक्षविषयक-व्याप्तिविशिष्टसाधनग्रहविरोधित्वादिकं तथेत्यपि बोध्यम्। ननु तत्तद्धर्मावच्छिन्नभिन्नभिन्नत्वरूपलक्षणघटकतत्तद्धर्माणां भागासिद्धतया हेत्वाभाससामान्येतरभेदाननुमापकत्वेऽपि व्यभिचारावारकतया तदितरांशवैयर्थ्यमित्यत आह सचेति। स चान्योन्याभावोऽतिरिक्त एवेति योजना। स च = तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकः भेदः, अतिरिक्तः = तत्तद्धर्मातिरिक्तः, तथा च

❀ चन्द्रकला ❀

काञ्चनमयपर्वतो धूमवान् वह्नेरित्यादौ काञ्चनमयत्वाभावादिमत्पर्वतादिराश्रयाऽसिद्धिः, धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिर्व्यभिचार इत्यपि बोध्यम्. तत्र = तादृस्थले। विशिष्टपक्ष इति। पक्षतावच्छेदविशिष्टपक्षविषयकः प्रकृतसाध्यव्याप्तिविशिष्टहेतुविषयकश्च यः पक्षतावच्छेदकविशिष्टपक्षः प्रकृतसाध्यव्याप्यो हेतुरित्याकारकग्रहस्तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वादिकमित्यर्थः। आदिपदात् दोषद्वयस्थलेऽपि अनयैव रीत्या लक्षणं वक्तव्यमिति सूचितम्। तथा = सामान्यलक्षणम्।

सचातिरिक्त एवेत्यादिदीधितिमवतारयति नन्वित्यादि। अयमभिप्रायः, दोषाः स्वेतरभिन्नाः बाधत्वादिमत्त्वात् स्वरूपासिद्धिमत्त्वाद्वेत्यादिहेतोः दोषात्मकपक्षैकदेशे बाधातिरिक्तेऽसत्त्वेन भागासिद्धिसम्भवेऽपि यत्र यत्र बाधत्वादिकं तत्र तत्रैव दोषेतरभेदसत्त्वेन व्यभिचाराऽप्रसक्त्या तादृशबाधत्वादिरूपतत्तधर्मावच्छिन्नभिन्नभिन्नत्वरूपनिरुक्तेतरभेदानुमापकलक्षणात्मकहेतोर्वैयर्थ्यं स्यात्, निरुक्तभिन्नभिन्नत्वस्य तत्तद्धर्मरूपतया तादृशभिन्नभिन्नत्वत्वरूपस्वसमानाधिकरणप्रकृतसाध्यीभूतेतरभेदव्याप्यतावच्छेदकतत्तद्धर्मत्वादिघटितस्ववत्त्वस्य तादृशभिन्नभिन्नत्वरूपहेतौ सत्त्वात् तस्येतरभेदानुमापकत्वाऽसम्भवात् व्यभिचाराऽवारकस्यैव व्यर्थत्वादिति। तत्तद्धर्मातिरिक्तः = तत्तद्बाधत्वाद्यतिरिक्तः। उपसंहरति तथाचेति। तत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नप्रतियोगिताकभेदस्य तत्तद्धर्मातिरिक्तत्वे चेत्यर्थः।

❀ कलाविलासः ❀

तथाच धर्मिभेदान्न वैयर्थ्यमिति। अत्र तादृशान्यतमस्य तादात्म्यसम्बन्धे-

* गादाधरी *

धर्मिभेदान्न वैयर्थ्यम् । तत्तद्धर्मावच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतत्तद्धर्मस्वरूपत्वेऽपि तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापेक्षया तद्विशिष्टस्यैकस्य भेदस्य लाघवेन कल्पयितुं युक्तत्वादित्यभिप्रायः ।

* चन्द्रकला *

धर्मिभेदान्न वैयर्थ्यमिति । तथाच स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितस्ववत एव व्यर्थतया तत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नप्रतियोगिताकभेदस्य तत्तद्धर्मातिरिक्तभेदस्वरूपत्वे स्वपदेन तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वरूपहेतुतावच्छेदकस्योपादानमेव न सम्भवति, तत्सामानाधिकरण्यस्य तत्तद्धर्मत्वात्मकबाधत्वत्वादौ विरहात् इतरभेदव्याप्यतावच्छेदकस्वसमानाधिकरणधर्मान्तरस्यैवाप्रसिद्धेस्तादृशभेदत्व—तत्तद्धर्मत्वयोर्विभिन्नधर्मिवृत्तित्वादिति तु परमार्थः ।

ननु घटत्वाद्यवच्छिन्नभेदावच्छिन्नप्रतियोगिताकभेदस्य घटत्वादिस्वरूपताया आवश्यकतया तत्तद्बाधत्वस्वरूपासिद्धित्वावच्छिन्नभेदकूटावच्छिन्नप्रतियोगिताकभेदस्यापि तत्तद्बाधत्वादिस्वरूपत्वमेव स्वीकरणीयमितिधर्मिभेदाभावान्निरुक्तलक्षणात्मकहेतोर्वैयर्थ्यं दुर्वारमित्यत आत तत्तद्धर्मेति । घटत्वाद्यवच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकभेदस्येत्यर्थः । घटभेद-पटत्वोभयवद्भेदस्य घटातिरिक्तमठादावपि वर्त्तमानतया तादृशोभयावच्छिन्नभेदस्य घटत्वरूपता न सम्भवतीत्यतो भेदमात्रावच्छिन्नेत्युक्तमिति ध्येयम् ।

स्वप्रतियोगितेति । स्वं चरमभेदः तत्प्रतियोगितावच्छेदकीभूतो यः प्रथमभेदः तत्प्रतियोगितावच्छेदकतत्तद्धर्मात्मकत्वेऽपीत्यर्थः । तादृशेति । बाधत्वव्यभिचारत्वादिरूपतत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्येत्यर्थः । नाना धर्मेषु = बाधत्वव्यभिचारत्वादिषु । तद्विशिष्टेति । भेदत्वविशिष्टेत्यर्थकम् ।

तथाच तादृशभेदकूटावच्छिन्नभेदत्वविशिष्टस्य तादृशभेदरूपधर्मिणस्तादृशतत्तद्धर्मत्वविशिष्टतत्तद्धर्मातिरिक्तत्वस्यावश्यं स्वीकरणीयतया धर्मिभेदान्न वैयर्थ्यमित्याशयः ।

* कलाविलासः *

नैवेतरभेदानुमापकत्वं बोध्यम् । एवञ्चान्योन्याभावस्य तद्धर्मभिन्नत्वेऽपि हेतुतावच्छेदके सामानाधिकरण्यस्य सत्त्वात् धर्मिभेदादित्यभिधानमसंगतमिति तु चिन्तनीयम् ।

* दीधितिः *

पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण,

* गादाधरी *

एतच्च यथाश्रुताभिप्रायेण, तत्तद्धर्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वे चाधिकविकासकतया विशेषणसार्थक्यमित्यवधेयम्। ननु साध्यादिभेदेन लक्षणभेदे ह्रदो वह्निमान् धूमादित्यादिस्थलीयस्य लक्षणस्य पञ्चविधहेत्वाभाससाधारण्यासम्भवात्तादृशलक्षणाक्रान्तानां पञ्चविधत्वोक्त्यसङ्गतिरित्यत आह पञ्चविधभेदोक्तिरिति। पञ्चविधत्वोक्तिरित्यर्थः। तत्सम्भवस्थलेति। यत्र पञ्चा-

* चन्द्रकला *

एतच्चेति निरुक्तवैयर्थ्याभिधानञ्चेत्यर्थः। यथाश्रुतेति। स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकीभूतो यो धर्मस्तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्ववत्त्वस्य यथाश्रुतवैयर्थ्यलक्षणाभिप्रायेणेत्यर्थः। तत्तद्धर्मेति। तत्तद्धर्मावच्छिन्नविषयिताभिन्नभिन्नविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्येत्यर्थः। लक्षणत्वे = लक्षणार्थत्वे।

अधिकेति। स्वव्यापकप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितस्यैव वैयर्थ्यलक्षणस्य वक्तव्यतयेत्यर्थः। विशेषणेति। तत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नभेदरूपलक्षणात्मकेतरभेदानुमापकहेतोः तत्तद्धर्मावच्छिन्नविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वरूपलक्षणात्मकतादृशहेतोर्वा सार्थक्यमित्यर्थः।

द्रव्यं गुणकर्मान्यत्वे सति समवेतादित्यत्र गुणत्वस्य द्रव्यत्वव्याप्यतावच्छेदकतया समवेतत्वसमानाधिकरणतया च तद्घटितनिरुक्तसमवेतत्ववतो हेतोर्व्यर्थतापत्त्या-व्यर्थतावच्छेदकत्वेनाभिमतस्वव्यापकधर्मान्तरघटितत्ववत एव व्यर्थताया वक्तव्यतया निरुक्तस्थले वैयर्थ्याशंकोदय एव न सम्भवति, तादृशभेदकूटावच्छिन्नभेदस्य तत्तद्धर्मस्वरूपत्वेऽपि तादृशभेदत्वव्यापकत्वस्य तत्तद्धर्मत्वरूपबाधत्वत्वादौ विरहात् तादृशभेदत्वस्य व्यभिचारत्वादावपि सत्त्वात्। एवं तादृशान्यतमविषयितानिरूपकतावच्छेदकत्वत्यापि व्यभिचारत्वबाधत्वादिसाधारणतया तद्व्यापकत्वस्यापि तत्तद्धर्मत्वेऽभावात् न लक्षणात्मकहेतोर्वैयर्थ्यमित्यभिप्रायः।

ह्रदो वह्निमान् धूमादित्यादौ हेत्वाभासपञ्चकस्याऽसम्भवात् तत्स्थलीयलक्षणस्य पञ्चविधभेदघटितत्वमप्यसम्भवीत्याशंक्य पञ्चविधेत्यादिदीधितिमवतारयति नन्विति। पञ्चविधत्वोक्तिः = पञ्चविधत्वाभिधानम्।

* दीधितिः *

व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात् शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः ।

* गादाधरी *

नामेव हेत्वाभासानां सम्भवः गौरश्वो घटत्वादित्यादौ तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः । ननु लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरिति । साध्यादिभेदनियन्त्रितत्वात्= साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वात्, तथाच लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः । नन्वेवमप्यनुगतोक्त्यसम्भवान्नायं प्रकारः साधीयानित्यत आह शब्दाभेदमात्रस्येति ।

* चन्द्रकला *

गौरश्व इत्यादि । अत्र अश्वत्वाभाववद्वृत्ति घटत्वं व्यभिचारः, अश्वत्वाधिकरणवृत्तित्वाभावविशिष्टघटत्वं विरोधः, घटत्वाभावविशिष्टो गौः स्वरूपासिद्धिः, अश्वत्वाभाववद्गौर्बाधः, अश्वत्वाभावव्याप्यवांश्च गौः सत्प्रतिपक्षइति पञ्चानां हेत्वाभासानामत्र समावेशात् निरुक्तस्थलाभिप्रायेणैव पञ्चविधत्वाभिधानं न तु सर्वत्रेति भावः ।

लक्षणाननुगमादिति । लक्षणस्य नानात्वे ह्रदो वह्निमान् धूमादित्यादिस्थलीयलक्षणस्थतत्तद्दोषभिन्नभिन्नत्वस्य दोषात्मकपक्षैकदेशे व्यभिचारादौ विरहात् भवति भागासिद्धिरिति नन्वित्यादिशंकाया अभिप्रायः ।

साध्यादीति । आदिना हेतोः परिग्रहः । व्यभिचारादेरित्यत्रादिना बाधादेः परिग्रहः । व्यभिचारादेः साध्यादिभेदेन भिन्नत्वस्यावश्यकत्वादाह तथाचेति । न भागासिद्धिरिति । ह्रदो वह्निमान् धूमादित्यादौ दोषसामान्यस्य न पक्षत्वं किन्तु तत्स्थलीयतत्तद्दोषादेरेव, तत्र च तत्स्थीयतत्तद्दोषभिन्नभिन्नत्वस्याननुगतस्यापि लक्षणस्य सत्त्वान्न भागासिद्धिरित्यर्थः ।

तथा च लक्षणवत् लक्ष्यतावच्छेदकस्याप्यननुगततया तत्तद्दोषाः स्वेतरभिन्नाः बाधत्वाद्यवच्छिन्नो वा स्वेतरभिन्नः बाधत्वाद्यवच्छिन्नभिन्नत्वादित्याकारकेतरभेदानुमानस्यैव पर्यवसिततया न कोऽपि दोष इति भावः ।

शब्दाभेदस्येति । लक्षणात्मकशब्दस्य अभेदः ऐक्यं तस्येत्यर्थः । अकिञ्चित्करत्वादिति । निरुक्तलक्षणस्यैकताया वक्तुमशक्यत्वादित्याशयः ।

इदन्तु तत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नभेदवद्धर्मवत्त्वरूपं लक्षणं दोषाः स्वेतरभिन्नाः तादृशभेदवद्धर्मवत्त्वादित्याकारकेतरभेदानुमापकमेव, नतु दोषपदशक्यतावच्छे-

❀ गादाधरी ❀

इदं पुनरिहावधेयम् । तावदन्यान्यत्वमितरभेदानुमापकमेव न तु दोषपद-प्रवृत्तिनिमित्तम्, तथासति निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टिनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यादेरनन्वितार्थकत्वप्रसङ्गादप्रसिद्ध्या तस्य हेत्वन्वयिनिर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वार्थकत्वासम्भवात्, किन्तु अभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकवत्त्वमेव तथा, उक्तस्थले च प्रकारता, प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता चोभयमेव साधनपदार्थः ।

प्रकारतारूपसाधनपदार्थेऽपरपदार्थैकदेशव्याप्तिप्रकारतानिरूपकप्रकार-

❀ चन्द्रकला ❀

दकं दोषव्यवहारौपयिकं वक्तव्यम्, तथासति वह्न्यभाववत्त्वावच्छिन्ने वह्निसाधने धूमो दुष्ट इत्यादौ दुष्ट इत्यस्य वह्न्यभाववन्निष्ठवह्न्यभावादिभिन्नभिन्नवदर्थकताया आवश्यकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यादिसमुदायार्थस्य अन्वयानुपपत्तिः स्यादित्याहेदम् पुनरिहेति ।

एवकारव्यवच्छेद्यमाह नत्विति । दोषपदप्रवृत्तिनिमित्तं दोषपदशक्यतावच्छेदकं दोषव्यवहारौपयिकमितियावत् । निषेधे हेतुमाह तथासतीति । निरुक्तलक्षणस्य दोषपदप्रवृत्तिनिमित्तत्वाभ्युपगमे सतीत्यर्थः । अधिकमभिहितं प्राक् ।

ननु निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभाववन्निष्ठवह्न्यभावाद्यन्यतमवदर्थकत्वेऽपि न निर्वह्नित्वविशिष्टे इत्यादेरनन्वयप्रसंगः, अनुमित्यर्थकसाधनपदोत्तरसप्तम्याः प्रयोजकत्वार्थे स्वीकृत्य निर्वह्निविशेष्यताकवह्न्यनुमितिप्रयोजकताया धूमेऽन्वयसम्भवादित्यत आह अप्रसिद्ध्येत्यादि । तस्य = निर्वह्नित्वविशिष्टे वह्निसाधने इत्यादिसमुदायस्य ।

तथाच निर्वह्निविशेष्यकवह्निज्ञानस्याहार्यत्वेन तस्यानुमितित्वं न सम्भवदुक्तिकमपीति हृदयम् ।

ननु तर्हि तत्र कीदृशान्वयबोधोऽभ्युपगन्तव्य इत्यत आह किन्त्वित्यादि । तथा = दुष्टत्वम् । उक्तस्थले = निर्वह्नित्वविशिष्टे वह्नेःसाधने धूमो दुष्ट इत्यादिस्थले । अपरपदार्थैकदेशेति, प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतारूपसाधनपदार्थैकदेशीभूतायां प्रथमप्रकारतायाञ्च । स्वरूपसम्बन्धेनेति अन्वय इतिशेषः ।

* गादाधरी *

तायाञ्च षष्ठ्यन्तवह्निपदप्रतिपाद्यस्य वह्निनिष्ठत्वस्य स्वरूपसम्बन्धेन, साधनपदार्थोक्तप्रकारताद्वये च सप्तम्यन्तार्थस्य निर्वह्नित्वविशिष्टविशेष्यताया निरूपितत्वसम्बन्धेनान्वयः, साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वञ्चार्थः, निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः, तदन्वितनिरूपकत्वे च द्वित्वान्वयः, द्वित्वान्वितताद्दशनिरूपकत्वयोश्च दोषपदार्थघटकाभावेऽन्वयः, तथाच निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य ताद्दशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकत्वानित्येवान्वयबोधः। प्रतिबन्धकीभूतभ्रम-

* चन्द्रकला *

निर्वह्नित्वविशिष्टे इत्यत्र सप्तम्यर्थो विशेष्यत्वं तत्रच निर्वह्नित्वविशिष्टस्याधेयतया, वह्नेरित्यत्र षष्ठ्यर्थनिष्ठत्वे तु वह्निपदार्थस्य निरूपितत्वसम्बन्धेनान्वयो बोध्यः।

निरुक्तेति प्रकारतायाः प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतायाश्च पृथगन्वय इत्यर्थः। तदन्वितेति ताद्दशप्रकारताद्वयान्वितेत्यर्थकम्। द्वित्वान्वय इति। स्वरूपसम्बन्धेनेत्यादिः। अभावेऽन्वयः इति प्रतियोगितासम्बन्धेनेत्यादिः। समुदितपदार्थान्वयबोधमाह तथाचेति। निरुक्तक्रमेण समस्तपदार्थनिर्वचने चेत्यर्थः।

ननु अभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकपर्यन्तस्य दुषधात्वर्थत्वे सम्बन्धिनश्च तत्र प्रत्ययार्थत्वेऽपि विषयितायां भ्रमान्यवृत्तित्वविशेषणं निरर्थकमित्यत आह प्रतिबन्धकीभूतेति। अनुमितिप्रतिबन्धकतावान् यो भ्रमस्तदीयविष-

* कलाविलासः *

तथाच निर्वह्नित्वेति। नच निर्वह्निर्वह्निमान् इत्यादिस्थले पूर्वं विरोधिविषयिताया अप्रसिद्धेरेवाशंकिततया कथमुक्तशाब्दबोधः समीचीन इति वाच्यम्, परे तु कल्पाभिप्रेतप्रतिबध्यप्रतिबन्धकभावस्येदानीमप्यादरणीयतया प्रयोज्यप्रयोजकभावाभिधानस्य समीचीनत्वसम्भवादिति दिक्।

इतिश्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य — श्रीमत्स्वामिजयरामदासभगवत्पादशिष्य-समस्तभारतवर्षप्रसिद्धसिन्धुमहा-नदान्तर्वर्त्ति—साधुवेलातीर्थाधीश—पदवाक्यप्रमाणपारावारीण-स्वामिश्रीमद्हरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्तेः कलाविलासनामिका टीका समाप्ता।

❀ गादाधरी ❀

विषयितानिरूपकाभावादिमत्त्वमादाय पर्वते वह्निसाधने धूमो दुष्ट इत्यादिप्रयोगवारणाय विषयितायां भ्रमान्यवृत्तित्वं निवेशितम् । दोषघटके केवलसाध्याभावादौ दोषव्यवहाराभावात् अत्रायं दोष इत्यादौ स्वविषयकनिश्चयाव्यवहितोत्तरानुमितिनिष्ठतादृशोभयाभावाधिकरणतात्वव्यापक विरोधिविषयिताप्रयोज्यताकधर्म एव दोषपदार्थ इति दिक् ।

❀ चन्द्रकला ❀

यितानिरूपकवह्न्यभावादिमत्त्वमादायेत्यर्थः । आदिना पर्वतादेः परिग्रहः ।

भ्रमान्यवृत्तित्वमिति । विषयितायां भ्रमान्यवृत्तित्वविशेषणानुपादाने पर्वते वह्नेः साधने धूमो दुष्ट इतिप्रयोगापत्तिः स्यात् तत्रापि धूमे पर्वतविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्व– तादृशविशेष्यतानिरूपितवह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपकत्वयोर्द्वयोरभावप्रयोजिका या वह्न्यभाववान् पर्वत इत्याकारकभ्रमीयविषयिता तन्निरूपकवह्न्यभावादेः स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धवत्त्वस्यानपायादतो भ्रमान्यवृत्तित्वं तादृशविषयितायां देयम्, तथा सति नोक्तप्रयोगापत्तिः, निरुक्तविषयितायाः पर्वतादौ वह्न्यभावप्रकारकभ्रमवृत्तित्वादित्याशयः ।

नन्वेवम् अभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकस्य दोषपदार्थत्वे ह्रदो वह्निमानित्यादौ वह्न्यादिकं दोष इतिव्यवहारापत्तिः, वह्न्यादिविषयिताया अपि ह्रदादिधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकतावच्छेदकतया वह्न्यादावपि तादृशोभयाभावप्रयोजकभ्रमान्यवृत्तितादृशविषयितानिरूपकत्वस्य सत्त्वात् प्रतिबन्धकतावच्छेदकविषयिताप्रयुक्तत्वस्य दोषतावच्छेदकधर्माभावे स्वीकरणीयत्वादित्याह **दोषघटकेति** । अत्र = हेतौ ।

इत्यादौ = इत्याकारकव्यवहारस्थले **स्वविषयकेति** । अत्र स्वपदं दोषतावच्छेदकत्वेनाभिमतधर्मपरं न तु दोषत्वेनाभिमतव्याप्तिपरम्, अग्रे च धर्मपदं धर्मवदर्थकम्, तेन विशिष्टदोषस्य विशेष्यमात्रात्मकत्वेऽपि न क्षतिः, नवा घटत्वाभाववदाकाशादेर्वृत्तिमत्त्वलक्षणधर्मत्वाभावेऽपि आकाशपक्षकघटत्वादिसाध्यकस्थले तस्य दोषत्वानुपपत्तिरितिध्येयम् ।

तथा स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितौ या तादृशोभयाभावाधिकरणता तादृशाधिकरणतात्वव्यापकीभूता या विरोधिविषयितानिष्ठप्रयोजकतानिरूपिता प्रयोज्यता सा यस्य स्वस्य एवम्भूतस्वात्मकधर्मवानेव दोषपदार्थ इत्यर्थः ।

❀ दीधितिः ❀

स्यादेतत्, शब्दोऽनित्यः शब्दत्वात्, इत्यत्रासाधारणेऽव्याप्तिः

❀ गादाधरी ❀

असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगितात्मकस्य, सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्ताज्ञानविरोधित्वं निर्विवादमेव। एवञ्च तज्ज्ञानदशायां हेतोरनुमित्यजनकत्वात्तद्बुद्धेः प्रतिबन्धकत्वमावश्यकमित्येतादृशयथाश्रुतार्थपरस्य दशाविशेषे इत्यादिमूलस्यानुत्थितिः, अन्यथा साधारण्यादिज्ञानस्य प्रतिबन्धकताया अपि व्यवस्थापयितुमुचितत्वादतस्तादृशमूलमन्यथा व्याख्यातुमवतरणिकामाह स्यादेतदिति। इत्यत्रासाधारणे = एतत्स्थलीयासाधारण्यरूपदोषप्रकारकहेतुविशेष्यकभ्रम-विषये सर्वसाध्यवद्व्यावृत्तत्वात्मके। अव्याप्तिरिति। तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः। ननु केवलं सर्वसाध्यवद्व्यावृत्तत्वं न दोषः अपि तु साधनवृत्तित्वविशेषितम् तादृशविशिष्टविषयकत्वन्तु न प्रतिबन्धकतातिरिक्त-

❀ चन्द्रकला ❀

तृतीयलक्षणव्याख्यानन्तु तृतीयमपीत्यादिना स्वयमेव पूर्वमुक्तमतो नेह वितन्यते, अत्र निर्वह्निर्वह्निमान् धूमादित्यादौ अत्रायं दोष इति व्यवहारो न स्यात्, तत्र विरोधिविषयितायाः पूर्वोक्तयुक्त्याऽप्रसिद्धत्वादिति तु विभावनीयमित्यलं पल्लवितेन।

स्यादेतदित्याद्यवतरणं संगमयति असाधारण्यस्येति। बुद्धेः = निश्चयस्य। विरोधिविषयकतया = साध्याभावव्याप्यवत्त्वावगाहितया। तद्बुद्धेः = असाधारण्यादिबुद्धेः। अन्यथेति। दशाविशेषे इत्यादिमूलस्य प्रत्येकज्ञानस्य अनुमितिप्रतिबन्धकत्वव्यवस्थापनपरत्वे इत्यर्थः। उचितत्वादिति। तथाच केवलासाधारण्यादिज्ञानस्य तथात्वाभिधानमयुक्तमिति भावः।

अव्याप्तिमुपपादयति तद्विषयकत्वस्येति। सर्वसाध्यवद्व्यावृत्तत्वावच्छिन्नविषयकत्वस्येत्यर्थः। सर्वसाध्यवद्व्यावृत्तत्वमात्रस्य लक्ष्यत्वे तत्राव्याप्तिः, तादृशव्यावृत्तत्वावच्छिन्नविषयकत्वस्य हेत्वविषयककेवलव्यावृत्तत्वावच्छिन्नविषयकेऽपि निश्चये वर्त्तमानतया तत्राऽनुमितिप्रतिबन्धकताविरहेण तद्विषयकत्वव्यापकतायाः प्रकृतानुमितिप्रतिबन्धकतायामसत्त्वात्। हेतुनिष्ठसर्वसाध्यवद्व्यावृत्तत्वन्तु अप्रसिद्धम्, अनित्यत्ववति शब्दे शब्दत्वस्य वृत्तेरित्यवश्यं हेत्वघटितस्यैव तस्य लक्ष्यत्वादितिभावः।

❀ दीधितिः ❀

सर्वसाध्यवद्व्यावृत्तेस्तत्रासत्त्वात्, एवं शब्दोऽनित्यः कृतकत्वा-दित्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ता-

❀ गादाधरी ❀

वृत्तीत्यत आह सर्वेति। तत्र = हेतौ, असत्त्वात् = अवृत्तेः, साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः, तथा च तादृशविशिष्टस्याप्रसिध्या तस्य दोषत्वा-सम्भवेन प्रसिद्धस्याविशिष्टसाध्यवद्व्यावृत्तत्वस्यैव तत्र दोषताया आवश्य-कत्वमिति भावः।

अद्रव्यद्रव्यत्वादाविति = असमवेतद्रव्यत्वादावित्यर्थः। असमवेतत्व-स्य ध्वंससाधारणतया नित्यत्वव्याप्यत्वासम्भवाद्विशेष्यांशनिवेशः। अत्रा-प्यनन्तरमव्याप्तिरित्यनुषज्यते, तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारण-तया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः। ननु केवलं नित्यत्वव्याप्याद्र-व्यत्वादिकं न तत्र दोषः, अपि तु पक्षनिष्ठतद्वत्तैव, तादृशविशिष्टविषयक-त्वञ्च प्रतिबन्धकतानतिरिक्तवृत्त्येवेत्यत आह पक्षस्येति। तथाच पक्षघटि-तविशिष्टाप्रसिध्या पक्षाघटितस्यैव दोषत्वमावश्यकमिति भावः। तयोः = तादृशस्थलीयदोषत्वेनाभिमतयोरुक्तधर्म्मयोः। शब्दो नित्यः शब्दत्वादि-त्यादौ शब्दत्वादिविशेष्यकनित्यत्वव्यावृत्तत्वादिज्ञानविषयविशिष्टस्य प्रसि-

❀ चन्द्रकला ❀

साध्यवति = अनित्यत्ववति। पक्षे = शब्दे। हेतोः = शब्दत्वस्य। असमवेतेति। शब्दपक्षकानित्यत्वसाध्यकेत्यादिः। नित्यत्वेति। अनित्यत्वरूप-साध्यस्य योऽभावः नित्यत्वं तद्व्याप्यत्वाऽसम्भवादित्यर्थः विशेष्यांशनिवेशः = द्रव्यत्वांशनिवेशः।

असमवेतद्रव्यत्वस्य गगनादावेव सत्त्वेन तत्र नित्यत्वव्याप्यत्वं निर्विवाद-मित्याशयः।

नित्यत्वव्याप्याऽसमवेतद्रव्यत्वेऽप्यव्याप्तिमुपपादयति तद्विषयकत्वस्येति। नित्यत्वव्याप्तिविशिष्टाऽसमवेतद्रव्यत्वविषयकत्वस्येत्यर्थः। तादृशेति नित्यत्वव्या-प्याऽसमवेतद्रव्यत्वादिमत् शब्दरूपपक्षविषयकत्वं तु इत्यर्थः। दोषत्वमावश्यक-मिति। तथाच तत्र तत्राव्याप्तिरेवेति भावः। उक्तधर्मयोः = सर्वसाध्यवद्व्या-वृत्तत्व-नित्यत्वव्याप्याऽसमवेतद्रव्यत्वयोः।

इत्यादौ = इत्याद्यसद्धेतौ।

❀ चिन्तामणिः ❀

दशाविशेषे हेत्वोरेवाऽसाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

❀ दीधितिः ❀

विरहादित्याशंकां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति ।

हेत्वोः = सद्धेत्वोः, असाधारणः = पक्षमात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा, तयोर्दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायाम्, आभासत्वात् = अनुमित्यजनकत्वात्,

❀ गादाधरी ❀

ध्या तत्राव्याप्तेः शङ्कानास्पदत्वादलक्ष्यत्वाभ्युपगमेन तत्परीहारस्यात्यन्तासम्भवदुक्तिकत्वात् हेतुपदं सद्धेतुपरतया व्याचेष्टे हेत्वोरिति । सद्धेत्वोः साध्यवद्व्यावृत्तत्वादिरूपासाधारण्यस्य साध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षितत्वस्य चासम्भवादसाधारणसत्प्रतिपक्षपदे अन्यथा व्याचष्टे असाधारण इति । तथा = प्रकृते सत्प्रतिपक्षपदार्थः । सद्धेत्वोर्दुष्टत्वरूपाभासत्वायोगादाभासपदमन्यथा व्याचष्टे आभासत्वादिति ।

तद्बुद्धेरित्यत्र तत्पदस्य हेतुपरत्वं न सम्भवति, सत्प्रतिपक्षस्थले प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमाद्धेतुविषयकत्वकथनस्याप्रयोजकत्वाद् बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न सम्भवति हेत्वादिमात्रविषयकज्ञानस्याप्रतिबन्धकत्वादतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य

❀ चन्द्रकला ❀

शंकानास्पदत्वादिति । शब्दो नित्यः शब्दत्वादित्यादौ नित्यत्ववद्व्यावृत्तत्वविशिष्टशब्दत्वरूपस्य विशिष्टस्य प्रसिद्धत्वात् तस्य लक्ष्यत्वात् तत्र दुष्टत्वस्याप्यावश्यकत्वादित्यभिप्रायः ।

हेतुपदमिति । मौलमित्यादिः । मूलस्थासाधारणसत्प्रतिपक्षपदस्य पक्षमात्रवृत्तिः सन् प्रतिपक्ष इत्याद्यर्थकत्वाभिधानप्रयोजनमाह सद्धेत्वोरित्यादि । शब्दपक्षकानित्यत्वासाध्यकशब्दत्वाऽसमवेतद्रव्यत्वयोर्हेत्वोरित्यर्थः ।

हेतुविषयकत्वाऽनियमादिति । साध्याभावव्याप्यवत्पक्षस्य हेत्वघटितस्यापि सत्प्रतिपक्षत्वादितिभावः ।

हेत्वादिमात्रेति । केवलं हेतुरित्याकारकज्ञानस्येत्यर्थः । तत्पदस्य=तद्बुद्धेरित्या-

❀ दीधितिः ❀

तद्बुद्धेः = हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति न तु तद्विषयस्य दोषत्वम्, असत्त्वात्, अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वम्

❀ गादाधरी ❀

साध्यतद्व्यावृत्तत्व—साध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवद्व्यावृत्तित्व—पक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरतया व्याचष्टे तद्बुद्धेरिति । तयोरलक्ष्यतालाभाय हेत्वोरनन्तरं श्रुत एवकारोऽत्र योजनीयः । तदर्थमन्तर्भाव्य व्याचष्टे प्रतिबन्धकत्वं परमायातीति । परम्=केवलम् । एवकारव्यवच्छेद्यं स्फुटयति नत्विति । तद्विषयस्य = तादृशबुद्धिविषयस्य, दोषत्वम् = दोषलक्षणलक्ष्यत्वम्, असत्त्वात् = लक्ष्यताप्रयोजकस्यासत्त्वात्, प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयलक्ष्यताप्रयोजकत्वादितिभावः । असत्त्वात् = विशिष्टस्याप्रसिद्धत्वादिति तु नार्थः, एकदेश एवाव्याप्तेराशङ्कितत्वया विशिष्टाप्रसिद्धेस्तदलक्ष्यतानिर्वाहकत्वविरहेणानुपयोगात्, अन्यथा=प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे, बाधभ्रमेण = पक्षे साध्याभावभ्रमेण ।

❀ चन्द्रकला ❀

दिमौलतत्पदस्य । तदर्थमन्तर्भाव्य = श्रुतैवकारार्थमन्तर्भाव्य । तादृशबुद्धीति सर्वाऽनित्यत्वद्व्यावृत्तशब्दत्वज्ञानविषयस्य नित्यत्वव्याप्यासमवेतद्रव्यत्वादिमच्छब्दज्ञानविषयस्य चेत्यर्थः । लक्ष्यताप्रयोजकेति । यत्र दोषतावच्छेदकत्वेनाभिमतं विशिष्टं रूपं तत्रैव लक्ष्यत्वमिति हृदयम् ।

ननु तर्हि लक्ष्यताप्रयोजकं किमित्याकांक्षायामाह प्रतिबन्धकीभूतेति । तद्विषयस्य = प्रतिबन्धकीभूतज्ञानविषयस्य । तथाच प्रकृतानुमितिप्रतिबन्धकीभूतज्ञाननिष्ठं प्रमात्वमेव तद्विषयस्य लक्ष्यताप्रयोजकमितिभावः ।

एकदेश एव = केवलसर्वसाध्यवद्व्यावृत्तत्वादावेव । तदलक्ष्यतेति । सर्वसाध्यवद्व्यावृत्तत्वरूपैकदेशनिष्ठालक्ष्यतेत्यर्थकम् ।

दीधितिस्थान्यथापदार्थं व्याचष्टे प्रतिबन्धेति । साध्याभावभ्रमेणेति । पर्वतो वह्निमान् धूमादित्यादौ पर्वतादौ वह्न्याद्यभावभ्रमेणेत्यर्थः । तस्येति तत्पदस्य भ्रमपरामर्शकत्वे असंगतिः, ज्ञानस्यादोषत्वात्, वह्न्यभावविशिष्टपर्वतादेश्चाप्रसिद्धया परामर्शाऽसम्भवादाह तद्विषयेति । तादृशभ्रमविषयेत्यर्थकम् ।

* दीधितिः *

स्यात्, को हि साध्याभाव—तद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः। निर्युक्तिकस्तु प्रवादो न श्रद्धेयः।

यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वम् तत्प्रकारक-प्रमाविषयत्वञ्च लक्षणार्थः।

* गादाधरी *

नन्वेवमुक्तस्थले दशाविशेषे हेतोर्दुष्टताप्रवादो नोपपद्यत इत्यत आह निर्युक्तिकस्त्विति।

उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टत्वमङ्गीकुर्वन्तस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते ये तन्मतमुपन्यस्य दूषयति यत्त्विति। "ज्ञानस्येति" षष्ठ्यन्तार्थस्य यत्पदार्थेऽन्वयः, तथा च ज्ञानसम्बन्धित्व-विशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्सम्बन्धेन अनुमितिप्रतिबन्धकता-वच्छेदकमित्यर्थः। अत्राप्यवच्छेदकत्वं अनितिरिक्तवृत्तित्वम्, उक्तयुक्तेः।

* चन्द्रकला *

दशाविशेषे = भ्रमदशायाम्। हेतोः = निरुक्तशब्दत्वादिहेतोः। अन्यत् सुगमम्।

उपदर्शितेति। शब्दोऽनित्यः शब्दत्वात् इत्यादिस्थले दशाविशेषे = सर्वसाध्य-वद्व्यावृत्तत्वरूपाऽसाधारण्यभ्रमदशायाम्, शब्दादौ पक्षे नित्यत्वव्याप्यासमवेतद्रव्यत्व-भ्रमदशायाञ्च। हेतोः = शब्दत्वादेः। तत्साधारण्याय = निरुक्तशब्दत्वादिसद्धेतु-साधारण्याय।

लक्षणार्थमाह तथाचेति। ज्ञानेति निश्चयेत्यर्थकम्, तेन न दोषादिविषयक-संशयादिकमादायासम्भव इति ध्येयम्।

तथा च यत्किञ्चित्सम्बन्धेन निश्चयसम्बन्धि सदेव यद्रूपावच्छिन्नम् प्रकृतानु-मितिप्रतिबन्धकतावच्छेदकं भवति तद्रूपावच्छिन्नवत्त्वं हेतौ दुष्टत्वमिति फलितम्। ह्रदो वह्निमान् धूमादित्यादौ प्रमात्मकवह्न्यभाववद्ह्रदनिश्चये विषयितासम्बन्धेन वह्न्यभाववद्ह्रदादेः सत्त्वेनैव तस्य ह्रदधर्मिकवह्न्याद्यनुमितिप्रतिबन्धकता-वच्छेदकतया तद्वत्त्वमादाय धूमादेर्दुष्टत्वमेवमन्यत्रापीति भावः।

उक्तयुक्तेरिति। ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ह्रदनिश्चयनिष्ठायां विषयितासम्बन्धेन वह्न्यभावादेरपि प्रतिबन्धकतायामवच्छेदकत्वात् बाधाद्येकदेश-केवलवह्न्यभावादिमत्त्वमादाय धूमस्य दुष्टत्वापत्तिः स्यादतोऽत्र प्रतिबन्धकतावच्छेद-कत्वमनतिरिक्तवृत्तित्वरूपं वक्तव्यम्, तथा सति केवलवह्न्यभावादेर्विषयितासम्बन्धेन

* दीधितिः *

**तच्च द्विविधम्, विषयरूपं साधारण्यादि,**

* गादाधरी *

तत्पदमुभयत्र तद्रूपविशिष्टपरम्। लक्षणार्थ=व्युत्क्रमेण लक्षणयोरर्थः। नन्वेतावतैव कथं दर्शितसत्प्रतिपक्षादौ लक्षणसमन्वयः, तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याप्रसिद्धेः, कथं वा व्यभिचारादिकमादाय सव्यभिचारादावेव लक्षणगमनं व्यभिचारादिविषयकत्वस्यैव-प्रतिबन्धकतावच्छेदकतया व्यभिचारादेरतथात्वादित्यत आह तच्चेति। तादृशप्रतिबन्धकतावच्छेदकञ्चेत्यर्थः।

* चन्द्रकला *

वह्न्यभाव इत्याकारकनिश्चयेऽपि वर्त्तमानतया तत्रानुमितिप्रतिबन्धकताविरहेण वह्न्यभावदेर्विषयितासम्बन्धेन प्रतिबन्धकतातिरिक्तवृत्तित्वान्न तमादाय धूमस्य दुष्टत्वं सम्भवतीत्यभिप्रायः।

यत्पदस्य यद्रूपावच्छिन्नपरत्वे अग्रिमतत्पदस्यापि तद्रूपावच्छिन्नपरताया आवश्यकत्वादाह तत्पदमिति। तद्वत्त्वमित्यत्र तत्प्रकारकेत्यत्र च तत्पदमित्यर्थः। यत्पदस्याखण्डयद्व्यक्तिपरत्वे तु बाधाद्येकदेशकेवलहृदादिमित्त्वमादाय हेतोर्दुष्टत्वं स्यात्, शुद्धस्य विशिष्टानतिरिक्तत्वादिति हृदयम्।

व्युत्क्रमेणेति। शब्दोऽनित्यः शब्दत्वादित्यादौ प्रथमं द्वितीयलक्षण एव सर्वसाध्यवद्व्यावृत्तत्वादावव्याप्तेराशंकिततया तादृशाव्याप्तिवारणार्थं प्रथमं प्रथमलक्षणस्यार्थमनभिधाय व्युत्क्रमेण प्रथमं द्वितीयलक्षणस्यार्थो दीधितिकृताभिहितस्ततस्तत्प्रकारकेत्यादिना प्रथमलक्षणस्यार्थ इतितु तत्त्वम्।

विषयिताद्यन्यत्किञ्चित्सम्बन्धेन ज्ञानसम्बन्धि सत् यद्रूपावच्छिन्नं प्रकृतानुमिति-प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नप्रकारकप्रभाविशेष्यत्वं दुष्टत्वमिति तु प्रथमलक्षणस्यार्थः इत्यवधेयम्।

तच्चेति दीधितिमवतारयति नन्वेतेति। तत्र=सर्वसाध्यवद्व्यावृत्तशब्दत्वादिभ्रमे। सव्यभिचारादौ=धूमसाध्यकवह्न्यादौ।

अतथात्वादिति। तथाच व्यभिचारविषयकत्वस्य ज्ञाननिष्ठतया हेतावसत्त्वात् व्यभिचारिणि हेतौ लक्षणसमन्वयो न स्यादिति भावः।

तादृशेति। तादृशप्रतिबन्धकतानतिरिक्तवृत्ति चेत्यर्थः। ननु वैज्ञानिकमिति। बाधस्थले साध्याभावस्य वैज्ञानिकत्वे पर्वतो वह्निमान् धूमादित्यादौ बाधभ्रममादाय

* दीधितिः *

बाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयकत्वेन ज्ञानस्यानुमिति-प्रतिबन्धकत्वात्। अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकम्, तद्वत्त्वञ्च ज्ञानस्येव तद्विषयस्य हेतोरपीति।

* गादाधरी *

भ्रमात्मकबाधप्रतिबन्धकतामादायापादितायाः सद्धेतोर्दुष्टताया असम्भवं स्पष्टीकर्त्तुमाह बाधे चेति। बाधज्ञाननिष्ठप्रतिबन्धकतायाञ्चेत्यर्थः, अवच्छेदक इति शेषः। पक्षस्य वास्तवं साध्याभाववत्त्वं निविशते न तु वैज्ञानिकमिति सूचयितुं प्रमितेति। तद्विषयस्यावच्छेदकत्वे युक्तिमाह तद्विषयकत्वेनेति। तथाच विषयविषयकत्वस्येव विषयस्यापि विषयितया अवच्छेदकत्वमक्षतमिति भावः। विरोधिसाम-ग्रीकालीनत्वादीति। विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः, तथाच तदादायैव सत्प्रतिपक्षिते असाधारणे च सद्धेतौ दुष्टत्वमिति भावः। ननु ज्ञाननिष्ठं विरोधिसामग्री-कालीनत्वमादाय कथं हेतोर्दुष्टत्वं तस्य ज्ञान एव सत्त्वादित्याशङ्कां परि-हरति तद्वत्त्वेति। तद्विषयस्य हेतोरपीति। तत्कालनिरूपिताधेयतात्मकस्य-

* चन्द्रकला *

हेतोर्दुष्टत्वापत्तिः स्यादतो नव्यैरयुक्तमितिध्येयम्।

व्यभिचारादेः साध्याभाववत्पक्षादेरपि प्रतिबन्धकतावच्छेदकत्वं व्यवस्थापयितुं भावमाह तथाचेति। विषयितया = विषयितासम्बन्धेन।

परामर्शादेरिति। आदिना सर्वसाध्यवद्व्यावृत्तत्वज्ञानपरिग्रहः। नित्यत्वव्या-प्यासमवेतद्रव्यत्ववान् शब्द इत्याकारकनिश्चयादेरित्यर्थः। तदादायैव = विरोधिकोट्य-नुमितिसामग्रीकालीनत्वमादायैव। सद्धेतौ = अनित्यत्वसाध्यकशब्दत्वादौ। दशावि-शेषे = असाधारण्यादिभ्रमकाले। ज्ञाननिष्ठेति परामर्शादिनिष्ठेत्यर्थकम्। हेतोः = तादृशशब्दत्वादेः। तस्य = विरोधिकोट्यनुमितिसामग्रीकालीनत्वस्य।

ननु तादृशसामग्रीकालीनत्वं तादृशसामग्रीकालनिरूपिताधेयत्वं तच्चाधेयव्यक्ति-भेदात् भिन्नमेव, तथाच परामर्शरूपज्ञाननिष्ठाधेयतायाः परामर्श एव विद्यमानतया कथं तादृशकालीनत्वमादाय शब्दत्वादावसाधारण्ये लक्षणसमन्वयः? परामर्शनिष्ठस्य तादृशसामग्रीकालीनत्वरूपतत्कालनिरूपिताधेयत्वस्य शब्दत्वादौ विरहादित्यत आह तत्कालेति। तादृशसामग्रीकालेत्यर्थकम्।

❀ दीधितिः ❀

तन्न, तद्वत्त्वं हि हेतोर्नाभेदेन, बाधे तदभावात्। अत एव नाश्रयतया,

❀ गादाधरी ❀

तत्कालीनत्वस्याधेयभेदेन भेदानभ्युपगमात्, अभ्युपगमे वा आधेयतासम्बन्धेन तत्कालस्यावच्छेदकतया तमादायैव लक्षणसमन्वयादिति भावः। नाभेदेनेति। विवक्षितुं शक्यमिति शेषः।

साध्याभाववद्वृत्तित्वादिविशिष्टसाधनरूपदोषस्याभेदसम्बन्धेन हेतौ सत्वात्तेन सम्बन्धेन तद्वत्त्वविवक्षायां न व्यभिचारादावप्रसक्तिरतः बाधे तदभावादिति।वह्न्यभाववद्ह्रदादिरूपबाधे धूमादिरूपहेत्वभेदासत्त्वादित्यर्थः तथा च तत्राव्याप्तिरिति भावः अत एव=बाधेऽव्याप्तेरेव, नाश्रयतया तद्वत्त्वम्

❀ चन्द्रकला ❀

भेदानभ्युपगमादिति। तथा च परामर्शरूपज्ञाननिष्ठतादृशसामग्रीकालनिरूपिताधेयतातः शब्दत्वादिनिष्ठतादृशाधेयताया भेदविरहात् तादृशसामग्रीकालनिरूपिताधेयत्वरूपतादृशसामग्रीकालीनत्वमादायैव शब्दत्वादिसद्धेतौ दशाविशेषे लक्षणसमन्वय इति भावः।

ननु तत्कालनिरूपिताधेयताया आधेयव्यक्तिभेदेन भेदानभ्युपगमे परामर्शादिनिष्ठविरोध्यनुमितिसामग्रीकालीनत्ववत् शब्दत्वमित्यपि प्रमाप्रतीतिः स्यादतोऽवच्छेदकभेदेनाधेयताभेदोऽवश्यं स्वीकरणीय इत्यत आह अभ्युपगमे वेति। तत्कालनिरूपिताधेयत्वस्येत्यादिः।

अवच्छेदकतयेति। तथाच आधेयतासम्बन्धेन विरोधिकोट्यनुमितिसामग्रीकालवत्त्वेनैव परामर्शादेरनुमितिप्रतिबन्धकतया तादृशकालस्य चाधेयतासम्बन्धेन परामर्श इव शब्दत्वादावप्यक्षतत्वात् तत्र लक्षणसमन्वय इति तु परमार्थः। तमादायैव=तादृशसामग्रीकालमादायैव। लक्षणेति। शब्दत्वादिसद्धेतावित्यादिः

ज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकत्वं यदि हेतावभेदेन तदा धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपतादृशप्रतिबन्धकतावच्छेदकव्यभिचाराभेदस्य वह्निरूपहेतौ सत्त्वेन तत्र लक्षणसमन्वयसम्भवेऽपि ह्रदो वह्निमान् धूमादित्यादौ बाधिते धूमादिहेतावव्याप्तिः, वह्न्यभावविशिष्टह्रदरूपबाधाभेदस्य धूमादौ विरहात्।

निरुक्तबाधितहेतावव्याप्तिभयेन आश्रयतासम्बन्धेनापि तद्वत्त्वं वक्तुमशक्यम्, वह्न्यभावविशिष्टह्रदाश्रयताया धूमेऽभावादित्याह साध्याभावेति।

ननु समूहालम्बनैकज्ञानविषयत्वसम्बन्धेन वह्न्यभावविशिष्टह्रदाश्रयताया धूमे

❀ दीधितिः ❀

**वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च, साध्याभाववत्पक्षस्यैव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्ध-**

❀ गादाधरी ❀

विविद्धार्हमिति शेषः। धूमादेर्वह्न्यभाववद्ह्रदाद्यनाश्रयतया एकज्ञानविषयत्वादिरूपसम्बन्धस्य आधारत्वानिर्वाहकत्वादिति भावः। अव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह वह्निव्यभिचारीति। ननु हेतुनिष्ठसाध्यभाववद्वृत्तित्वादिरूपविषय एव प्रतिबन्धकतावच्छेदको न तु तद्विशिष्टद्रव्यत्वादिः तदाश्रयश्च न धूमादिरित्याशङ्कां निराकरोति साध्याभाववदिति। साध्याभाववद्वृत्तिहेतोर्ज्ञानस्येति = तादृशहेतुविषयकज्ञानस्येत्यर्थः। तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमपि विषयतया अवच्छेदकमिति भावः। ननु धूमादेस्तादृशधर्मवत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इत्यादिव्यवहारस्य नापत्तिसम्भवः, उक्तयुक्त्या तद्धेतुकानुमितिविरोधिरूपवत्त्वस्यैव तत्र दुष्टताव्यवहारनियामकत्वात्, अन्यथा तवाप्यप्रतीकारा-

❀ चन्द्रकला ❀

सत्त्वात् कथमाश्रयत्वसम्बन्धेन तद्वत्त्वोक्तौ बाधितहेतावव्याप्तिरित्यत आह एकज्ञानेति। समूहालम्बनबाधबाधितविषयकैकज्ञानेत्यर्थकम्।

आधारत्वेति। तादृशैकज्ञानविषयत्वस्य वृत्त्यनियामकतया तेन सम्बन्धेनाश्रयत्वस्यैवाप्रसिद्धिरिति हृदयम्।

अव्याप्तिमिति। आश्रयतयेत्यादिः। अतिव्याप्तिमप्याहेति। वह्निमान् द्रव्यत्वादित्यादौ वह्न्यभाववद्वृत्तित्वविशिष्टद्रव्यत्वरूपव्यभिचारस्य आश्रयतासम्बन्धेन वह्निसाध्यकधूमादावपि सत्त्वेन तत्र सद्धेतावतिव्याप्तिमप्याहेत्यर्थः।

तदाश्रयः = केवलवह्न्यभाववद्वृत्तित्वस्याश्रयः। न धूमादिरिति। तथाच कथं धूमादिसद्धेतावतिव्याप्तिरिति भावः।

विषयतयेति। विषयितासम्बन्धेन ज्ञाननिष्ठं सदेव तादृशद्रव्यत्वं प्रतिबन्धकतावच्छेदकमेवेत्यर्थः। तद्धेतुकेति। वह्निसाध्यकधूमादिहेतुकानुमितिप्रतिबन्धकतावच्छेदकतादृशरूपवत्त्वस्यैवेत्यर्थः। वह्निमान् धूमादित्यादौ च तादृशरूपमेवाप्रसिद्धमित्याशयः।

अन्यथेति। तद्धेतुकानुमितिविरोधिरूपवत्त्वस्य दुष्टताव्यवहारनियामकत्वानभ्युपगमे इत्यर्थः। तवापि = दोषवत्त्वं दुष्टत्वमिति वदतोऽपि। अप्रतीकारादिति।

॥ दीधितिः ॥

कत्वात् साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात्। सत्तादिसाध्यके ज्ञाने अतिप्रसङ्गाच्च यथाकथञ्चित् तद्वत्त्वस्य चातिप्रसञ्जकत्वात्, विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो

॥ गादाधरी ॥

दित्यतोऽन्यत्रातिप्रसङ्गमाह साधारण्यादिविषयकत्वस्येति। ज्ञाननिष्ठस्य = ज्ञानवृत्तित्वविशिष्टस्य। सत्तादीति। सत्तावान् ज्ञानादित्यादौ ज्ञानहेतुकसत्ताद्यनुमितिप्रतिबन्धकतावच्छेदकं ज्ञानांशे सत्ताद्यभाववद्वृत्तित्वावगाहित्वमादाय सत्त्वे साध्ये ज्ञानं दुष्टमित्यादिव्यवहारापत्तेरित्यर्थः। येन केनापि सम्बन्धेन तद्वत्त्वं विवक्षणीयमित्यपि दूषयति यथाकथञ्चिदिति। अतिप्रसञ्जकत्वादिति। उक्तधर्ममादाय सत्तादिसाध्यकज्ञाने धूमाद्यंशे यद्वह्न्यभाववद्वृत्तित्वावगाहित्वम्, एकज्ञानविषयत्वादिसम्बन्धेन तद्वत्त्वमादाय वह्न्यादिसाध्यकधूमादावपि दुष्टत्वव्यवहारापत्तेरित्यर्थः। सत्प्रतिपक्षस्थले विरोधिसामग्रीसमकालीनत्वेन प्रतिबन्धकतामादाय यल्लक्षणसत्त्वमुपपादितं तद् दूषयति विरोधिसामग्रीति।

॥ चन्द्रकला ॥

वह्न्यभाववद्वृत्तित्वविशिष्टद्रव्यत्वरूपव्यभिचारदोषवत्त्वस्य आश्रयतया एकज्ञानविषयतया वा धूमादौ सत्त्वात् वह्निसाधने धूमो दुष्ट इतिव्यवहारापत्तेरशक्यवारणत्वादित्यर्थः।

सत्तासाध्यकज्ञानरूपसद्धेतावतिव्याप्तिमुपपादयति ज्ञानांशे इत्यादि। ज्ञानं दुष्टमिति। ज्ञानहेतुकानुमितिप्रतिबन्धकतावच्छेदकं यत् ज्ञाननिष्ठं सत्ताऽभाववद्वृत्तित्वविषयकत्वं तस्य ज्ञान एवानपायादिति भावः।

तद्वत्त्वम् = तादृशानुमितिप्रतिबन्धकतावच्छेदकवत्त्वम्। उक्तधर्मेति। ज्ञाननिष्ठसत्ताभाववद्वृत्तित्वविषयकत्वरूपधर्ममादायेत्यर्थः।

दुष्टत्वव्यवहारापत्तेरिति। वह्न्यभाववद्वृत्तित्वं धूमश्चेत्याकारकैकसमूहालम्बनविषयताया धूमे सत्त्वात् तेन सम्बन्धेन धूमाद्यंशे वह्न्यभाववद्वृत्तित्वावगाहित्वस्यापि धूमे वर्त्तमानत्वादित्याशयः।

विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकतानिराकरणपरं स्वसाध्येति दीधितिग्रन्थं व्याचष्टे स्वजन्येति। तादृशसामग्रीकालीनपरामर्शजन्येत्यर्थकम्। एकस्मिन्नेव परामर्शे स्वसाध्यानुमितिकारणत्वं तत्प्रतिबन्धकत्वञ्च

❀ दीधितिः ❀

**न स्वसाध्यकानुमितेः प्रतिवन्धको मणिसमवहितो वह्निरिव दाहस्य ।**

❀ गादाधरी ❀

न स्वसाध्यकानुमितेः प्रतिवन्धक इति = न स्वजन्यानुमितिप्रतिवन्धक इत्यर्थः । कारणत्वप्रतिबन्धकत्वयोरेकत्रानभ्युपगमादिति हृदयम् । विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्धिसूचनायाह मणीति । न प्रतिबन्धक इत्यनुषज्यते । तथाच विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शस्य स्वसाध्यकानुमितिप्रतिवन्धकत्वे मणिसमवहितत्वेन वह्न्यादीनामपि दाहप्रतिबन्धकत्वापत्तिः । मणिसमवहितत्वापेक्षया लाघवेन मणित्वेनैव प्रतिबन्धकता कल्प्यते इति चेत्, तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात् तादृशसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वं प्रकृतेऽपि कल्पयितुमुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय लक्षणं सङ्गमनीयं, तस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः ।

❀ चन्द्रकला ❀

सर्वानुभवविरुद्धमित्याह कारणत्वेति । एकत्र तयोः समावेशाभ्युपगमे तु सुन्दोपसुन्दन्यायेन परस्परं व्याहन्येतेति भावः ।

नन्वेकत्रैकरूपेण कारणत्वप्रतिबन्धकत्वयोरेवानभ्युपगमः परामर्शत्वेन स्वसाध्यानुमितिकारणतायाः विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन तु तादृशानुमितिप्रतिबन्धकतायास्तत्राभ्युपगमे न कोऽपि दोष इत्येवम् आशंक्य मणीत्यादिदीधितिग्रन्थमवतारयति विभिन्नेति ।

परामर्शत्वेन कारणतायाः विरोधिसामग्रीकालीनत्वेन तत्रैव परामर्शे प्रतिबन्धकतायाः स्वीकारे दोषमाह तथाचेति । विभिन्नरूपेण कारणत्वप्रतिबन्धकत्वयोरभ्युपगमे चेत्यर्थः ।

दाहप्रतिबन्धकत्वापत्तिरिति । तथाच वह्नित्वेन दाहकारणत्वं मणिसमवहितत्वेन च वह्नौ दाहप्रतिबन्धकत्वं यथा न स्वीकरणीयं तथा विरोधिसामग्रीकालीनत्वेनापि स्वसाध्यानुमितिजनकीभूतस्य परामर्शस्य तादृशानुमितिप्रतिबन्धकत्वं न कल्पयितुं शक्यमिति भावः ।

ननु मणित्वापेक्षया मणिसमवहितत्वस्य गुरुतयैव न दाहप्रतिबन्धकतावच्छेदकत्वं युक्तमित्याशंकां निराकरोति इति चेदिति । लाघवं प्रदर्शयति । तादृशसामग्रीत्वेनेति । विरोधिकोट्यनुमितिसामग्रीत्वेनेत्यर्थः । इति तु मिश्रमतम् ।

दीधितिकारमतमाह विरोधीति । तस्य = विरोधिसामग्रीकालीनत्वस्य । तथाच

❀ दीधितिः ❀

अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तम् , भवति च प्रतिबन्धकीभूतविरोधिसाम-

❀ गादाधरी ❀

कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपम् प्रतिबन्धकतावच्छेदकत्वमेवात्र विवक्षितं न तु कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपम्, तच्च विरोधि-सामग्रीकालीनत्वेऽप्यक्षतमेवेत्याह अथेत्यादिना । यद्धर्मेति = यादृशधर्म-विशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकोऽनुमित्यनुत्पादस्तादृशरूपपरमे-वेत्यर्थः । निश्चयत्वनिवेशात् बाधादिविषयकसंशयसंस्काराव्यवहितोत्तर-क्षणे कदाचिदनुमित्युत्पादेऽपि न क्षतिः । अत्र = एतल्लक्षणे, प्रतिबन्धकता-वच्छेदकमुक्तम् = प्रतिबन्धकतावच्छेदकपदेन विवक्षितम् । भवति चेति। विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धकसमवहिता-

❀ चन्द्रकला ❀

विरोधिसामग्रीकालीनत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वं सुतरामेव निर्विवाद मित्यसाधारणादौ दशाविशेषेऽपि भवन्मते लक्षणसमन्वयो न सम्भवतीति हृदयम् ।

विरोधिकोट्यनुमितिसामग्रीकालीनत्वविशिष्टपरामर्शादेरवश्यं स्वसाध्यानुमिति-प्रतिबन्धकत्वं वक्तव्यम् , तादृशविशिष्टपरामर्शसत्त्वे तादृशानुमितेरनुदयात् यादृश-धर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वावच्छेदेनानुमित्यनुत्पत्तिस्तादृशधर्मस्यापि प्रति-बन्धकतावच्छेदकत्वात् ।

नचैवं मणिसमवहितत्वेनापि वह्न्यादेः दाहप्रतिबन्धकत्वापत्तिरिति वाच्यम् , इष्टत्वादित्याशयवतां दीधितिकृताम् अथेत्यादिग्रन्थं व्याख्यातुमुपक्रमते कार्येति । तच्च = कार्यानुत्पादव्याप्यतावच्छेदकत्वञ्च । यादृशेति । तथाचैतन्मते ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतावच्छेदकत्वं वह्न्यभावविशिष्टह्रदादेरेव विषयिता-सम्बन्धेन तद्विशिष्टनिश्चयाव्यवहितोत्तरक्षणत्व व्यापकतायास्तादृशानुमित्यनुत्पादेऽ-क्षतत्वात् । एवञ्च वह्न्यभावविशिष्टह्रदादिकमादायैव तादृशस्थले हेतोर्दुष्टत्व-मित्याशयः । निश्चयपदव्यावृत्तिमाह निश्चयत्वेति । नक्षतिः = न सम्भवः । व्यापकत्वनिवेशात् पर्वतो वह्निमान् धूमादित्यादौ न पूर्वोक्तयुक्त्या पाषाणमयत्व-वत्पर्वतादिकमादाय धूमस्य दुष्टत्वापत्तिरितिध्येयम् ।

विरोधिकोट्यनुमितिसामग्रीकालीनत्वस्य यथोक्तप्रतिबन्धकतावच्छेदकत्वं दीधितिकृदुक्तं व्यवस्थापयति विरोधीति ।

* दीधितिः *

ग्रीकालीनत्वादिविशिष्टपरामर्शो तथा इति चेत्? न वा कालादिसाधारणकारणघटिता सामग्री क्वापि प्रतिबन्धिका, विशेषतस्तत्र तत्सत्त्वे कार्य्योत्पादस्य दुर्व्वारत्वात्, किन्तु विरोधिपरामर्शस्तथा।

* गादाधरी *

व्यवहितोत्तरक्षणे कार्य्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वदर्शनाय। तथा = अवश्यमनुमित्यनुत्पादः। विरोधिसामग्र्याः प्रतिबन्धकत्वं यदुक्तं तदेवादौ दूषयति नवेति। नहीत्यर्थः। कालादीति। घटितान्तं हेतुगर्भविशेषणम्, तथा च कारणसमुदायः सामग्री, सा च क्वचिदपि न प्रतिबन्धिका, कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात्, तेषाञ्च प्रतिबन्धकतावच्छेदककोटौ निवेशस्य निष्फलत्वात्, प्रतिबध्यकार्य्येऽपि तेषामनुगुणत्वादित्यर्थः।

सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनुमितिप्रतिबन्धकत्वमत्यन्तासम्भवदुक्तिकमेव, तत्र फलानुत्पादेन सामग्र्या एवासत्वादित्याह विशेषत इत्यादिना। तत्र = सत्प्रतिपक्षस्थले, सामग्री न प्रतिबन्धिकेत्यनुषज्यते। कार्योत्पादस्य दुर्वारत्वात्—सामग्र्याः कार्य्यनियतत्वादिति भावः। ननु तर्हि तत्र परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यत इत्यत आह किन्त्विति। विरोधिपरामर्शः = साध्याभावव्याप्यवत्तानिश्चयः, तथा = अनुमितिप्रतिबन्धकः।

* चन्द्रकला *

आवश्यकत्वदर्शनाय = अवश्यं तत्र प्रतिबन्धकतावच्छेदकत्वमस्तीति प्रदशनाय। तथाच तादृशसामग्रीकालीनत्वमादायैव दशाविशेषे सद्धेतौ लक्षणं संगमनीयमिति हृदयम्। हेतुगर्भेति। यतः कालादीनां न प्रतिबन्धकत्वमत एवेत्यर्थकम्। कालादिसाधारणकारणघटिततादृशसामग्रीकालीनत्वस्य प्रतिबन्धकतावच्छेदकत्वं निराकरोति तथाचेति। तेषाम् = कालादीनाम्। तेषामनुगुणत्वात् = कालादीनामनुमित्यादिकार्यप्रयोजकत्वात्। तत्र = सत्प्रतिपक्षस्थले। फलानुत्पादेन = विरोधिकोट्यनुमित्यनुदयेन। सामग्र्याः कार्यनियतत्वादिति। तथाच तादृशसामग्रीसत्त्वे सत्प्रतिपक्षितत्वमेव हेतौ दुर्लभमिति भावः। तत्र = सत्प्रतिपक्षस्थले। अनुमितिप्रतिबन्धक इति। तद्वत्ताबुद्धौ तदभावनिश्चयस्येव तदभावव्याप्यनिश्चयस्यापि प्रतिबन्धकतया सत्प्रतिपक्षतादशायाम् उभयपरामर्शस्यैव परस्परानुमितिप्रतिबन्धनिर्वाह

❀ दीधितिः ❀

यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावतारे नानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यताम् ,

❀ गादाधरी ❀

ननु यत्र वह्न्यभावव्याप्यवत्तापरामर्शः वह्न्यभावाभाववान् पक्ष इति बाधनिश्चयश्च वर्त्तते तत्र वह्निव्याप्यवत्ताज्ञानेन वह्न्यनुमितिर्जन्यत इत्यनुभवसिद्धम् , विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे च तन्नोपपद्यते इत्यत आह यदि चेति । तत्सत्त्वेऽपि = विरोधिपरामर्शसत्त्वेऽपि, तत्साध्ये बाधावतारे = तादृशपरामर्शानुमेयविरोधिकोटेः पक्षेऽभावनिश्चयदशायाम् , नानुमितिप्रतिबन्धः = न प्रकृतसाध्यानुमित्यनुत्पादः । अप्रामाण्यग्रहाभावस्येत्यनन्तरं वैशिष्ट्यमित्यनुषज्यते । तदभावस्य = विरोधिकोटिविरहनिश्चयाभावस्य, तत्र = विरोधिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे । निवेश्यतामिति । अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे तत्परामर्शे भ्रमत्वग्रहानन्तरमेवानुमितिर्न त्वन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्यनिवेशेनैवोपपत्तौ तादृशबाधग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चेत्युक्तम् ।

❀ चन्द्रकला ❀

इत्यभिप्रायः । किन्त्वित्यादिदीधितिमवतारयति नन्विति । यत्र = यादृशस्थले । अनुभवसिद्धमिति । वह्न्यभावव्याप्यवत्तापरामर्शस्य स्वसाध्यबाधेन हीनबलत्वादिति तात्पर्यम् । वह्न्यभावव्याप्यवान् वह्निव्याप्यवांश्च पर्वत इत्याकारकपरामर्शद्वयकाले वह्न्यभावाभाववानिति वह्न्यभावबाधनिश्चयसत्त्वेऽपि वह्न्यनुमित्युत्पादस्य सविवादतया दीधितौ यदि चेत्युक्तमित्यवधेयम् ।

पक्षे = पर्वतादौ । अभावेति । वह्न्याद्यभावाभावनिश्चय इत्यर्थः । परामर्शप्रतिबन्धकतावच्छेदकगर्भे इति । अप्रामाण्यज्ञानाभावविशिष्टतदभावव्याप्यवत्तानिश्चयस्य यथा तत्प्रकारकबुद्धिप्रतिबन्धकत्वं तथा स्वसाध्यबाधनिश्चयाभावविशिष्टस्यापि तस्य तत्प्रतिबन्धकत्वं कल्पनीयमिति तादृशबाधनिश्चयाभावस्यापि प्रतिबन्धकतावच्छेदकत्वमावश्यकमित्यर्थः । यदीत्याद्यभिधानप्रयोजनमाह अत्रेति । दीधितिग्रन्थे इत्यर्थः । विपरीतेति । वह्न्याद्यभावव्याप्यवत्तापरामर्शदशायामित्यर्थः । तत्कोटीति । वह्न्याद्यभावाभावनिश्चयसत्त्वे इत्यर्थः । तत्परामर्श इति । वह्न्याद्य-

* दीधितिः *

यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेपीत्यतिप्रसङ्गः। न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि।

* गादाधरी *

अप्रामाण्यग्रहाभाववैशिष्ट्यस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वञ्च दर्शितम्।

नन्वस्तु विरोधिपरामर्शमात्रं प्रतिबन्धकं तथापि तद्घटितविरोधिसामग्रीकालीनज्ञानस्य फलानुत्पादनियतत्वात्तादृशसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकत्वं दुरपह्नवमेव, एवं विरोधितथाविधपरामर्शकालीनत्वमादायापि दशाविशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यत एवेत्यतो विरोधिपरामर्शकालीनत्वसमशीलबाधादिभ्रमकालीनत्वमादाय सद्धेतावतिप्रसङ्गमाह यथाचेति। तथाविधेति = विरोधिभ्रमप्रमासाधारणेत्यर्थः। अपीत्यनन्तरं नानुमितिरित्यनुषज्यते, तथाच तादृशबाधादिकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्ववद्भवत्येवेत्यतोऽतिप्रसङ्ग इति। बाधादेरनित्यदोषतायाः केनाप्यनुपगमे न इष्टापत्त्यनवकाशादिति भावः। विरोधिपरामर्शकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोपपादयितुं शक्यत इत्याह न चेति। नहीत्यर्थः। अतीतादाविति। तथाचाती-

* चन्द्रकला *

भावव्याप्यवत्तापरामर्शे अप्रामाण्यग्रहानन्तरमेव वह्नयाद्यनुमितिरित्यर्थः। दृष्टान्तविधयेति। अप्रामाण्यग्रहाभावस्य प्रतिबन्धकतावच्छेदकत्वं सर्ववादिसिद्धमित्याशयः। फलानुत्पादनियतत्वात् = फलानुत्पत्तिव्याप्यत्वात्। सद्धेतावतिप्रसंगमाहेति। भ्रमप्रमासाधारणविरोधिकोटिपरामर्शघटितसामग्रीकालीनत्वेन परामर्शस्य स्वसाध्यानुमितिप्रतिबन्धकत्वाभ्युपगमे पर्वतो वह्निमान् धूमादित्यादावपि धूमस्य दुष्टत्वापत्तिः, तुल्ययुक्त्या वह्नयभाववत्पर्वतरूपबाधभ्रमकालीनत्वेनापि वह्निव्याप्यवत्तापरामर्शस्य वह्नयाद्यनुमितिप्रतिबन्धकताया आवश्यकतया तादृशभ्रमकालीनत्वस्य धूमादिनिष्ठत्वे बाधकाभावादित्यभिप्रायः।

❀ दीधितिः ❀

यदपि यद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव दुष्टत्वं वाच्यम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा,

❀ गादाधरी ❀

तादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्धं सत्प्रतिपक्षितत्वं नोपपद्यत इति भावः।

सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षस्याप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषयप्रसिद्धविरोधिव्याप्त्यादिरेव दोष इति मतं दूषयति यदपीति। यद्विषयकत्वेनेति तृतीयार्थः स्वरूपसम्बन्धरूपावच्छेदकत्वं न त्वनतिरिक्तवृत्तित्वम्, तथासति विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः। प्रतिबन्धकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदकधर्मेऽतिप्रसङ्गवारणाय।

❀ चन्द्रकला ❀

ननु बाधादिभ्रमकालीनत्वमादायापि हेतौ दुष्टत्वमिष्टमेवेत्यत आह बाधादेरिति। नोपपद्यत इति। अतीतादिसद्धेतौ विरोधिकोट्यनुमितिसामग्रीकालीनत्वस्य विरहात् हेतोरेवातीतत्वादिति भावः।

सद्धेतौ=तादृशशब्दत्वादौ। विरोधीति नित्यत्वव्याप्यासमवेतद्रव्यत्वादिमच्छब्दस्याऽप्रसिद्धावपीत्यर्थः। दोषत्वानुपपत्तेरिति। विरोधिव्याप्तिविषयकत्वस्य हेत्वाद्यविषयकेऽपि ज्ञाने वर्त्तमानतया तत्राऽनुमितिप्रतिबन्धकत्वविरहेण विरोधिव्याप्त्यादिविषयकत्वस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् विरोधिव्याप्त्यादेर्यत्पदेनोपादानाऽसम्भवादिति तु तत्त्वम्।

विरोधिव्याप्त्यादेरिव पक्षधर्मताया अपि अनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वात् पक्षधर्मतापरिग्रहाय व्याप्त्यादिरेवेत्यत्रादिपदम्। एतच्चाग्रे स्फुटीभविष्यति।

ननु यद्विषयकत्वेनानुमितिप्रतिबन्धकत्वमित्युक्तावेव सामञ्जस्ये ज्ञानस्य इत्यत्र ज्ञानपदं व्यर्थमित्यत आह ज्ञाननिष्ठत्वेति। निश्चयनिष्ठत्वेत्यर्थकम्।

कामिनीज्ञानान्यज्ञानमात्रं प्रत्येव कामिनीजिज्ञासायाः प्रतिबन्धकतया ज्ञानपदानुपादाने कामिनीजिज्ञासानिष्ठा या प्रकृतानुमितिप्रतिबन्धकता तदवच्छेदकतायाः कामिनीत्वे कामिनीज्ञानत्वे वा सत्त्वेन तत्र दोषलक्षणस्यातिव्याप्तिः, तादृशधर्मवति च दुष्टलक्षणस्यातिव्याप्तिरित्याह कामिनीति।

* दीधितिः *

तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयकत्वादिति ।

* गादाधरी *

ननु विरोधिकोटिव्याप्यत्वस्य पर्व्वतो वह्निमान् धूमात् पर्व्वतो न वह्निमान् जलत्वादित्यादौ प्रतिबन्धकीभूतज्ञानविषयसमवायादिसम्बन्धावच्छिन्नपक्षधर्म्मतायाश्च प्रकृते हेतावभावात् कथं तस्य दुष्टत्वमत आह तद्वत्त्वमपीति । विरोधिव्याप्त्यादिमत्त्वमपीत्यर्थः । तज्ज्ञानरूपेति = स्वविषयकज्ञानविषयतात्मकेत्यर्थः । सम्बन्धविशेषस्याविवक्षितत्वादिति भावः ।

तादृशसम्बन्धवत्तां प्रकृतहेतावुपपादयति तस्येति । विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः । समूहालम्बनरूपतयेति । न चैवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षतानुपपत्तिरिति वाच्यम् ,

* चन्द्रकला *

तद्वत्त्वमपीत्यादेरवतरणमाह नन्विति । तथा च पर्वतो वह्निमान् धूमात् पर्वतो वह्न्यभाववान् जलत्वादित्यादौ धूमादेः जलत्वादेश्च सत्प्रतिपक्षितत्वं न स्यात् अनुमितिप्रतिबन्धकतावच्छेदकत्वविरोधिवह्निव्याप्यत्वस्य जलत्वे वह्न्यभावव्याप्यत्वस्य च धूमे विरहात्, संयोगसम्बन्धावच्छिन्नपर्वतवृत्तितात्मकपक्षधर्मतायाः समवायसम्बन्धावच्छिन्नपर्वतवृत्तितात्मकपक्षधर्मतायाश्च परस्परानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वेऽपि तादृशसमवायावच्छिन्नपर्वतवृत्तिताया धूमे तादृशसंयोगावच्छिन्नपर्वतवृत्तितायाश्च जलत्वेऽसत्त्वात्, सम्बन्धान्तरावच्छिन्नपर्वतवृत्तितायाश्च परस्परानुमित्यविरोधित्वादित्याशयेन दीधितिकार आह तद्वत्त्वमपीतीति भावः ।

स्वविषयकेति । स्वं विरोधिव्याप्त्यादिः तद्विषयकं यत् प्रकृतहेतुविषयकं समूहालम्बनज्ञानं तद्विषयतात्मकसम्बन्धेनेत्यर्थः । सम्बन्धविशेषस्येति । संयोगस्वरूपादेरित्यर्थः ।

तथाच वह्निव्याप्यधूमवान् वह्न्यभावव्याप्यजलत्ववांश्च पर्वत इत्याकारकसमूहालम्बनविरोधिव्याप्तिविषयकज्ञानविषयताया धूमे जलत्वे च सत्त्वेन तादृशविषयतात्मकसम्बन्धेन विरोधिव्याप्तिसम्बन्धिताया धूमे जलत्वे चानपायात्तयोर्दुष्टत्वं निर्विवादमित्याशयः ।

ननु यत्र प्रथमं वह्निव्याप्यधूमवान् पर्वत इतिज्ञानं ततो वह्न्यभावव्याप्य-

❀ दीधितिः ❀

तदपि तुच्छम्, साध्याभाववत्पक्षविषयकत्वेन साध्याभाववत्पक्षज्ञानप्रमात्वविषयकत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः।

❀ गादाधरी ❀

तत्रापि तादृशव्याप्त्यादिप्रकृतहेतुविषयकपरमेश्वरज्ञानादिकमादाय तद्वत्तोपपत्तेः। साध्याभाववत्पक्षविषयकत्वेन = साध्याभावप्रकारकपक्षावगाहित्वेन। साध्याभाववत्पक्षज्ञानेति = साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः। मतभेदेन विकल्पः, तस्य = तादृशज्ञानस्य, साध्यवत्यपि पक्षे = पक्षे साध्यवत्यपि सति, पक्षस्य साध्यवत्त्वे सत्यपीति यावत्।

पर्व्वतो वह्निमान् धूमादित्यादौ भ्रमात्मकबाधादिज्ञाननिष्ठप्रतिबन्धकतावच्छेदकविषयितानिरूपकवह्न्यभावादेः स्वविषयकज्ञानविषयत्वादिसम्बन्धेन वैशिष्ट्यस्य हेतौ सत्त्वादिति भावः।

❀ चन्द्रकला ❀

जलवांश्च पर्वत इतिज्ञानं समूहालम्बनानात्मकमेव जातं तत्र हेतोर्दुष्टता न स्यात् परस्परानुमितिविरोधिव्याप्त्यादिविषयतायाः परस्परहेतावसत्त्वादिति न चैवमित्यादिनाऽऽशंक्य समाधत्ते तत्रापीति। क्रमिकपरामर्शद्वयस्थलेऽपीत्यर्थः।

तद्वत्त्वोपपत्तेरिति। तादृशक्रमिकपरामर्शस्थले तत्पुरुषस्य विरोधिव्याप्त्यादिविषयकसमूहालम्बनज्ञानोत्पादेऽपि वह्निव्याप्तिप्रकारकधूमविशेष्यकवह्न्यभावव्याप्तिप्रकारकजलत्वविशेष्यकपरमेश्वरीयविरोधिव्याप्त्यादिविषयकज्ञानविषयतायाः प्रकृतहेतुनिष्ठतया तादृशविषयतात्मकसम्बन्धेन विरोधिव्याप्त्यादिमत्त्वस्य प्रकृतहेतावनपायान्न क्रमिकपरामर्शस्थलेऽपि सत्प्रतिपक्षतारूपदुष्टत्वानुपपत्तिरित्यभिप्रायः।

तदपि तुच्छमित्यादिदीधितिं व्याचष्टे साध्याभावप्रकारेणेति। साध्याभावत्वावच्छिन्नप्रकारताकपक्षविषयताकत्वेनेत्यर्थः। मतभेदेन = मिश्रादिमतभेदेन। तादृशज्ञानस्य = साध्याभाववत्पक्षावगाहिज्ञानस्य।

अतिव्याप्तिं संगमयितुं भावमाह पर्वत इति। यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तद्वत्त्वं दुष्टत्वमित्युक्तौ ह्रदो वह्निमानित्यादौ वह्न्यभावादिविषयितायाः तादृशप्रतिबन्धकतावच्छेदकतया तद्विषयकहेतुविषयकसमूहालम्बनज्ञानविषयतात्मकसम्बन्धेन वह्न्यभावादिमत्त्वस्य प्रकृत-

❀ दीधितिः ❀

**विशिष्टविषयकत्वेन प्रतिबन्धकत्वम्, विशिष्टञ्च**

❀ गादाधरी ❀

इदमुपलक्षणम्—वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यकालेऽपि तद्विषयकविरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बोध्यः, तत्रापि पक्षांशे तद्विशिष्टविशेषणकसमूहालम्बनज्ञानसम्बन्धेन हेतौ तद्वैशिष्ट्यस-म्भवात्।

अनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयमित्यभिप्रायेण बाध-भ्रमप्रतिबन्धकतामादायातिप्रसङ्गस्य उद्धारमाशङ्कते विशिष्टेति। साध्या-भावविशिष्टपक्षविषयकत्वमेव प्रतिबन्धकतानतिरिक्तवृत्ति न तु साध्या-भावादिमात्रविषयकत्वमित्यर्थः। विशिष्टञ्च = साध्याभावविशिष्टपक्षश्च,

❀ चन्द्रकला ❀

हेतौ वर्त्तमानतया तस्य पूर्वोक्तक्रमेण सत्प्रतिपक्षितसद्धेतोरपि दुष्टत्व-सम्भवेऽपि पर्वतो वह्निमान् धूमादित्यादौ धूमेऽतिव्याप्तिः, पर्वतो वह्न्यभाववानित्याकारकभ्रमीय-वह्न्यभावविषयिताया अपि पर्वतधर्मिकवह्न्यनुमितिप्रतिबन्धकतावच्छेदकतया तादृशवह्न्यभावविषयकधूमविषयकसमूहालम्बनज्ञानविषयतात्मकस्वविषयकज्ञानविष-यत्वसम्बन्धेन वह्न्यभावादिमत्त्वस्य धूमे सत्त्वादित्यभिप्रायः।

निरुक्तलक्षणकर्त्तृनये विरोधिपरामर्शद्वयसंवलनादेव सद्धेतौ सत्प्रतिपक्षत्वमिष्टं नतु विरोधिपरामर्शशून्यकाले, तथा सत्यपि विरोधिपरामर्शशून्यकाले तन्मते पर्वतो वह्निमान्धूमादित्यादौ धूमादिसद्धेतावतिव्याप्तिः, विरोधिव्याप्त्यादिविषयकधूमादिविष-यकसमूहालम्बनज्ञानविषयत्वसम्बन्धेन विरोधिव्याप्त्यादिमत्त्वस्य धूमादौ अक्षतत्वादि-त्याह इदमुपलक्षणमिति।

तद्विषयकेति धूमादिविषयकेत्यर्थकम्। अतिव्याप्तिमुपपादयति तत्रापीति। धूमादिहेतावपीत्यर्थः। तद्वैशिष्ट्यसम्भवात् = विरोधिव्याप्त्यादिमत्त्वसम्भवात्।

यादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टवत्त्वं दुष्टत्वमित्यभिधाने पर्वतो वह्निमान् धूमादित्यादौ केवलवह्न्य-भावमादाय धूमादेर्दुष्टत्ववारणसम्भवेऽपि सत्प्रतिपक्षसंवलनदशायां भवन्मतसिद्धस्य सद्धेतोर्दुष्टत्वस्यानुपपत्तिः, विरोधिव्याप्त्यादिविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् साध्याभावव्याप्यविशिष्टपक्षस्य चाप्रसिद्धत्वाद् यादृशविशिष्टपदेन तस्योपादाना-सम्भवादित्याह अनतिरिक्तेति।

* दीधितिः *

तत्राप्रसिद्धमिति चेत्, तत्किं सर्व्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान्पक्षः प्रसिद्धः। यथाकथञ्चित्सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्तं, धूमादेरपि ज्ञानरूपेण तदाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात्।

* गादाधरी *

तत्र=बाधभ्रमस्थले, सत्प्रतिपक्षस्थले सर्व्वत्र तादृशविशिष्टं प्रसिद्धमित्यभिमानः। भ्रमं निराकरोति तत्किमिति। पक्षावृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् सर्व्वत्रेति। सत्प्रतिपक्षे=सत्प्रतिपक्षतया भवन्मतसिद्धे इत्यर्थः। प्रसिद्ध इति। तथा चानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं विवक्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्व्वारैवेति भावः। तद्वत्त्वघटकसम्बन्धं वितर्क्यापि दूषयति यथाकथञ्चिदिति। अतिप्रसक्तम्=सद्धेतुसाधारणम्, तथाच पर्वतादौ वह्न्यादिमत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भावः। तादृशसम्बन्धस्य धूमादिरूपसद्धेतुसाधारणत्वं स्फुटयति धूमादेरिति। ज्ञानरूपेण=स्वविषयकज्ञानविषयत्वेन तदाश्रयत्वादिना, आदिना एककालीनत्वादिपरिग्रहः, व्यभिचारादिमत्त्वात्=वह्न्यभाववद्वृत्तित्वसत्त्वात्।

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितधर्म्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वमेव दुष्टत्वमिति वा-

* चन्द्रकला *

सर्वत्रेत्यभिधानप्रयोजनमाह पक्षावृत्तीति। ह्रदादिपक्षकवह्न्यादिसाध्यकसत्प्रतिपक्षे इत्यर्थः।

सत्प्रतिपक्षितसद्धेतौ दुष्टत्वानुपपत्तिभयेनैवानतिरिक्तवृत्तित्वरूपप्रतिबन्धकतावच्छेदकताया निवेशाऽसम्भवादाह तथाचेति। दर्शितातिव्याप्तिः=पर्वतो वह्निमान् धूमादित्यादौ बाधभ्रमीयकेवलवह्न्यभावादिमत्त्वमादाय धूमादावतिव्याप्तिः।

दूषयतीति। तद्वत्त्वघटकसम्बन्धोऽपि वक्तुमशक्य इत्याशयः। यथाकथञ्चित्सम्बन्धेन तद्वत्त्वाभिधाने अतिव्याप्तिमुपपादयति तथाचेति। तथा च स्वविषयज्ञानविषयत्वसम्बन्धेन आश्रयत्वसम्बन्धेन एककालीनत्वसम्बन्धेन वा वह्न्यभाववद्वृत्तित्वादेः धूमादिसद्धेतौ सत्त्वात् तस्यापि दुष्टत्वं भवन्मते दुर्वारमितिभावः।

यादृशसम्बन्धेत्यादिदीधितिमवतारयति नन्विति। तेन सम्बन्धेन=तादृश-

❀ दीधितिः ❀

यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वञ्च न सर्व्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन ।

❀ गादाधरी ❀

च्यम् । एवञ्च स्वरूपसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वेनैव व्यभिचारादिज्ञानस्य प्रतिबन्धकतया तेन सम्बन्धेन तद्वत्त्वस्य च प्रकृतहेतावभावात् नातिव्याप्तिरित्याशङ्कां निराकुरुते यादृशेति । सर्वत्र सत्प्रतिपक्षित इति । ह्रदो वह्निमान् धूमादित्यादिस्थले धूमादिरूपहेतौ व्याप्यताघटकसमवायादिसम्बन्धेन वह्न्यभावव्याप्यधूमत्वादिमत्तायाः सत्त्वात् सर्वत्रेत्युक्तम् । क्वचित् सद्धेताविति । सद्धेतुतादशायां क्वचिदित्यर्थः । पर्वतो वह्निमान् धूमादित्यादौ विरोधिपरामर्शासमवधानदशायामपि प्रतिबन्धकतावच्छेदकप्रकारताश्रयवह्न्यभाववद्व्याप्यादेः तादृशप्रकारतावच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भावः ।

यत्तु—ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्वम्, ज्ञानञ्च विशिष्टव्यवहाराद्य-

❀ चन्द्रकला ❀

प्रकारतावच्छेदकस्वरूपसम्बन्धेन । तद्वत्त्वस्य = वह्न्यभाववद्वृत्तित्वादिमत्त्वस्य । हेतौ = वह्निसाधकधूमादिसद्धेतौ । व्याप्यताघटकेति । ह्रदो वह्निमान् धूमवत इत्यादौ जलत्वादेः समवायसम्बन्धेन वह्न्यभावव्याप्यतया तेन सम्बन्धेन वह्न्यभावव्याप्यस्य धूमवत्पर्वतादौ विरहात् तादृशधूमवदादेर्दुष्टत्वानुपपत्तिरित्यर्थः । सर्वत्रेत्युक्तिं समर्थयति ह्रदो वह्निमानिति ।

क्वचित् सद्धेतावप्यतिव्याप्तिं योजयति सद्धेतुतादशायामिति । विरोधिपरामर्शद्वयशून्यतादशायामित्यर्थः । धूमादिवृत्तित्वादिति । तादृशप्रकारतावच्छेदकस्वरूपसम्बन्धेन वह्न्यभावस्य समवायसम्बन्धेन वह्न्यभावव्याप्यस्य धूमत्वादेः धूमादौ वर्त्तमानत्वादित्यर्थः ।

इदमुपलक्षणम्, यत्सम्बन्धावच्छिन्नेत्यादिना दुष्टत्वनिर्वचने धूमत्ववान् पर्वतो वह्निमान् धूमादित्यादौ धूमादेर्दुष्टत्वं न स्यात् तादृशप्रकारतावच्छेदकस्वरूपसम्बन्धेन धूमत्वाभावस्य धूमेऽसत्त्वादित्यपि द्रष्टव्यम् । प्रकारान्तरानुसरणे तु अन्यत्राप्यव्याप्तिरतिव्याप्तिर्वा न सम्भवतीति ध्येयम् ।

कस्यचिन्मतं दूषयितुमुपन्यस्यति यत्त्विति । ज्ञानसम्बन्धेन = स्वविषयकज्ञान-

## ❁ गादाधरी ❁

नुरोधात् कदाचिदेव क्वचिदेव कस्यचित् सम्बन्धः, एवञ्च विरोधिव्या-प्यादेर्ज्ञानं विरोधिपरामर्शदशायामेव प्रकृतहेतौ तत्सम्बन्धः, तदैव तत्र दुष्टताव्यवहारात्, साध्याभावादेर्ज्ञानन्तु तत्र न कदाचिदपि तथा, पर-मेश्वरादिसाधारणं साध्याभावविशिष्टपक्षादेर्ज्ञानन्तु तत्र सर्वदैव इति। तत्तु हास्यास्पदमेव, सकलाभियुक्तपुरुषसाधारणस्य नियतव्यवहारस्या-सिद्धत्वात् वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि सम्भ-वात् ज्ञानस्य नियतसम्बन्धत्वासाधकत्वादिति।

## ❁ चन्द्रकला ❁

वषयतात्मकसम्बन्धेन। तद्वत्त्वम् = तादृशविरोधिव्याप्त्यादिमत्त्वम्। **कस्यचित् सम्बन्ध इति**। न तु सर्वदा सर्वस्येति शेषः।

तथाच विरोधिपरामर्शशून्यतादशायां न सद्धेतावतिव्याप्तिः, तदानीं तादृशज्ञान-विषयत्वादेः सम्बन्धत्वाकल्पनात्, एवं बाधभ्रमस्थलेपीत्याह **एवञ्चेति**। क्वचिदेव कस्यचित् तादृशज्ञानविषयत्वादेः सम्बन्धताकल्पने चेत्यर्थः।

तदैव = विरोधिपरामर्शदशायामेव। ननु बाधस्य नित्यदोषतया कदाचित्तस्य तादृशसम्बन्धत्वमप्रसिद्धमित्यत आह **साध्येति**। तथा = सम्बन्धः। **सर्वदैवेति**। तथा च बाधस्थले स्वविषयकज्ञानविषयत्वादेः सर्वदैव सम्बन्धता वाच्या, तत्र सर्वदैव हेतोर्दुष्टत्वादिति भावः।

यदा यत्र हेतौ यस्य दुष्टताव्यवहारस्तदा तत्रैव ज्ञानस्य तदीयसम्बन्धतेति व्यवहारस्य ज्ञाननिष्ठसम्बन्धतासाधकत्वं न सम्भवतीत्याशयेन दूषयति **हास्यास्पदमेवेति**।

निरुक्तमतस्य हास्यास्पदत्वे युक्तिमाह **सकलेति**। सकलमतमतान्तरवादिपुरु-षादौ वर्तमानस्येत्यर्थः। **नियतेति**। ज्ञाननिष्ठसम्बन्धताव्याप्यस्य व्यवहारस्याऽसि-द्धत्वादित्यर्थः। **वासनेति** मिथ्याज्ञानादिजन्यसंस्कारवतां पुरुषाणामित्यर्थः। **तादृशेति** दुष्टेऽप्यदुष्टत्वव्यवहारस्य सम्भवादित्यर्थः। **ज्ञानस्येत्यादि**। ज्ञाननिष्ठं यत् व्यवहारव्यापकत्वेनाभिमतं सम्बन्धत्वं तत्साधकत्वाभावादित्यर्थः। व्यवहारस्येति शेषः।

तथाच मतान्तरवादिनां पुरुषाणामपि नियमेन एक एव व्यवहारो भवतीति न वक्तुं शक्यते, मिथ्याधीजन्यसंस्कारवतां दुष्टेऽदुष्टत्वस्य अदुष्टे दुष्टत्वस्य व्यवहारदर्श-नात् व्यवहारस्य ज्ञाननिष्ठसम्बन्धत्वाव्याप्यत्वात्, एवञ्च बाधादिभ्रममादाय सद्धेता-

* चिन्तामणिः *

**यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वम्, तथापि ज्ञायमानस्याऽऽभासस्यांऽत्र लक्षणम् ।**

* दीधितिः *

यद्यपीति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् ।

* गादाधरी *

यद्विषयकत्वेनेति यथाश्रुतकल्पे कामिनीजिज्ञासादिविषये अतिव्याप्तिरित्यसाधारणप्रतिबन्धकताघटितमेव लक्षणं करणीयं तत्रैवाशङ्कते मूले यद्यपीति। समाधानमपि ज्ञायमानं सदित्यादितृतीयलक्षणाभिप्रायेण "तथापी" त्यादिनेति बोध्यम् । बाध-सत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वमभिधाय बाध-सत्प्रतिपक्षयोरनुमितिमात्रवृत्तिधर्म्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानविषयत्वस्वरूपं लिङ्गासाधारणदोषत्वं न सम्भवतीत्याक्षिप्तं मणिकृता, तादृशप्रतिबन्धकतायाऽव युक्तिर्नोक्तेति न्यूनतापरीहाराय तत्र युक्तिमाह दीधितौ स्थाणुत्वाभावस्येति । स्थाणुत्वप्रत्यक्षशाब्दयोरिति । समानधर्म्मितावच्छेदककस्य स्थाणुत्वप्रकारकस्य, लौकिकसन्निकर्षाद्यजन्यप्रत्यक्षस्य शाब्दस्य चेत्यर्थः ।

* चन्द्रकला *

वतिव्याप्तिर्दुर्वारैवेति भावः ।

लिंगज्ञानजन्यज्ञानमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतावदभावप्रतियोगिज्ञानविषयत्वम् लिंगाभासत्वम्, तच्च बाधे सत्प्रतिपक्षे च न सम्भवति, बाधसत्प्रतिपक्षनिश्चयस्य लौकिकसन्निकर्षाद्यजन्यप्रत्यक्षशाब्दादिप्रतिबन्धकतया तदभावस्य तादृशबुद्धिमात्रप्रयोजकत्वेन लिंगजन्यज्ञानमात्रावृत्तिधर्मावच्छिन्ननिरूपितप्रयोजकतायास्तत्र विरहात् इत्याक्षेपस्य मूलोक्तस्य शाब्दादिप्रतिबन्धकतायां युक्तिप्रदर्शनेन प्रामाणिकत्वं कुर्वतां दीधितिकृतां स्थाणुत्वेति ग्रन्थं व्याचष्टे समानेति ।

लौकिकसन्निकर्षादिजन्यप्रत्यक्षस्य बाधसत्प्रतिपक्षनिश्चयाऽप्रतिबध्यत्वादाह लौकिकेति । शाब्दस्य = शाब्दबोधस्य समानधर्मितावच्छेदककस्येतिपूर्वेणान्वयः ।

शाब्दबोधं प्रत्यपि यदि बाधनिश्चयस्य तदभावव्याप्यनिश्चयस्य च प्रतिबन्धकत्वं तदा नरशिरःकपालं शुचि प्राण्यंगत्वादित्यादौ कर्मानधिकारप्रयोजकस्पर्शाभाववत्त्वरू-

❀ दीधितिः ❀

नचैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तत्रानुकूलतर्काभावेन बलवत्त-

❀ गादाधरी ❀

एवम्=शाब्दबुद्धौ बाध-तदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे। नरशिरः कपालमिति। नरशिरःकपालस्य शुचित्वानुमापकेन तद्धर्म्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा चागमजन्याशौचबोधविरोधः स्यादित्यर्थः। स चानुभवविरुद्धः, तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः।

समाधत्ते तत्रेति। तादृशाशौचज्ञानप्राक्काल इत्यर्थः। अनुकूलतर्का-

❀ चन्द्रकला ❀

पशुचित्वव्याप्यप्राण्यङ्गत्ववत् नरशिरःकपालम् इत्याकारकपरामर्शदशायां निरुक्तपरामर्शजन्यतादृशशुचित्वनिश्चयरूपानुमितिदशायां वा तादृशनिश्चयाव्यवहितोत्तरक्षणे सर्वानुभवसिद्धस्य चितिं च चितिकाष्ठञ्च मृतांगञ्चेत्याद्यागमजन्यस्य कर्मानधिकारप्रयोजकस्पर्शाभाववत्त्वाभाववत्त्वरूपाशुचित्वबोधस्य उत्पाद एव न स्यात्, पूर्वमशुचित्वव्याप्यत्वादिनिश्चयस्य शाब्दादिप्रतिबन्धकस्य सत्त्वादितिदीधितिकृतां शंकाशयं प्रदर्शयति एवमित्यादि।

तद्धर्मिकेति। तादृशकपालधर्मिकेत्यर्थकम्। स्वतः=तादृशपरामर्शतः। परामर्शसत्त्वदशायां बाधकान्तरविरहेणावश्यमेव कार्यमुत्पद्यते इत्यत आह फलद्वारा वेति। तादृशपरामर्शजन्यशुचित्वानुमितिद्वारा वेत्यर्थः। स च=आगमजन्याऽशुचित्वबोधश्च।

केवलं नरशिरःकपाले प्राण्यङ्गत्वज्ञानमात्रन्तु नाशुचित्वशाब्दबोधं प्रतिबध्नाति अपितु शुचित्वव्याप्तिविशिष्टप्राण्यङ्गत्वस्य कपालादौ ज्ञानमेव तथा, एवञ्चागमजन्याशुचित्वबोधात् पूर्वं अनुकूलतर्काभावेन बलवत्तरप्रमाणागमस्य सत्त्वेन च प्राण्यङ्गत्वादौ शुचित्वव्याप्तिनिश्चय एव न भवति, व्याप्तिनिश्चयाभावे शुचित्वानुमितेरप्यनुदयेन अशुचित्वबोधात् पूर्वं शुचित्वरूपाशुचित्वाभावव्याप्यनिश्चयस्य तज्जन्यस्य अशुचित्वाभावरूपशुचित्वात्मकबाधनिश्चयस्य चोत्पादाऽसम्भवात् प्रतिबन्धकाभावेनागमजन्यबोधः सम्भवत्येवेत्याह समाधत्ते इति।

तादृशेति आगमजन्येत्यर्थकम्। अनुमितेः पूर्वमेव बलवत्तरागमजन्याशुचित्वबोधस्योत्पत्त्या तेनैव प्रतिबन्धादुत्तरकालं न शुचि-

❀ दीधितिः ❀

रागमविरोधेन च व्याप्तिनिश्चयस्यानुत्पत्तेरिति भावः।

❀ गादाधरी ❀

भावेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेनानुमितेरनुत्पत्तेरिति योजना। एवञ्च वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि, अपि तु व्याप्यत्वरूपेण, अत्र च प्राण्यङ्गत्वस्य ज्ञानेऽपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशङ्कया शौचव्याप्यत्वेन तज्ज्ञानं न सम्भवति, कारणान्तरविरहेण यत्र व्यभिचारशङ्काविरहस्तत्र कथञ्चिद्व्याप्तिग्रहेऽपि गृहीतप्रामाण्यकागमतात्पर्य्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते, तथाच तादृशप्राण्यङ्गत्वज्ञानं न शौचानुमितिजनने शाब्दाशौचज्ञान-

❀ चन्द्रकला ❀

त्वानुमितिरित्याह व्याप्तिनिश्चयस्येत्यादि। येन केनापि = हेतुतावच्छेदकादिरूपेणापि। ज्ञानमेव = निश्चय एव। विरोधि = प्रतिबन्धकम्।

तज्ज्ञानम् = प्राण्यङ्गत्वज्ञानम्। ननु यादृशस्थलविशेषे कस्यचित् व्यभिचारसंशयकारणस्य विरहादेव व्यभिचारशंका नोत्पद्यते तादृशस्थले शुचित्वव्याप्तिनिश्चयस्य तादृशव्याप्तिविशिष्टप्राण्यङ्गत्वनिश्चयजन्यशुचित्वानुमितेश्चोत्पत्त्या तदुत्तरक्षणे आगमजन्याऽशुचित्वबोधो न स्यादित्यत आह कारणान्तरेति। दोषादिघटितेत्यादिः। अनुकूलतर्कस्य साक्षादेव व्याप्तिनिश्चयहेतुत्वमते तद्विरहदशायां व्याप्तिनिश्चयोत्पादो न सम्भवतीत्यतः कथञ्चिदिति। अनुकूलतर्कप्रयोज्यव्यभिचारसंशयाभावस्य व्यभिचारज्ञानाभावस्यैव वा व्याप्तिनिश्चयहेतुत्वे तु व्यभिचारशंकाविरहदशायां भवति व्याप्तिनिश्चय इति भावः।

गृहीतेति। गृहीतप्रामाण्यकागमे यत्तात्पर्यं तद्विषयीभूताशुचित्वबोधविषयविपरीतशुचित्वरूपविषयसाधकत्वेनेत्यर्थः। तत्र = व्याप्तिज्ञाने। अप्रामाण्यम् = अप्रमाणत्वम्।

भावमाह तथाचेति। तादृशप्राण्यङ्गत्वज्ञानम् = शुचित्वव्याप्यप्राण्यङ्गत्ववत् कपालमित्याकारकमप्रामाण्यज्ञानास्कन्दितज्ञानम्। न शुचित्वेति। अप्रामाण्यज्ञानानास्कन्दितस्यैव परामर्शस्यानुमितिहेतुत्वादिति भावः।

शाब्दाऽशौचेति। अशुचित्वबुद्धिं प्रत्यपि अप्रामाण्यज्ञानानास्कन्दितं तदभावव्याप्यवत्तानिश्चयात्मकशुचित्वव्याप्यप्राण्यङ्गत्ववत् नरशिरःकपालमित्याकारकज्ञानं प्रतिबन्धकमित्याशयः।

* गादाधरी *

प्रतिबन्धे वा प्रभवतीति समुदितार्थः। आगमे प्रामाण्यग्रहश्च शिष्टपरिग्रहादिनैव भवति, यावच्च तादृशपरामर्शो नाप्रामाण्यं गृह्यते तावन्न भवत्येवागमप्रवृत्तिरिति भावः।

यद्वेत्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्यवस्थाप्य बाधादेर्लिङ्गासाधारणदोषत्वमेवोपपादितम् मूलकृता, तन्न सङ्गच्छते, बाधितार्थस्य शाब्दबोधाभ्युपगमेऽनुमितेरप्यनपराधात्तत्राप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधितोपपत्तेरित्युक्त कल्पे ग्रन्थकृतोऽ-

* चन्द्रकला *

समुदितार्थः = समुदितग्रन्थतात्पर्यम्। तथाच व्यभिचारसंशयाभावात् व्याप्तिग्रहोत्पादेऽपि तादृशव्याप्तिग्रहस्योक्तयुक्त्याऽप्रामाण्यज्ञानास्कन्दिततया तेन शौचानुमितेरुत्पादस्याशौचशाब्दस्यानुत्पादस्यासम्भवात् भवति शाब्दाशौचबोध इति भावः।

शिष्टेति। तथाचायमागमः प्रमाणम् शिष्टपरिगृहीतत्वात् शिष्टपुरुषीयप्रवृत्तिजनकज्ञानजनकत्वात्, इदमागमजन्यज्ञानम् प्रमा शिष्टप्रवृत्तिजनकत्वादिति वानुमानमित्यभिप्रायः।

ननु कारणान्तरविरहेण तादृशव्याप्तिग्रहे परामर्शे वा यदा अप्रामाण्यग्रहस्यैव नोत्पादस्तदाऽगमजन्याऽशुचित्वबोधो न स्यादित्यत आह यावच्चेति। तथा च तदानीमागमजन्यबोधो न भवत्येव। अतएवोक्तम् तावन्न भवत्येवागमप्रवृत्तिरिति शुचित्वव्याप्यवत्तापरामर्शेऽप्रामाण्यग्रहानुत्पादे तादृशपरामर्शेन तज्जन्यशुचित्वानुमित्यैव वा शाब्दाशौचबोधप्रतिबन्धसम्भवात् कुतः प्रवृत्तिरिति तु समुदिततात्पर्यम्।

बाधनिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य चानुमितिमात्रं प्रत्येव प्रतिबन्धकत्वं न तु प्रत्यक्षशाब्दादिप्रतिबन्धकत्वम्, बाधादिनिश्चयदशायां प्रत्यक्षादेरुत्पादेऽपि न तद्विषयादौ प्रवृत्तिः, बाधनिश्चयादिना उत्पन्नप्रत्यक्षादौ अप्रामाण्यग्रहस्यैव जननात् प्रमाज्ञानस्यैव प्रवृत्तिजनकत्वादिति तु यद्वेत्यादिना मणिकृताभिहितम्, तन्न संगच्छते, उपनयसन्निकर्षजन्यप्रत्यक्षे शाब्दबोधे च बाधादिनिश्चयस्यान्यप्रतिबन्धकतायाः स्वयं वक्ष्यमाणत्वादतो यद्वेत्याद्यभ्युपगममात्रमितिदीधितिग्रन्थस्य यथोक्तमेवावतरणमाह बाधादीति।

बाधादिनिश्चयस्य शाब्दबोधप्रतिबन्धकत्वे युक्तिमप्याह बाधितार्थस्येत्यादि। तत्र = अनुमितौ। ग्रन्थकृतः = मूलकारस्य।

समानेन्द्रियजन्यबाधनिश्चयस्य प्रत्यक्षप्रतिबन्धकतया बाधनिश्चयसामान्यस्य

* चिन्तामणिः *

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे हेत्वाभाससामान्यनिरुक्तिः समाप्ता।

---

* दीधितिः *

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेनान्यथासिद्धत्वात्

* गादाधरी *

निर्भरमाह यद्वेत्यादीति। नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्ष्यतोपपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति।

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्याप्यनुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम्। शाब्दं प्रतीति। तथाच तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः।

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति। अन्यथासिद्धत्वादिति। बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दबोधानुत्पाद-

* चन्द्रकला *

प्रत्यक्षप्रतिबन्धकत्वमसम्भवि, आनुमानिकबाधनिश्चयदशायाम् प्रत्यक्षोत्पादस्यावश्यकत्वादिति बाधादेः अनुमितिमात्रविरोधितया तस्य लिङ्गासाधारणदोषत्वं निर्विवादमिति तु न शंक्यम्, शाब्दं प्रति बाधादेर्विरोधित्वादेव तस्यानुमितिमात्राविरोधित्वात् इति दीधितिकाराशयं प्रदर्शयति तथाचेति।

तावतैव = शाब्दं प्रति बाधादिनिश्चयस्य प्रतिबन्धकत्वादेव। तत्रापि = शाब्दबोधेऽपि। शाब्दबोधानुत्पादेति। बाधादिनिश्चयस्यैव योग्यताज्ञानप्रतिबन्धकत्वादित्याशयः।

❀ दीधितिः ❀

तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ।

---

❀ गादाधरी ❀

निर्व्वाहादिति भावः । तदभावः = बाधादिनिश्चयाभावः, तत्र = शाब्दबुद्धौ । यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणासम्भवात्तत्रैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्व्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ।

---

❀ चन्द्रकला ❀

योग्यतासंशयस्य ग्राह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणाद्यात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रहः । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गाऽसाधारणदोषत्वम् उपनीतप्रत्यक्षं प्रति तस्य प्रतिबन्धकत्वादित्यादिदीधितिं व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम्, अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य-श्रीमत्स्वामिजयरामदासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध-सिन्धुमहानदान्तर्वर्त्ति - श्रीसाधुवेलातीर्थाधीशपदवाक्यप्रमाणपारावारीण-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्ति-चन्द्रकला टीका समाप्ता ।



